# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




३० वर्षे
३-४ अङ्कौ

मार्गशीर्षफाल्गुनपूर्णिमे, वै० सं० २०३२
मार्च, १९७६ ई०

पञ्जीकरणसंख्या—६६८१।५७

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्‌बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति ।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते । तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये ।

७. 'कुलसचिव, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ०प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम् ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२२१००२ (उ० प्र०) इति सङ्केतेन विधेयः ।



प्रकाशकः—सञ्चालकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी-२२१००२ (उ० प्र०) ।
मुद्रकः—तारा प्रिंटिंगवर्क्स, कमच्छा, वाराणसी ।

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


प्रधानसम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

सह-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**






३० वर्षे
३-४ अङ्कौ

वार्षिकमूल्यम् १० रूप्यकाणि
संयुक्ताङ्कयोः ६ रूप्यकाणि

# विषयानुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ३० वर्षः | मार्गशीर्षफाल्गुनपूर्णिमे, वि० सं० २०३२ | ३-४ अङ्कौ |
|---|---|---|

# आत्मदर्शनम्[1]

पं० श्रीकेदारनाथ ओझाः

सम्मानितप्राध्यापकः, सं० सं० वि० विद्यालयः

ईशः प्रसीदतु नु मानवतां ददातु स्वार्थादिदोषशमनं समतां दधातु ।
लोभप्रमादमदमर्दनमातनोतु धैर्यक्षमाशमदमादिगणं करोतु ॥१॥

न्यायाम्भोजनिभानना श्रुतिशिरो हस्ते दधाना नवा
प्राचीनाऽपि समन्वयामृतरसौ पीनस्तनौ बिभ्रती ।
नैरात्म्यस्य निरासिनी मतिमतां मोदाय सद्भासिनी
प्राचार्यस्य सरस्वती विजयते शास्त्रार्थहंसाश्रया ॥२॥

अध्ययनप्रियस्य जिज्ञासाविष्टस्य आपाततः 'आत्मा वाऽरे द्रष्टव्यः, श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यः' इत्यादय उपनिषदामात्मदर्शनवाचः समुपतिष्ठन्ते । 'अरे' इति सम्बोधनबलेन 'श्रोतव्यः' इत्यादिदर्शनोपायप्रदर्शनेन च व्युत्पन्नो ग्रन्थस्यात्मदर्शने महतीमास्थामवदधाति, आत्मदर्शनमवश्यमधिकारिणः समीहितसाधनमिति निश्चिनुते च । ततः परमात्मानमात्मीयञ्च परिचेतुं चेष्टते, पश्यति चात्मनो विस्तारम् । यथा ब्रह्मसूत्रशारीरकभाष्ये—'पुत्रकलत्रादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति श्रीशङ्करभगवतो वचः । यथाबुद्धि वाराणसेयः, उत्तरप्रदेशीयो भारतीयो वा अहमात्मानमात्मीयं वा अभिमनुते । अन्तर्दृष्टिः प्रयाससाध्या नोदेति, 'पराञ्चिखानि व्यतृणत् स्वयंभू' इत्यादिरीत्या स्वभावत इन्द्रियाणि बहिर्मुखानि बहिरर्थान् अवलोकयन्ति । तत्रैव च असक्ता भवन्ति ।

यथा चार्वाकाः—अर्जितव्यम्, भोक्तव्यम्, शरीरं शरीरसम्बन्धीनि च यावन्ति रक्षणीयानि, अनुरञ्जनीयानि च, 'आत्मा वै जायते पुत्रः' इत्यादिरीत्या पुत्रादिसन्ताना उत्तरजन्मनि गृहस्य कुटुम्बस्य समाजस्य राष्ट्रस्य च नीतय इह जन्मनि स्वसुखाय । परजन्मनि च सन्तानसमृद्धये सर्वथाऽनुष्ठेयाः, पारिवारिक-सामाजिक-राजकीय-दण्डभिया चानीतयोऽनाचरणीयाः । सांसारिकादरसन्मानादिप्राप्तये दया, औदार्यञ्च यथाशक्यमादातुं प्रयतनीयम्, स्वकर्मकौशलाय मनसोऽवधानता-

१. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याष्टादश (१८) दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझा-प्रवचनमालायां काशीस्थेन विदुषा पं० श्रीकेदारनाथ-ओझामहोदयेन प्रदत्तमिदं विशिष्टव्याख्यानम्—सं० ।

दयोऽध्यात्मसम्पदोऽपि आत्मनि निधेयाः, उत्तमतामर्जयितुं धृतिक्षमादिमानवगुणा अप्यावश्यका एव। प्रत्यक्षं प्रत्यक्षमूलकञ्च सर्वं प्रमाणम्।

ये च प्रत्यक्षमेव चार्वाकस्य प्रमाणम्, नानुमानादीनि इति सङ्गिरन्ते, ते न अन्वेषणशीलाः, तत्त्वसङ्ग्रहकमलशीलटीकायां चार्वाकसाम्प्रदायिकस्यैकस्य नामग्राहमनुमानमपि प्रमाणमुपलभ्यते। विनाऽनुमानादिकं कथं व्यवहारो निर्वहेत्? कथं स्याद् दार्शनिको यो व्यवहारमपि न साधयेत्। तस्मान्न कश्चिद् विलक्षणो मानवश्चार्वाको नाम, किन्तु अस्मास्वेव शते पञ्चनवतिर्नवतिर्वा चार्वाकाः। न्यायभाष्ये 'अन्वीक्षा'शब्दनिर्वचनावसरे प्रत्यक्षागमाभ्यामीक्षितस्य अनु-ईक्षणम्-अन्वीक्षाम् अवोचत्। चार्वाकस्य कृते तु प्रत्यक्षेणेक्षितस्य अनु-ईक्षणम्-अन्वीक्षा। एतावानेव विशेषः, आगमप्रणयिनः प्रामाण्यसंशये साक्षात् परम्परया वा प्रत्यक्षागमौ मूले अन्विष्य निश्चिन्वन्ति। अनुमितिजनकव्याप्तिग्रहे प्रत्यक्षमूलकम्, आगममूलकञ्च तर्कमुपस्थापयेयुः। चार्वाकश्च साक्षात् परम्परया वा प्रत्यक्षं मूलं प्रत्यक्षमूलकं तर्कं वोपस्थापयेयुः। तथा च दार्शनिकविचारप्रारम्भे प्रथमं बहिर्दृष्टौ चार्वाक उदेति।

**कर्ममीमांसा**

एवमेवान्तर्दृष्टिविहीना बहिरर्थदृष्टय आस्तिका वैदिकाः कर्मभ्यः कुशलं कामयमानाः स्वर्गं नरकञ्च श्रद्दधतो जीवस्य जन्मान्तरं लोकान्तरञ्च स्वीकुर्वन्तो ग्रामपशुप्रभृतिफलकान् यागान् विधातुं वेदस्य कर्मकाण्डभागानेव व्याचख्युः, ज्ञानकाण्डञ्च परितत्यजुः, कर्मकाण्डशेषतां वा निन्युः।

**निवृत्तिमार्गस्योपक्रमः**

बहिर्दृष्टौ बहवो दोषा अवाभासन्त, परदोषानेव पश्यन्ति, स्वदोषान् नानुसन्दधते। परमपराधिनं मन्यमाना भृशं कलहायन्ते, येन संहतिर्न भवति, पारिवारिकम्, ग्रामीणम्, जनपदीयम्, सामाजिकं वा सङ्घटनं न जायते। आत्मदर्शने च मयि के के दोषाः, परो मामपेक्ष्य दोषेषु समानो न्यूनोऽधिको वेति विचिकित्सा जायते। समो मित्रं न्यूनदोषो महान् आदरणीयः, कश्चिदेवाधिकदोषभाक् शत्रुरुपेक्षणीयो वा भवेत्।

**भोगेषु समानता कलहः**

समे भोगलिप्सवो भोगेषु समानतामभिवाञ्छन्ति, विद्यावयोऽनुभवः, श्रमः, सहनशक्तिः, शीतोष्णसहिष्णुताप्रभृतयो गुणा परेषु कीदृशाः कियन्तश्च? ममापेक्षया अधिका न्यूनाः समा वा इत्यविचार्यैव समादरं समीहन्ते। ततः कलहोऽशान्तिश्च जागर्ति। आत्मात्मीयविवेकदृष्टौ तु भूयसा एते कलहा शाम्येयुः।

परस्य कीदृशेनाचारेण मम दुःखम्? तादृशेन ममाचारेण परस्यापि दुःखं स्यात्। यथाहं दुःखदायिनं द्वेष्मि, तथा परोऽपि दुःखदायिनं विद्विष्यात्। अतः परस्य क्लेशकरं कर्म न करणीयमिति, समाजतत्त्वबिन्दुः क्षुभ्यति, समाजो नश्यति, स्वपरदोषगुणविवेचनहानादानादि विना कथं राष्ट्रं सङ्घटितं सुरक्षितं वा भवेत्?

यथाऽधुनोत्कोचादिभ्रष्टाचारस्य भूयान् कोलाहलः। सभायामुत्कोचविरोधं भाषन्ते, परं स्वयमाचरन्ति, न केचन वेतनेन तुष्यन्ति। अनुचितरीत्यापि उपरित आयं विदधति,

बहुधनमर्जयन्तोऽपि रात्रिदिवं धनार्जनेव्यग्राः। गतस्य दशानामपि वर्षाणां स्वजीवनस्य क्रमिकानुसन्धानेऽसमर्थाः, क्षणभङ्गुरं तस्य जीवनं कल्पस्थायि प्रतिभाति, भोगं भोगसामग्रीञ्च नित्यां मनुते, चञ्चलामपि अचलां पश्यति।

अन्तर्दृष्टौ तु सद्विचाराः समीचीनतर्काश्चावभासेरन्। अनुचितलाभेषु अधिका हानिः स्फुरेत्, एकान्तभोगः शक्तिक्षयकरोऽङ्गीक्रियेत, शास्त्रश्रद्धाद्वारेण 'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्' इति त्यागपूर्वको भोगः समाद्रियेत। धृतिः क्षमेत्यादिमानवगुणाः कायिकवाचिकमानसिकशक्तयो व्यक्तेः समाजस्य राष्ट्रस्य च हितकरा उत्पादनवृद्धिकरा इत्यादि सिध्येरन्। अत एव भगवती उपनिषद् आत्मदर्शने बलं ददाति। दृष्टैरुपायैर्न दुःखत्रयस्य एकान्तात्यन्ततो निवारणम्। वैदिककर्मानुष्ठानमपि अविशुद्धिक्षयातिशययोगि प्रायस्तथैवेति लौकिकैर्वैदिकैश्च एभिरुपायैरपरितुष्यन्तोऽध्ययनेऽन्वेषणे च प्रवृत्ताः—

**कर्मभिर्मृत्युम् ऋषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।**
**अथापरे मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः॥**

इत्यादिश्रुतिषु आस्थां दधुः।

**द्वितीया भूमिः**

ऋषयो द्रष्टारोऽपि बहिरेव नान्तरात्मानः प्रजासृष्टिः समेधयन्तस्तेषामुपयोगाय द्रव्यार्थं चेष्टमाना जराजन्ममरणपरम्परां निषेदुः। अथ तेष्वेव केचनापरे मननशीलाः कर्मफलेभ्योऽनित्येभ्यः परं नित्यममृतत्वं मोक्षसुखं प्रापुः। सत्यं बहिर्मुखानीन्द्रियाणि परं बहिर्वस्तुषु दोषदर्शनेन वैराग्यात् मनोऽधीनानीन्द्रियाणि कर्तव्यानि, मनश्च आत्मनि अवस्थापयेत् प्रत्यक्षामेति मार्गः प्राचीकटत्। अन्तर्दृष्टावपि काठिन्यं परिससार। अन्तःशरीराभ्यन्तरे आत्माऽऽत्मज्ञानं वा प्रकाशः, अर्थश्च बहिर्विदूरे प्रकाशमाप्नोति। कथमनयोर्विदूरस्थयोः सम्बन्धः, येन प्रकाश्यप्रकाशभाव आयात्। विदेशीयदर्शनेष्वियं समस्या कतिपयदर्शनोत्थानस्य बीजं भवति। यद्यपि कतिपये तत्र बाह्यादाभ्यन्तरस्य समुत्थानम्, अपरे आन्तराद् बाह्यस्य सृष्टिरित्यपि वदन्ति, तथाप्यान्तर्बाह्ययोः सम्बन्धसमस्या महती दर्शिता।

भारतीयदर्शनेषु दर्शनोत्थापकतया नेयं समस्योट्टङ्किता, परम् अद्वैतसिद्धौ ज्ञानविषययोः दर्शनान्तरीयान् कतिपयसम्बन्धान् खण्डयित्वा आध्यासिकसम्बन्धो निर्णीतः, तेन प्रतिभाति भारतीयदर्शनानामपि परस्परं सिद्धान्तभेदस्येयं समस्या मन्थराचेष्टामगृह्णात्। अत्र तु आत्मनो विभुत्वाङ्गीकारेण सर्वत्र विषयसम्बन्धेन समाहिता भवति। जीवस्य अणुत्ववादिनोऽपि ज्ञानगुणस्य महिमानं व्यापिनमङ्गीकुर्वत एव। एवमपि सर्वत्र आत्मप्रकाशस्य प्रकाश्यस्य च सत्वाद् जले दुग्धमिव मिश्रणं सञ्जातं विविक्तस्वरूपं दुःखग्राह्यं सम्पन्नम्। तेन च वैदिकस्य वेदान्तमतस्य द्वारमुद्घाटितम्, विषया हि व्यवहारमन्तरा असत्प्रायाः। ज्ञानं विना नावतारो विषयाणां व्यवहारे। ज्ञानादतिरिक्ता विषया निरूप्यमाणा नावतिष्ठन्ते। तेन प्रकाशात्मनि ज्ञानेऽध्यस्ता विषया रज्जुम्यः सर्प इव न ज्ञानाद्भिन्ना मिथ्या अवभासमानशरीरा इति। 'आत्मैवेदं सर्वम्' इत्यादयः श्रुतयोऽत्र मार्गदर्शिका जायन्ते। आत्मैव एकः सन् अन्ये च प्रतीयमानाः सर्वे आत्मनैव सन्तः, न आत्मसत्तातिरिक्तसत्ताशालिन इति तस्यार्थः।

विशिष्टाद्वैतिनः **'समेषामात्मभूतस्य परमात्मनः शरीरमिदं सर्वम्'** इत्यादिरीत्या शरीरशरीरिभावेन व्याचक्षत, अभेदव्यवहारस्य शरीरशरीरिणोऽव्याहतत्वात्। अविभागवादी विज्ञान-

भिक्षुर्विज्ञानामृतभाष्यरीत्या प्रलयदशायां प्रकृतिजीवौ ईश्वरेऽपि भागेन वर्तेते इति वदन् आत्माविभक्तम्, आत्मरूपं वा जगत् सर्वमिति मन्येत। मायामनभ्युपगच्छन् परमात्मनो जगदुपादानत्वञ्च स्वीकुर्वन् यादवादिरपि सर्वमात्मरूपमिति स्वीकुर्यादेव। 'कुण्डलं सुवर्णम्' इत्यादिरिवाधिभौतिकजगद्रूपेण परिणतोऽपि परमात्मा अविकार्येवेति साधयन् शुद्धाद्वैती परमात्मस्वरूपं जगन्मनुत एव। जडचेतनयोः प्रकृतिपुरुषयोर्वा सर्वत्र व्यापनाद् मिश्रणे दुग्धं जलमितिवत् सर्वमिदमात्मा, एषु सर्वत्र आत्मेति वा साङ्ख्यन्यायौ प्रायो व्याख्यास्यतः।

**योगाचारः**

अवैदिको योगाचारस्तु "आत्मैवेदं सर्वम्" इत्यादिश्रुतिवाक्यं स्वानुकूलं मेने, अनुससार व्याचख्यौ च। आन्तरा नानाविधानां विज्ञानादीनां क्षणिकानां सन्ततयः प्रवहन्ति। त एव विज्ञानादय आत्मा, तद्रूपमेव जगत्सर्वम्। आन्तरमेव बहिर्वदवभासते, विज्ञानमेव प्रकाशः, न प्रकाशातिरिक्तं प्रकाश्यम्। बाह्याकारविशेषोऽपि अवभासमानान्तरस्यैव विज्ञानस्य, विशेषाकाराकारितानि विज्ञानानि प्राक्तनस्वकारणमहिम्ना जायन्ते। एवं पूर्वपूर्ववर्तिकारणापेक्षायां बीजाङ्कुरवदनादिरयं प्रवाहो विशेषाकाराणां विज्ञानानाम्।

**तृतीया भूमिः**

अतः परं विवेचयतां जिज्ञासूनां पुरतः 'अगन्धरसम्, अस्थूलम्, अनणु' प्रभृतयः श्रुतयो विवेचनीया अभवन्। ये च पूर्वोक्ताः प्रकाशातिरिक्तं प्रकाश्यमनङ्गीकुर्वाणास्ते तु प्रकाशातिरिक्तानां गन्धरसादीनां प्रकाशमानानामप्यभावं पारमार्थिकं निरूपयन्त्य इमाः श्रुतयस्तेषां मिथ्यात्वमभिप्रयन्तीति मेनिरे।

योगाचारस्तु प्रकाशमानानां गन्धरसादीनामभावमभिधत्ते। श्रुतिस्तन्नूनं बाह्यानामभावं वक्ति, प्रतीतयस्तु स्वकारणायातविशेषाकाराकारिता इति स्वमतेन योजयति। ये च वैदिका द्वैतवादिनः प्रकाश्यवस्तुनो मिथ्यात्वं ज्ञानाकारतां वा नाङ्गीकुर्वन्ति, तेषां कृतेऽपि इमाः श्रुतयोऽनुकूला द्वैतप्रतिपादिका भवन्ति। यथा साङ्ख्यस्य प्रकाशः पुरुषचैतन्यं प्रकाश्यप्रकृतिप्राकृतिकवस्तुविषयेभ्यो भिन्नं गन्धरसादिभिन्नं गन्धरसादिज्ञानम्, एवं न्यायोऽपि आत्मानम्, आत्मगुणं ज्ञानञ्च भूतभौतिकविषयेभ्यो भिन्नम्, प्रकाशातिरिक्तसत्तावन्तश्च प्रकाश्या विषया इति च साधयति। विशिष्टाद्वैतोऽपि भिन्नसत्तां स्वीकृत्य क्वाचित्कमभेदव्यवहारं शरीरशारीरिभावेन निर्वाहयति।

ततः परम् 'असदेवेदमग्र आसीत्' इत्यादौ विचारकाणां जिज्ञासूनां दृष्टिपातो जातः। वेदान्तिनः—असतां शशशृङ्गादीनां ज्ञानं न भवति। अतो दृश्यमानं जगद् असद्भिन्नं परमार्थदशायां बाधितत्वाच्च सद्भिन्नमनिर्वचनीयम्। व्यवहारदशायां सदेवावभासते। तेन तस्य पूर्वावस्थाऽपि सर्वथाऽसद्रूपा न सम्भवेत्। अतः 'कथमसतः सज्जायत' इति श्रुतिरपि प्रतिवदति। तेन अनिर्वचनीयं नामरूपाभ्याम्, अव्याकृतं वा असच्छब्दार्थं व्याचक्षते।

योगाचारभूमिकायामेव वर्तमानाः कतिपयेऽनया असन्मूलविचारधारया शून्यवादे नैरात्म्यवादे च अवतेरुः। योगाचारभूमिकायां ज्ञानं विना व्यवहारमलभमाना बाह्या ज्ञाननिरूपणाधीननिरूप्यत्वात्, ज्ञानभिन्नत्वेनानिरूप्यत्वाच्च विषया असन्तोऽवभासन्ते। यथा तथा विषयावभासं विना ज्ञानस्यापि अनिरूपणात्, ज्ञानानां निर्विषयत्वे मानाभावात्, विषयाकार-

निरूपणाधीनाकारत्वाच्च, असन्ति एव विज्ञानान्यपि संवृत्तिसत्त्वाच्च बाह्यमिवाभ्यन्तरं व्यवहारसाधकं न सर्वथाऽबाध्यं परमार्थसत् किमपीति निश्चिक्युः ।

यदा आन्तराणि ज्ञानसुखादीन्येव सन्तानीनि असन्ति, तदा तेषां गुणत्वकल्पनया तदाधारभूतः स्थिर आत्मेति नैयायिकानां कल्पना निरालम्बनेति नैरात्म्यवादं दृढमकुर्वन् । अन्ये वैदिका व्याख्यातारः कथमसतः सज्जायेतेत्यादिना श्रुतिरेवासन्मूलवादं निराकरोतीति नात्र आतस्थिरे । एवैव केचनाग्रे इदं दृश्यं स्थूलं जगद् असदप्रत्यक्षम् अस्थूलं सूक्ष्मं कारणात्मनैवासीत् । सर्वथाऽभावं तु कथमसतः सज्जायेतेत्येव निषेधति । अतः सद्रूपं कारणमपि कल्पयन्ति । कारणमपि चैतन्यमात्रम्, न ततो जडस्य जगत उत्पत्तेरनुपपत्तेः । तादृशमपि कारणं कार्यसजातीयं कार्याणां सूक्ष्मावस्थापन्नं परिणामिप्रधानं प्रकृत्यादिशब्दवाच्यमिति साङ्ख्ययोगौ । नैयायिकास्त्विदं दृश्यं जगत् सद् अविद्यमानम्, अस्य प्रागभावे इति यावत् । असतः कारणाद् अभावात् सतां कार्याणामुत्पत्तेः श्रुत्यैव निषेधात् । सन्ति नित्यानि कारणानि द्रव्याणि सृष्टेः प्रागपि आसन् ।

ततः परमाणुवाद उदतिष्ठत् । उत्पत्तेः प्राक् कार्यमसदिति असत्कार्यवादोऽपि तेषां सूचितः । परिणामित्वस्वीकारे कार्याणां सूक्ष्मरूपेण कारणेऽवस्थानापत्त्या मुक्तानामपि आत्मा शुद्धो भवेत् । आत्मधर्माणां सुखादीनां सूक्ष्मरूपेणावस्थानापत्तेः । कार्यं विनाऽपि कारणानामवस्थानात् कार्यकारणयोरभेदासम्भवात् तयोर्भेदवादोऽपि तेषाम् । अन्यथा सुखदुःखादीनामात्मकार्याणामुत्पादविनाशाभ्यामात्मनः परिवर्तनापत्तेः । तथा च शुद्धात्मस्वरूपाणामवधारण एषां सिद्धान्तानां समुपयोगः । एवं गुणगुणिभेदवादस्यापि । अन्यथा गुणानां परिवर्तने गुणिन आत्मनोऽपि परिवर्तने तस्य विकारित्वं स्यात्, गुणगुणिभेदवादे त्वत्यन्तभिन्नानां गुणानां परिवर्तनेऽपि गुणिन आत्मनः किमपि न विकुरुते । सर्वदाऽऽत्मा निर्विकारस्तिष्ठति । गुणगुणिनोः कार्यकारणयोश्चाभेदवादादेव चेतनस्य पुरुषस्याकारणत्वं निर्गुणत्वञ्च साङ्ख्ययोगयोर्गले पतितम्, तथैव वेदान्तेऽपि ।

चेतनस्य कारणत्वमपि वेदान्तिनां न शुद्धस्य साङ्ख्यवद्विकारित्वापत्तेः, अपि तु मायासंवलितस्यैव । चेतनभिन्नस्य मिथ्यात्वदृष्ट्या च वेदान्ती मायाबलमादातुं प्रभवति । साङ्ख्यादयस्तु सर्वम् अनन्तञ्च सदिति वादिनो जगतो मिथ्यात्वमपसारयन्तः कथं मायास्पर्शं सहेरन् ? एवं वैदिका व्याख्याभेदेन श्रुतीः समनुगमयन्तः स्वस्वप्रक्रियाभेदैरात्मानञ्च विकारात् परिवर्तनाच्च रक्षन्तः स्वस्वदर्शने पूर्णं मुक्तिमार्गं निर्मलं कुर्वन्ति । एवञ्चोपनिषदो व्याख्याभेदेन वैदिकदर्शनानां परस्परं भेदः समागतः, बुद्धीनां भेदाच्च व्याख्याभेदः । समेषां वैदिकदर्शनानामुपनिषदां गीतायाश्च तत्तद्दर्शनानुसारं पाठनपद्धतौ पुस्तकरूपेण वा व्याख्यानं चिरं प्रचलितमासीत् । तदधुना विच्छिन्नम्, साम्प्रदायिकसम्पदा वेदान्तस्यैवेदानीमुपलभ्यते । ब्रह्मसूत्राणामपि नैकानि द्वैतपराणि व्याख्यानानि सम्प्रदायसम्पदैव विराजन्ते । शारीरकभाष्ये उपनिषन्मूलकसाङ्ख्यानुसारिपूर्वपक्षं पठतां विदुषां बलाद् मनसि आयास्यति यत् साङ्ख्यस्योपनिषद् व्याख्यानं पुस्तकरूपेण पाठनपद्धतौ वाऽवश्यं रूढमासीत् ।

**आधुनिको भारतीयदर्शनोपरि आक्षेपः**

अधुना आङ्लभाषाद्वारा भारतीयशिक्षितानां विश्वस्य विद्याभिर्विद्वद्भिश्च भूयान् सम्पर्कः । अधिविशति च भारते विदेशीयशैलीशिक्षितानां विदुषां परिषद् दर्शनपरिषद् वा ।

विदेशीयानि च दर्शनानि समाजवाद-साम्यवादप्रभृतिनीति समर्थनविमर्दनोद्देशेनाविर्भूतानि, तथैव व्याख्यायन्ते, प्रचलन्ति च। भारतीयानि च दर्शनानि मोक्षोद्देशेन प्रवृत्तानि, उद्योगमार्गकण्टकभूतानि, ऐहिकपरिस्थितावनुपयुक्तानि, वैयक्तिकफलसाधनान्यपि अनुदाराणि समाजस्य राष्ट्रस्य वा अकिञ्चित्कराणि—इत्यादिः।

अत्र विषयेऽन्यत्रालिखम्। इदानीं तु संक्षिप्ततरं किञ्चिदुक्त्वा त्यक्ष्यामि। ओदनार्थी तण्डुलानां कृते व्रीहिमुत्पादयति। तत्र पशूनां कृते पलालम्, अग्निसंधुक्षणाय तुषाश्च भवन्ति। तथैव मुमुक्षवः शरीरयात्रानिर्वाहाय तत्त्वज्ञानस्याभिव्यक्तये संरक्षणाय च यद्यत्समीहन्ते सम्पादयन्ति च तत्तत्सर्वम् ऐहिकसमृद्धये समाजस्य राष्ट्रस्य च हितायैव भवति, न किञ्चिदनिष्टं जनयति। यथा शिक्षितः सभ्यः समृद्धः सुखीसमाजः तदनुकूलं स्वतन्त्रं सक्षमं सद्भिर्मानवैर्नागरिकैः संरक्षितं राष्ट्रं शिक्षासाधनसामग्री, भिक्षासौविध्यम्—इत्यादिकं समेषां भोगार्थिनामप्यपेक्षितम्।दर्शनाधिकारिषु चत्वारो गुणा अपेक्ष्यन्ते—

( १ ) **इहामुत्र फलभोगविरागः**—ऐहिकेभ्यः पारलौकिकेभ्यश्च भोगेभ्यो विरागो मुमुक्षूणामपेक्षितः, न भोगार्थिनाम्, किन्तु प्रागुपवर्णितत्यागपूर्वकः समानो भोग ऐहिकसुखार्थिनां चार्वाकाणामप्यावश्यकः। भोगलम्पटास्तु शरीरेन्द्रियाण्यपि रक्षितुमसमर्था जीवनविहीनाः कथं सुखार्थनां सफलेयुः ? एकान्तभोगः सर्वविनाशकर इति न शास्त्रस्यैवाज्ञा, अपि तु कार्यकारणशैलीसमायातो लौकिकः पदार्थः।

( २ ) **नित्यानित्यवस्तुविवेकः**—मोक्षार्थिनाम्, भोगार्थिनामपि क्षुद्रलाभमर्थलाभयोः, आशुविनाशिचिरस्थायिनोश्च विवेको नोपेक्षणीयः।

( ३ ) **शमदमादिसाधनसम्पत्**—यथा मुमुक्षूणाम्, तथा बुभुक्षूणामपि। आन्तरस्य मनसो बाह्येन्द्रियाणाञ्च शमनं विषयप्रवणतां लक्ष्यगोचरताञ्च विना के भवन्ति कवयो विद्वांसो मलयोद्धारो विज्ञानस्य आविष्कारका उन्नायका वा ? तितिक्षां विना पारिवारिकं जीवनमपि दुर्लभम्, क्व समाजस्य राष्ट्रस्य वा स्थानम् ? "**न तितिक्षा सममस्ति साधनम्**" इति लौकिकं नीतिवचनं न मोक्षशास्त्रम्। धृतिक्षमादमोऽस्तेयमित्यादिमानवधर्मान् विना यदि मानवाः, पशवश्च के ? केषां समाजो राष्ट्रं वा ? "**नैनं छिन्दन्ति शस्त्राणि**" इत्यादिगीतावचांसि नित्यनिर्विकारशुद्धात्मवर्णनपराणि शत्रुसैन्यानां शिरांसि शाकमूलकादिवत् कर्तयितुम्, अर्जुनस्य अकर्मण्यताविषादं विनाशयितुं चोपक्रान्तानि। जीवनधर्मणस्तु, युद्धे सर्वस्वं नश्यति। अमरणधर्मणस्तु किं हीयते युद्धेन ? येन न प्रवर्तेत ? जीवनसंरक्षणमात्रतत्परा हि भीताः 'श्रमकर्मभ्यो विदूरे' स्थिता जगद्भारभूताः किं करिष्यन्ति समाजस्य राष्ट्रस्य वा ? अबिभ्यतः करतले प्राणान् धृत्वा परिस्थितिभ्यो युध्यन्तो वीराः 'परानपि' रक्षन्ति स्वयञ्च सुरक्षिता जायन्ते। अस्त्वेतावदेवाग्रे विवेचनीयम्।

एवं मननशीलाः श्रुतिपरिशीलिनः "**अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः**" श्रुतौ आस्थां चक्रुः। आत्मोपासनाञ्च मुक्तौ प्रधानं कारणमिति निरणैषुश्च। ततश्च शुद्धात्मोपासनापरायणा वैदिका दृढा जाताः, अवैदिकाश्च तत एव श्रुतिभ्यो विरज्य आत्मबहिर्मुखाः **'सर्वं दुःखं सर्वं क्षणिकम्'** इति भावनापरा वैराग्यमेव मोक्षोपायमगत्या गणयामासुः।

एतावता नास्तिकानामपि दर्शनानामुत्थानमुपनिषद्वाक्येभ्यो ब्रुवाणो नाहं विद्वेषणीयो विदुषाम् । उदयनाचार्यन्यायवचसा दर्शनानां भूमिका वर्णने प्रवृत्तत्वात् । स च चिरन्तनः । आधुनिकोऽपि महाविद्वान् भूतपूर्वराष्ट्रपतिः श्रीराधाकृष्णन्महोदयो बौद्धदर्शनानामुद्गम उपनिषद्भ्य इति लिखति । आर्हतानां गणधरवादे समागतानां सिद्धान्ते वेदविरोधं दर्शयतां महावीरस्वामी वेदमन्त्राणां समन्वयं करोतीत्यायाति ।

**चतुर्थी भूमिका**

एवम् आत्मोपासनायां दृढा वैदिकाः 'प्रकृतेः परस्तात्' इत्यादिश्रुतिसहायेन विवेकाय प्रस्तुताः । तत्र साङ्ख्याः 'सदेव सोम्येदमग्र आसीत्' सच्छब्दार्थं जडं चेतनमुभयरूपं वेति व्यचिन्तयन् । 'सच्च त्यच्चेत्यादि'श्रुत्यनुसारं जडचेतनात्मकजगतः समुद्भवः सतोऽभिप्रेयते ? भारतीयविदुषां परम्पराऽपि प्रतिभाति जडचेतनात्मके सच्छब्दार्थे । यथा कुमारसम्भवे श्रीकालिदासः—

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥
नमस्त्रिमूर्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे ॥

वैदिका द्वैतिनो भेदनित्यत्ववादिनो भेदस्योत्पादविनाशौ नाङ्गीकुर्युः । जडचेतनौ सृष्टेः प्रागपि भिन्नावेव । परं भेदावभासो न भवति । विवेकार्थं सृष्टिरित्यपि सिद्धान्तः । अव्यक्तस्य प्रधानस्य व्यक्तावस्थायां स्थूलस्य प्रकाश्यप्रकाशात्मना परिणामविकारविरहितात्मना वा विवेको जायते । संसारदशायां प्रकृतिपरिणामस्य बुद्धेः प्रकाशचेतनस्य च पुरुषस्य "तदा द्रष्टुः स्वरूपेऽवस्थानम्" इत्यादियोगप्रक्रियाभिश्च विवेको जायते । सच्छब्देन केवलस्य चेतनस्य ग्रहणे ततश्च सृष्टिस्वीकारे तस्य कारणत्वपरिणामित्वादिप्रसक्त्या पश्चात्तनं विवेकगृहीतं शुद्धस्वरूपं विरुध्यते । अतोऽभिव्यक्तेः प्रागपि पुरुषचेतनसन्निधानमात्रेण विविधपरिणामशालिनी प्रकृतिश्चेतनालिङ्गिता तच्छब्दार्थः ।

वेदान्ते तु अघटितघटनापटीयस्या विविधशक्तिशालिन्या शक्तिरूपया मायया संवलितं चेतनं सच्छब्दार्थः, सृष्टिदशायां स्थूलतां गतायां मायायां ब्रह्मणश्च व्यावहारिकं रूपमपि 'अस्ति' 'भाति' 'प्रियं रूपम्' इत्यादिना विविच्यते । शक्तिशक्तिमतोश्चाभेदाच्छक्तेरतिरिक्तसत्ताया अस्वीकारान्न सदनेकत्वापत्तिः, साङ्ख्ये तु सदनेकसमिष्यत एव ।

न्यायनयेऽपि नानासत्, नित्यानि द्रव्याणि परमात्मा जीवात्मनः, अदृष्टानि च सृष्टेः प्राग्वर्तन्ते । कार्यकारणयोरभेदस्य यथा लौकिको व्यवहारो भाक्तः, तथा वैदिकोऽपि । जगतः सत एव । कारणात् समुद्भवः, न त्वभावाद् इत्येवास्याः श्रुतेः प्रतिपादनम् ।

प्रकृतिभ्यो नित्यद्रव्येभ्यश्च विवेकः परमात्मनो जीवात्मनश्च । कस्यामपि अवस्थायामसतो विधेयतया निषेधतया च व्यवहारज्ञानविषयत्वं नास्तीत्यादिसिद्धान्तोऽपि निस्सरति । अनेकेषामपि सतां सत्त्वेनैकवचनव्यवहारयोग्यता जागर्ति । सन्तु नाम अनेके परं शुद्धात्मोपासनामुक्तिविधायिनीत्येवापेक्ष्यते ।

**शक्तिसत्त्वसमुत्थानञ्च**

कार्यस्य जगतो वैचित्र्यं नानाविधनानाकारणकलापाद् न्यायनये समुपपद्यते, वेदान्ते विविधस्वभावया मायया, साङ्ख्ये त्रिगुणात्मकप्रकृत्या सिद्धयति । एवमेव अन्यान्यपि दर्शनानि जातानि, यत्र एकस्मात् सतो जगत्सृष्टिः, वैचित्र्यञ्च एकस्मिन् मूलकारणे विचित्रशक्तिस्वीकारादुपपाद्यते । यथा शैवदर्शनेषु एकः शिवो मूलकारणम्, तस्य निर्विकारत्वं जगद् वैचित्र्यञ्च विलक्षणशक्तिस्वीकारादुपपाद्यते, शक्तिशक्तिमतोरभेदाच्च एकवचनश्रुतिः ।

ततः 'नान्यत् सत्' इत्यादिश्रुतिं विवेचयन्ति । नैयायिकाः परिणामस्य सत्कार्यवादस्य च निषेधे श्रुतिमिमामभिसिञ्चन्ति । परिणामस्य सत्कार्यवाद आधारः । उत्पत्तेः प्राङ् नाशाच्चानन्तरं कारणात्मना सूक्ष्मरूपेण कार्यस्य सत्ता तयोर्जीवातुः । तेन च सर्वदा येन केनापि रूपेण ज्ञानसुखादीनामात्मनि विद्यमानतया शुद्धस्यात्मनः स्वरूपं न सिध्येत् । व्यक्तस्वरूपात् कार्यादन्यद् भिन्नं तिरोहितमनभिव्यक्तञ्च न सत्, किन्त्वभावः । तथा च कार्यविनाशानन्तरं कार्यध्वंसः, उत्पत्तेः पूर्वञ्च कार्यप्रागभाव उपादानकारणेनात्यन्ताभावः, विरोधात् । विपरीतसंशयविपर्ययविषयताया अभावेन परेषामिव न्यायस्य आत्माऽपि पराप्रकाश्यः, आत्मविषयकज्ञानं प्रति आत्मा कारणम्, न परः । विषयोऽपि स्वगुणज्ञानस्य, न परस्य परगुणस्य वा । 'अविदिते प्रमाणाभावात्' इत्यादिसिद्धान्तलक्षणजागदीशीरीत्या घटादिजडवर्गेभ्यो ज्ञानादीनां वैलक्षण्योक्त्या विलक्षणमवेद्यत्वाघटितं ज्ञानादेः स्वप्रकाशत्वमन्येषामिव नैयायिकानामप्यन्यत्र निर्दिष्टम् । निर्विषयेऽपि ज्ञानपदं प्रयुञ्जानौ साङ्ख्यवेदान्तौ ज्ञानरूपमात्मानं मन्यते, न्यायस्तु निर्विषये ज्ञानपदं न प्रयुङ्क्ते, न वक्ति च ज्ञानमात्मानमिति । नाममात्रे विचारोऽकिञ्चित्करः । तयोर्मते आत्मरूपं ज्ञानं निर्विषयं न्याये आत्मा निर्विषयः ।

बुद्धयादिभिरविवेकग्रहात् पुरुषे प्रपञ्चोऽवभासते नोत्पद्यत इति साङ्ख्यमतम् । न्याये शरीरेन्द्रियादिभिरविवेकग्रह आत्मीयतया शरीरादयः सव्यापारा भवन्ति, तेनात्मनि सुखादिप्रपञ्चः समुत्पद्यते । तेषां निर्व्यापारत्वे सुषुप्तौ समाधिविशेषे च शुद्ध आत्माऽवतिष्ठते विवेकग्रहे च मुक्तात्मनि तेषां सर्वथा निर्व्यापारत्वे न प्रपञ्चः । तथा च साङ्ख्यस्य बुद्धयादिभिरविवेकवशादात्मनः सप्रपञ्चता । न्यायस्य शरीरेन्द्रियाणां संयोगकृता तेषां व्यापारप्रयुक्ता सप्रपञ्चता, स्वभावत उभयेषामात्मा शुद्धो निष्प्रपञ्च इति ।

मुमुक्षूणां शुद्धात्मज्ञानाभ्यास एव फलप्रदः । विवेके तु प्रतियोग्यनुयोगिनोरुभयोर्ग्रहो नोपयोगीति केवलात्मज्ञानाभ्यासार्था ।

**पञ्चमी भूमिका**

'सर्वथाऽबाध्यतया सन् पराप्रकाश्यतया चित्, मानभूवं भूयांसमिति प्रमात्मनीक्ष्यते' इत्यादिरीत्या परमप्रेमास्पदतया आनन्दश्च समेषामात्मा तेन नेयं विभेदकरी प्रक्रिया दर्शनानाम् । शब्दात् "तत्त्वमसि, दशमस्त्वमसि" इत्यादिवाक्यात् प्रत्यक्षात्मकं ज्ञानं वेदान्तप्रक्रियेत्यपि न विशेषकरम् । न्यायनये शब्दाज्जातं परोक्षज्ञानं ज्ञानलक्षणासन्निकर्षविधयाऽपरोक्षं मानसं सम्पादयति । तेन तत्रापि बलवत्तरबाधविरहे शब्दादपरोक्षभ्रमस्य बाधो जायते । शाब्दज्ञानवशाल्लौकिकं प्रत्यक्षम् इत्यादिकमन्यत्र प्रपञ्चितम् । सविकल्पकसमाधिविधया शुद्धात्मज्ञानमभ्य-

स्यतः समापत्तिसम्पदे "न पश्यतीत्याहुरेकी भवति" इत्यादिश्रुतयः समुत्साहयन्ति । ध्यातृध्यान-ध्येयानां क्रमशो भेदस्फूर्तौ शिथिलायां भेदावभासाभावः समापत्तिसम्पत् ।

**षष्ठी भूमिका**

"नाद्वैतं नापि च द्वैतम्" इत्यादिश्रुतयः सविकल्पकसमाधिसम्पन्नं निर्विकल्पक-समाधाववतारयति ।

सविकल्पकसमाधावद्वैतभावनयाऽपि प्रतियोगितया द्वैतमवगाह्येत, अतस्तस्य परित्यागोऽभिहितः । द्वैतोपासनायां शुद्धो न विषयः स्यादतस्तस्यापि परित्यागः । शब्दादयोऽपि विषयाः स्युः सविकल्पकेऽतस्तस्य हानम् । निर्विकल्पकसमाधावात्मातिरिक्तविषयाणां विरोधात् तद्विषयकवासनानां स्मृत्यजनकत्वाद्यकार्यकारितया विषयान्तराणामस्फूर्तेर्निर्विकल्पकं सम्पद्यते । विशेष्यविशेषणभावापन्नं ज्ञानं निर्विकल्पकम् । नाम-जाति-देश-कालप्रभृतिविशेषणानां ज्ञानाभावात् केवलैकरूपस्फूर्तिर्भवति । योगे निर्विकल्पकसमाधिरपि चित्तस्यैका विलक्षणा वृत्तिरुपदिष्टा तथा न्यायनये निर्विकल्पकं ज्ञानम् । वेदान्तिभिरपि अखण्डाकारा साक्षात्कारात्मिका ब्रह्मविषयिणी चरमा चेतसो वृत्तिर्जायते । तया च सकार्यवासनाऽविद्या निवर्तत इति प्रतिपाद्यते । एषा वृत्तिरेव यथाकथमपि सम्पाद्या, नाकर्तव्यमवशिष्यते ।

अत एव उदयनाचार्यो वेदान्तमतोपसंहारमिमामवस्थां लिखति । नैयायिकानामपीयमादेयेति सूचयितुम् **'सा च अवस्था न हेया, मोक्षनगरगोपुरायमाणत्वात्'** । तथा च षष्ठीभूमिर्न्यायवेदान्तयोः समाना । अन्यवस्तुविषये सत्यत्वमिथ्यात्वकृतभेदसत्त्वेऽपि शुद्धात्मनिर्विकल्पकभावनायामैकमत्यम् । अन्येषामपि साङ्ख्ययोगादीनामनुकूलमेव । तदानीन्तनशुद्धात्मवस्तुनो निषेधमुखेन परिचायिका श्रुतिः—**"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"** इत्यादिः । जाति-गुण-क्रियाप्रभृतिधर्मपुरस्कारेण बोधजनिका वाचोयं विधर्मकम् आत्मानं न प्राप्नुवन्ति, न गोचरयन्ति । अत एव ततो निवर्तन्ते । मनोऽपि साकारं गृह्णाति, न निराकारस्य मनसा ग्रहणम् । इदञ्च असंयतमनःपरम्, मनसेदमाप्तव्यमित्यादिश्रुत्यन्तरेण संयतमनसा ग्रहणमिष्यत एव । एषाऽपि व्याख्या समाना ।

**सप्तमी भूमिका**

अतः परं सप्तमी भूमिका मुक्तिरेव । निर्विकल्पकज्ञानस्य मोक्षनगरद्वारस्य प्रारब्धादिप्रतिबन्धककर्मक्षये निर्वाणमेव मोक्षः । अत्रैव न्यायमतोपसंहारं लिखति आचार्यः । तदानीन्तनात्मस्वरूपस्य निरूपिका श्रुतिः—**"अथ यो निष्काम आत्मकाम आप्तकामः स ब्रह्मैव सन् ब्रह्माप्येति, न तस्य प्राणा उत्क्रामन्ति, तत्रैव समवलीयन्ते"** इत्यादिः ।

तस्य निर्विकल्पकज्ञानस्य विनाशः स्वयमेव भवति, न तु तन्नाशकत्वेन तदुत्तरवर्तिविशेषगुणस्य अन्वेषणम्, अन्यथा तन्नाशकस्याप्यन्वेषणापत्तेः । वेदान्तमतेऽपि पूर्वोक्तचरमवृत्तेरविद्यानाशकतया अविद्यानाशे तत्कार्यतया वृत्तेरपि स्वयं नाशः । कारणान्वेषणे तु पूर्ववर्तिगुणनाशस्यैव नाशकत्वकल्पना, निःशेषविशेषगुणविनाशं मुक्तिं रोचयन्ते न्यायविदः, तेन न्यायमतस्योपसंहारः सप्तमी भूमिकोच्यते ।

वेदान्तनये ब्रह्मण एवोपाधिवशाज्जीवता, उपाध्यपाये च जीवस्य ब्रह्मता ब्रह्मणि लीनता वा साधु सङ्गच्छते । न्यायविदां तु जीवस्येश्वरभिन्नतया विशेषगुणविनाशेऽपि नेश्वरत्वम्, भेदस्याविनाशात् । तथापि निरञ्जनः परमं साम्यमुपैतीति श्रुत्यन्तरात् परमसमतायामेव श्रुतेस्तात्पर्याद् ब्रह्मता ब्रह्मसाम्यमेवेति रीत्या व्याख्या कार्या । ईश्वराद्विभाजका विशेषगुणा मुक्तजीवे न सन्तीत्येव तात्पर्यम् । अन्यत् प्रायो न्यायवेदान्तयोः समानम् । मुक्तावस्थायां शुद्धात्मातिरिक्तमात्मनि न किञ्चिद् विद्यत इति साङ्ख्यन्यायवेदान्तानां समानम् । सांङ्ख्यवेदान्तयोरात्मरूपज्ञानसत्त्वेऽपि न तेन ज्ञानेन कश्चिद्विषयाऽवभासः । सविषयकत्वमन्तरा ज्ञानानङ्गीकाराद् न नैयायिकानां मुक्तौ ज्ञानमिति प्रोक्तप्रायम् । लौकिकवैषयिकसुखभिन्नं लौकिकं परमात्मनिष्ठं किमपि सुखं न्याये नास्ति, परमप्रेमास्पदम् आत्मा आनन्दो वर्तते, परमप्रेमा तदानीं न वर्तते । परमप्रेमास्पदत्वभिन्नमात्मन आनन्दत्वं किमपि वेदान्तनयेऽपि नास्ति ।

दुःखं दुःखानुभवो वा सामग्रीविरहाद् मुक्तात्मनि न सम्भवत इति समेषां समानम् । ज्ञानात्यन्ताभावानधिकरणमात्मा चेतनः सर्वदैव न्यायस्य, ज्ञानध्वंसप्रागभावाधिकरण आत्मनि कदाचिदपि ज्ञानात्यन्ताभावो न वर्तते । कुत्रचिद् जडप्रवादो न वस्तुतः, किन्तु परिहासकथया, न्यायपरिभाषयाऽन्यात्मनामेव जडत्वात् । अतः परिभाषायामेव भेदः, न वस्तुनीति ध्येयम् ।

**इमे संक्षेपतोऽत्र सूचिता विषयाः**

(१) आत्मदर्शनोपदेशः स्वस्वरूपपरिचयं तत्र सावधानताञ्च निरूपयन् इहामुत्रोपयोगी नीतिशास्त्रीयं कार्यं करोति ।

(२) दार्शनिकविषया न केवलं मोक्षोपयोगिनः, अपि तु ऐहिकीं सम्मानवतां कर्मनिष्ठाञ्च परिपोषयन्ति ।

(३) भारतीयनास्तिकदर्शनान्यपि उपनिषद्वाक्यव्याख्याविशेषादुत्थितानि ।

(४) उपनिषदां श्रीमद्भगवद्गीतायाश्च व्याख्यासमन्वयविशेषाभ्यां वैदिकदर्शनानां परस्परं भेदः । तौ च व्याख्यासमन्वयविशेषौ विच्छिन्नौ साम्प्रदायिकसम्पदा च वेदान्तस्यैव तौ सुरक्षितौ पोषितौ च ।

(५) विज्ञानभिक्षुणा गौडब्रह्मानन्देन च वेदान्तस्य प्राधान्यमङ्गित्वञ्च वर्णितम् । अत्र च निबन्धे श्रीमदुदयनाचार्यवर्णिता न्यायस्य सप्तमी भूमिका यथा दर्शिता, तथा दर्शनमननशीलो व्युत्पन्नो विद्वान् अन्यदपि वैदिकं दर्शनं प्रधानमङ्गि च विधातुं प्रभवति । तेन च वैदिकदर्शनानां परस्परं गौणप्रधानभावोऽङ्गाङ्गिभावो वा वस्तुतो न युज्यते । सर्वाणि स्वप्रक्रियया प्रधानानि स्वतन्त्राणि परिपूर्णानि च ।

(६) न्यायदर्शनमपि उपनिषदनुसारं प्रचलति, न केवलेन तर्कबलेन ।

(७) दर्शनानां काचिद् उपनिषद्व्याख्या प्रणाली अपि लक्षिता । स्वानुकूलस्फुटार्थकवाक्यानि प्रधानीकृत्य तदनुसारमेवान्यानि वाक्यानि योजनीयानि । तत एव च सिद्धान्तभेदः ।

गुरोः पादपीठे सरोजायिते मे मनो भृङ्गभावं वहल्लेखदायि,
रसो वा भवेन्नीरसो दोषलेशान्न दोषज्ञता तस्य दोषाभिधा किम् ।

● ● ●

# ज्ञानप्रामाण्यस्वतस्त्वपरतस्त्वविवेचनम्

डा० स्वामी आत्मानन्दपरमहंसः ( अनुसन्धाता )
का० हि० वि० वि०, वाराणसी

ज्ञानस्य प्रामाण्यमुत्पत्तौ स्वतः परतो वेति विषये प्रथमं विचार्यते ।

**प्रामाण्यस्योत्पत्तौ परतस्त्ववादिमतम्**

परतः प्रामाण्यवादिनो ज्ञानजनकसामग्रीसत्त्वे गुणदोषाभावयोः सत्त्वे च प्रामाण्योत्पत्तिर्भवत्यन्यथा नेत्यभ्युपगच्छन्ति ।

तेषामयमाशयः—प्रमात्वस्य ज्ञानसाधारणकारणप्रयोज्यत्वेऽप्रमितेरपि प्रमात्वापत्तिः स्यात्, तत्रापि ज्ञानकारणस्याक्षतत्वात् । न च ज्ञानहेतोः सत्त्वेऽपि दोषाद् विशेषहेतुसमवधानादप्रमितित्वोपपत्तिरिति वाच्यम्, तथा सति प्रमात्वे दोषाभावप्रयुक्तत्वाप्राप्तौ परतः प्रामाण्यपक्षानुप्रवेशः स्यात् । न च दोषाभावस्यान्यथासिद्धत्वेन न कारणत्वम्, अतो न परतः प्रामाण्यापत्तिरिति वाच्यम्; तथा सति भ्रमस्थलेऽपि दोषस्यान्यथासिद्धत्वप्राप्तौ कारणसामग्रीत एव तदुत्पत्तेः स्वीकारापत्त्याऽप्रमात्वस्वतस्त्वप्रवेशापत्तिः स्यात् । इदमेवाभिप्रेत्योक्तं श्रीजयन्तभट्टैः—

सम्यग्रूपस्य[1] कार्यस्य गुणवत्कारकव्यतिरेकेणानिष्पत्तेः, द्विविधं कार्यं भवति—सम्यगसम्यग् वा । तत्र गुणवता कारणेन सम्यक् कार्यमुत्पाद्यते, दोषवता त्वसम्यगिति ।

**निर्दोषं निर्गुणं वापि न समस्त्येव कारणम् ।**
**अत एव तृतीयस्य न कार्यस्यास्ति सम्भवः ॥ इति ।**

**स्वतःप्रामाण्यवादिनस्तु**—ज्ञाने प्रामाण्यं ज्ञानार्थमपेक्षितसामग्रीतरसामग्र्या निरपेक्षमुत्पद्यत उत्सर्गापवादन्यायादिति स्वीकुर्वन्ति । तन्न्यायस्योदाहरणमित्थम्—

एकदा द्वौ सहोदरौ कस्यचिद्विवादस्य निर्णयार्थं न्यायाधीशसकाशमुपगतौ । तत्र दिवसविशेषं पुरस्कृत्यैकेनोक्तम्—अस्माद् दिवसात् पूर्वमावां विभक्तावास्व । अपरेण चोक्तम्—एतद् दिवसात् पूर्वमावयोर्विभागो नासीत् । तदा न्यायाधीशप्रवरस्तं प्रत्येव **'स्ववचने प्रामाण्यं ब्रूहि'** इत्यादिशति, येनोक्तम्—**'आवाम् विभक्तावास्व'** न तु द्वितीयं प्रति । यदि प्रथमः प्रबलप्रमाणमुपन्यसितुं शक्नोति, तदैव तस्य पक्षो युक्ततरत्वेनावसीयते अन्यथा द्वितीय एव पक्षो युक्त इत्युद्घुष्यते । एकस्मात् पितुर्जायमानत्वेनाविभागस्य स्वयमेव सिद्धत्वाद् विभागस्य च विचारभेदादिकलहादिप्रयुक्तत्वेन पश्चान्निष्पाद्यमानत्वेन स्वयं सिद्धत्वासम्भवात् ।

अयमेव हि न्यायः स्वतःप्रामाण्यवादिभिः प्रामाण्योत्पत्तौ स्वीक्रियते । तथा च ज्ञानसामग्रीसत्त्वे ज्ञाने स्वाभाविकरूपेणैव प्रमात्वमुत्पद्यते । अप्रमात्वं तु दोषादिसमवधाने सत्येव भवतीति ।

---

१. न्यायमञ्जरीप्रमाणप्रकरणस्थतृतीयाह्निके पृ० १५७ ।

तत्र प्रामाण्यस्योत्पत्तौ स्वतस्त्वं ज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वरूपम्। प्रामाण्ये ज्ञानसामग्रीजन्यत्वस्य परतःप्रामाण्यवादिभिरप्यभ्युपगमादतिव्याप्तिरर्थान्तरं वा स्यात्, अतस्तदतिरिक्तेत्यादिकथनम्। न चेश्वरज्ञानेऽव्याप्तिस्तत्र विशेषणाभावादिति वाच्यम्; ज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तसामग्रीजन्यत्वाभावस्यैवोत्पत्तौ स्वतस्त्वलक्षणत्वेन सत्यन्तस्य च प्रतियोगिविशेषणतयेश्वरज्ञानेऽनुपपत्त्यभावाद् विशिष्टाभावस्य तत्राक्षतत्वात्। अप्रमासु तु ज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तदोषादिरूपसामग्रीजन्यत्वमस्तीति न तत्रातिव्याप्तिः। न च प्रमात्वस्य ज्ञानसामग्रीमात्रप्रयोज्यत्वे ज्ञानत्ववदप्रमावृत्तित्वमपि स्यादिति वाच्यम्; दोषासहकृत-ज्ञानसामग्र्या एव प्रयोजकत्वाभ्युपगमेन दोषसत्त्वे प्रयोजकाभावादेव प्रयोज्याप्रसक्तेः। तदसत्त्वेऽप्रमावृत्तित्वाप्रसक्तेः। न च दोषस्याप्रमाहेतुत्वे तदभावस्य प्रमां प्रति हेतुत्वं स्यादेवेति वाच्यम्; अन्वयव्यतिरेकमात्रात् कार्यकारणभावानध्यवसायादनन्यथासिद्धेरपि कार्यकारण-भावेऽपेक्षणीयत्वात्। तथाहि—कारणत्वं त्वनन्यथासिद्धान्वयव्यतिरेकाभ्यामवसीयते। अत्र ( दोषाभावे ) त्वन्वयव्यतिरेकौ विरोध्यप्रमाप्रतिबन्धकत्वेनोपक्षीणाविति न कारणत्वसाधकौ। तथा चोक्तं भट्टपादैः—

> [1]तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः।
> अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः॥

ननु यथा संस्कारस्य स्वजनकानुभवनाशकत्वेऽपि न स्मृतिः प्रति हेतुत्वहानिस्तथैव दोषाभावस्य विरोधिप्रतिबन्धकत्वेऽपि न प्रमात्वोत्पत्तिं प्रति हेतुत्वहानिरिति चेत्, न; संस्कारस्यानुभवनाशकत्वेऽपि, स्मृतेः कारणान्तरानुपलम्भात् तद्धेतुताऽपि संस्कारस्यागतिकगत्या कल्प्यते। अत्र तु तस्य नावश्यकत्वं ज्ञानसामान्यसामग्र्या एव तत्प्रयोजिकाया विद्यमानत्वेन प्रमां प्रति कारणानुपलभ्यस्याप्रसक्तेः।

न च सामग्र्यैक्ये ज्ञानप्रमालक्षणकार्यभेदानुपपत्तिर्बाधिकेति वाच्यम्; एकस्मादप्यग्नि-संयोगात् पार्थिवपरमाणौ रूपरसगन्धस्पर्शदाहादीनां बहूनामेकदैवोत्पत्तिवद् व्यवस्थोपपत्तेः।

**प्रामाण्यज्ञप्तौ स्वतस्त्वादिनिरूपणम्**

अत्र वादिनः प्राधान्येन त्रिधा विभक्ताः। यथा कस्यचिदपराधित्वेनानुमतस्य न्यायालये गमनानन्तरम् 'मया नापराधः कृतः' इति तस्य सविलापं वचनं श्रुत्वा करुणार्द्राः कथयन्ति— 'नूनमेष निरपराधी' इति अपरे संरक्षका गृहीतारो राजकीयपुरुषास्तु 'अयं दुष्ट एव' इति। न्यायाधीशस्तु ऋते प्रमाणं न दुष्ट इत्येव कथयति, न वा निरपराधीति। तथैवात्रापि यत्किञ्चिज्ज्ञानोत्पत्त्यनन्तरं केचित्तु तस्मिन् प्रमात्वमेवाभ्युपगच्छन्ति। अन्ये त्वप्रमात्वमेव। अपरे तु गुणसत्त्वे प्रमात्वं दोषसत्त्वेऽप्रमात्वमिति। तत्र प्रथमपक्षस्तु मीमांसकानां वेदान्तिनां च, द्वितीयस्तु बौद्धानाम्, तृतीयस्तु नैयायिकवैशेषिकयोरिति। तत्र प्रामाण्यज्ञप्तौ स्वतस्त्ववादिमते ज्ञाने प्रामाण्यनिश्चयानन्तरमेव तत इच्छाप्रवृत्त्योः सम्भवाद् ज्ञानोत्तरं तयोरुपपत्त्यर्थं ज्ञानग्राहक-सामग्रीत एवोत्सर्गापवादन्यायात् तद्गतप्रामाण्यं गृह्यते। सा सामग्री तत्तन्मते भिन्न-भिन्नैवेत्यन्यदेतत्।

---

१. श्लोकवार्त्तिके—२।६५।

तथाहि—प्राभाकरमते सर्वदैव **'घटमहं जानामि'** इति प्रत्ययस्वीकारात् **'अयं घटः'** इत्याकारकस्य केवलघटावगाहिप्रत्ययस्य चास्वीकाराद् व्यवसायात्मकज्ञानस्यैव तज्ज्ञानावगाहित्वमात्मावगाहित्वं चापि स्वीक्रियते। एवञ्च फलतो ज्ञानस्य विषयावगाहित्वं स्वावगाहित्वमात्मावगाहित्वञ्च सिद्धम्। तथा च ज्ञानोत्पादकसामग्र्येव ज्ञानग्राहिकापि। तथैव च ज्ञानगतप्रामाण्यं ज्ञाप्यते।

अर्थाद् ज्ञाने स्वस्य, स्वविषयस्य, प्रमातुः स्वगतप्रामाण्यस्य च ग्राहकत्वं विद्यते।

भट्टानां त्वयमाशयः—ज्ञानक्रिया सकर्मिका। अतस्तया तादृशक्रियाकर्तृभिन्नसमवेतयत्किञ्चित्फलवत्तया भाव्यम्। यथा पाककर्तरि दृश्यमानाया अपि पाकक्रियाया विक्लेदरूपं फलं पच्यमानवस्तुनि तण्डुलादौ दृश्यते। आद्यस्तु कर्ताऽपरस्तु कर्मेति। तथैवात्मनि ज्ञानोत्पत्त्यनन्तरं ज्ञानं कर्मरूपवस्तुना सह आत्मनः सम्बन्धविशेषमुत्पादयति, तदा तद्वस्तु परिणामविशेषाक्रान्तं भवति। एवञ्चानुभवो न केवलमात्मपरिणामः, अपि तु वस्तुपरिणामोऽपि। तथा चानया प्रणाल्या वस्तु प्रकाशविशेषविशिष्टं सम्पद्यते। अयमेव प्रकाशः प्राकट्यं ज्ञातता वोच्यते। अनयैव ज्ञाततयाऽनुमीयते यद् ज्ञानं मदात्मन्युत्पन्नम्। प्रयोगश्चेत्थम्—अहं घटज्ञानवान् घटज्ञाततावत्त्वात्। एवञ्च भट्टमते ज्ञानग्राहिका सामग्री ज्ञाततालिङ्गकानुमानमेव। तेनैव च ज्ञानगतप्रामाण्यं ज्ञाप्यते।

मुरारिमिश्रमते तु न्यायमतवद् 'अयं घटः' इति ज्ञानानन्तरं **'घटमहं जानामि'** इत्याकारकोऽनुव्यवसायः प्रत्यक्षात्मको भवति। अतस्तन्मते ज्ञानेन मनःसन्निकर्षादिरूपैव ज्ञानग्राहिका सामग्री। तयैव च ज्ञानगतं प्रामाण्यमपि ज्ञाप्यते।

अथ ज्ञानग्राहकादेव प्रामाण्यग्रहणस्वीकारे मिथ्यासर्पादिज्ञाने प्रमात्वावगमप्रसक्तिरिति चेत्, न; प्रसक्तस्यापि प्रामाण्यावगमस्य कारणदोषावगमबाधबोधाभ्यामपसारितत्वात्। न चैवं कारणदोषज्ञानबाधकज्ञानाभ्यां चेत्, प्रसक्तस्यापि प्रामाण्यग्रहस्यापनयः, तर्हि तयोरभावज्ञानं प्रामाण्यज्ञानहेतुरिति स्वीकारापत्तिः, तथा च परतः प्रामाण्याभ्युपगमप्रसक्तिरिति वाच्यम्; अप्रामाण्यज्ञाने करणदोषज्ञानबाधकज्ञानवत् प्रामाण्यावगमे तयोरभावज्ञानं कारणमित्यनभ्युपगमात्, दोषज्ञानबाधकज्ञानयोरनुदयमात्रेण प्रामाण्यस्फुरणस्वीकारात्। तथा चोक्तम्—

[1]यदा स्वतः प्रमाणत्वं तदाऽन्यो नैव मृग्यते।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः॥ इति।

न च दोषज्ञानानुदयमादाय परतस्त्वापत्तिरिति वाच्यम्, विरोधिबुद्ध्युदयप्रतिबन्धकतयैव कृतार्थत्वात्; अन्यथा दोषाभावावगमस्यापि प्रामाण्यहेतुत्वस्वीकारेऽनवस्था स्यात्। येन हि दोषाभावज्ञानेनाद्यस्य प्रामाण्यमवगम्यते, तत्प्रामाण्यार्थमपि दोषाभावज्ञानान्तरस्य गवेषणीयत्वात्।

ज्ञानगताप्रमात्वं तु मतत्रयेऽपि परतो ग्राह्यम्। एवञ्च तन्न केवलं ज्ञानग्राहकसामग्रीमात्रेण गृह्यते, अपि तु ज्ञानाधीनप्रवृत्तौ वैफल्यज्ञानाद्यन्यकारणमपेक्ष्य गृह्यते।

---

१. श्लोकवार्त्तिके—२।५२।

अथ यथा प्रमाणभूतज्ञानविषयकप्रथमज्ञाने तद्गतप्रामाण्यं स्वतो गृह्यते, तथैवाप्रमाणभूतज्ञानविषयकप्रथमज्ञान एव तद्गताप्रामाण्यग्रहणसम्भवेऽप्रामाण्यस्य परतो ग्राह्यत्वकथनमयुक्तमिति चेत्, न। अप्रामाण्यस्य स्वतो ग्राह्यत्वाभ्युपगमे ज्ञानानन्तरभाविप्रवृत्तिनिवृत्तिविरोधिज्ञानप्रतिबन्धानां लोक उपलभ्यमानानां व्याघातापत्तेः।

तथाहि—ज्ञानानन्तरं विषयीभूतार्थानुकूल्ये सति ज्ञातुस्तद्ग्रहणार्थं प्रवृत्तिः, प्रातिकूल्ये च सति ततो निवृत्तिरिति हि लोके सिद्धम्। किन्त्वर्थं विषयी कुर्वति ज्ञानेऽप्रामाण्यं गृह्यते चेत्, तदा प्रवृत्त्याद्यनुपपत्तिः स्यात्, अगृहीताप्रामाण्यकस्यैव ज्ञानस्य प्रवर्त्तकत्वनियमात्। दृश्यते ह्यप्रमाणभूतादपि शुक्तिरजतादिज्ञानात् प्रवृत्त्यादिकं बाधग्रहात्पूर्वम्। न च तादृशप्रवृत्त्यादिकमप्रामाण्यस्य स्वतो ग्राह्यत्वे कथमपि सम्भवति, तथा सति ज्ञानोत्पत्त्यनन्तरमेव तस्मिन्नप्रामाण्यस्यापि गृहीतत्वेन तस्य प्रवृत्त्याधायकाप्रामाण्यज्ञानानास्कन्दितत्वासिद्धेः।

एतेन प्रामाण्यस्य परतो ग्राह्यत्वे बाधकान्तरमपि सूचितं भवति। तथा सति यस्मात् परतः प्रामाण्यग्रहणं सम्पत्स्यमानमिदं तत्सन्निधानविलम्बेन प्रवृत्तिविलम्बापत्तिः स्यात्।

**प्रामाण्यज्ञप्तौ परतस्त्ववादिमतम्**

प्रमाणपटवो नैयायिकास्तत्सयूथ्या वैशेषिकाश्च प्रामाण्यस्य ज्ञानगताप्रामाण्याग्राहकसामग्रीमात्रग्राह्यत्वस्वीकारे तद्विषये सन्देहो न स्यात्, तस्य ज्ञानत्ववदेव निर्णीतत्वादिति विवेचयन्ति। अथ यथा परतः प्रामाण्यज्ञप्तिमभ्युपगच्छतां मते सर्वं ज्ञानधर्मिण्यभ्रान्तमित्यभ्युपगमेन धर्मिमात्रज्ञानस्य स्वत एव प्रमाणत्वेऽपि अनुव्यवसायज्ञानप्रामाण्यस्य च तत्तद्ज्ञानस्फुरणसमय एव स्फुरितत्त्वेऽपि तत्र बौद्धानाम् 'अप्रमाणम्' एवेति विपर्यासो यथा वा तदभ्युपगतस्वाभाविकप्रमाणभावायामनुमितौ चार्वाकस्य विपर्यासः, तथैव स्वतःप्रामाण्याभ्युपगमेऽपि पश्चात् संशयोपपत्तिरिति चेत्, न, वैषम्यात्। तत्र तु येन धर्मिज्ञानेऽनुव्यवसाये च प्रामाण्यमभ्युपगतं तेनाप्रामाण्यं नोच्यते। बौद्धेन च सर्वत्रैवाप्रामाण्यमभ्युपगम्यत इति धर्मिज्ञानेऽपि स्वीकरोतु।

अनुमितावपि स्वाभाविकप्रामाण्यव्यवस्थापनम्, अपरेषां नैयायिकानां विपर्यासस्तु अन्यस्यैव चार्वाकस्य। अत एवोपदर्शितस्थले येन यस्मिन् प्रामाण्यमभ्युपगतं तस्यैव न तत्र विपर्यासः। प्रकृते यदि जातमात्रज्ञानेऽभ्युपगतं प्रामाण्यं स्वतस्त्ववादिभिः, तदा तेषां त्वनुपपत्तिरेव संशयस्येति। तस्मात् प्रामाण्यं परत एवाभ्युपगन्तव्यम्। अन्यथा दूरे जलज्ञाने सत्यनन्तरक्षणेऽनुभूयमानस्तत्संशयो न स्यात्। अत एव प्रयोगः—अनभ्यासदशापन्नज्ञानप्रामाण्यं परतः प्रतीयते, तत्र सांशयिकत्वादप्रामाण्यवदिति।

**इदं त्विहावधेयम्**—एतन्मते तद्विषयकव्यवहारार्थं तद्विषयकज्ञानमात्रमपेक्षितम्, न तु तादृशज्ञानधर्मिकप्रामाण्याप्रामाण्यनिश्चययोरन्यतरस्यापेक्षा। तथा चोक्तम्—

'[1]अर्थसन्देहादपि प्रेक्षावतां प्रवृत्तेः' इति।

अत एव प्रामाण्याप्रामाण्ययोर्द्वयोरपि परतो ग्राह्यत्वाभ्युपगमेऽपि न प्रवृत्त्यादिव्याघातः। प्रामाण्याप्रामाण्ययोर्ज्ञानं त्वन्यकारणसापेक्षम्। तच्च कारणं प्रमाणस्थले सफलप्रवृत्तिजनकत्व-

१. न्यायवार्तिकतात्पर्यटीका—१।१।१ सूत्रे। पृ० ८।

हेतुकानुमानमप्रमास्थले च विफलप्रवृत्तिहेतुकानुमानम् । तथा चोक्तं न्यायभाष्ये '[1]समीहा प्रवृत्तिरित्युच्यते । सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्धः' इति । अत्र च मते ज्ञानग्राहिका सामग्री अनुव्यवसायात्मिका 'घटमहं जानामि' इत्याकारिका । तथा च ज्ञानग्राहकप्रामाण्यग्राहक-सामग्र्योः स्पष्टमेव भेदाभ्युपगमादुभयोः परतस्त्वम् ।

इदं पुनरत्र पर्यालोचनीयम्—भट्टाभिमतज्ञातता ज्ञानविषयतातो नातिरिच्यते । ज्ञान-विषयता तु विषयरूपैव । अतो ज्ञाततायां न किञ्चिद् मानमस्ति । एवञ्च तल्लिङ्गकानुमानेन प्रामाण्यग्रहणकथैव सुदूरपराहता ।

अपि च ज्ञानजन्यज्ञातताधारस्यैव ज्ञानविषयत्वस्वीकारेऽतीतानानागतपदार्थानां ज्ञान-विषयत्वानुपपत्तिः, अविद्यमाने विषयरूपे धर्मिणि ज्ञाततारूपधर्मस्य जन्मासम्भवात् ।

किञ्च, ज्ञातताधारस्यैव ज्ञानविषयत्वाभ्युपगमेऽनवस्थापत्तिर्विषयाज्ञातत्वं वा स्यात् । तथाहि—ज्ञाततायां ज्ञातताऽस्ति न वा ? अस्ति चेत् सैवान्या वा ? न तावत् प्रथमः, स्वस्मि-न्नेवाधाराधेयभावासम्भवात् । नापि प्रथमे द्वितीयः, आधेयभूताया ज्ञाततायाः सिद्ध्यर्थं ज्ञातता-न्तरानुसरणेऽनवस्थापत्तेः । नापि द्वितीयपक्षो युक्तः, ज्ञाततां विना स्वस्या अप्रामाणिकत्वप्रसक्तौ विषयस्याज्ञातत्वापातात् । एवञ्च ज्ञाततायाः स्वयमप्रामाणिकत्वे तल्लिङ्गकानुमित्या प्रामाण्य-ग्रहणं नितान्तमप्रामाणिकम् ।

अपरञ्च तुष्यतु दुर्जनन्यायेन कथञ्चिद् ज्ञातताया ज्ञानग्राहकत्वस्वीकारेऽपि न तया प्रामाण्य-ग्रहणसम्भवः, प्रमाणभूतेष्वप्रमाणभूतेषु च सर्वेष्वपि ज्ञानेषु तद्ग्राहकत्वेन ज्ञाततास्वीकारेण प्रामाण्यस्य च प्रमाणभूतज्ञानजन्यज्ञाततात एव स्वीकर्त्तुमुचितत्वेन व्यभिचारात् ।

**उभयोः स्वतोग्राह्यत्ववादिसाङ्ख्यमतम्**

साङ्ख्यनये तु प्रामाण्याप्रामाण्ययोर्द्वयोरपि स्वतो ग्राह्यत्वमिति '[2]केचिदाहुर्द्वयं स्वतः' इति भट्टवाक्यादितोऽवगम्यते । अस्मिन् नये तयोः परतो ग्राह्यत्वे तद्ग्रहणार्थमतिरिक्तकारणकल्पने गौरवम्, स्वतोग्राह्यत्वाभ्युपगमे तु ज्ञानग्राहकैरेव तयोर्ग्रहणसम्भवे तदर्थमन्यकारणाकल्पनरूपं लाघवमिति चिन्त्यते । न च प्रामाण्यस्य स्वतो ग्राह्यत्वस्वीकारे यथाकथञ्चिद् बाधकासत्त्वेऽप्य-प्रामाण्यस्य तत्स्वीकारे ज्ञानोदयसमकालमेव तस्मिन् ज्ञानेऽप्रामाण्योदयेनोक्तरीत्या प्रवृत्त्यादि-भङ्गापत्तिरिति वाच्यम्; प्रामाण्याप्रामाण्ययोः स्वतस्त्वस्य ज्ञानग्राहकसामग्रीत एव तयोर्ग्रहणे तात्पर्यात्, ज्ञानोत्पादकज्ञानग्राहकसामग्र्योर्भिन्नत्वेनोत्पादकसामग्रीकाले ग्राहकसामग्रीसमव-धानस्यानैयत्यात्, ज्ञानग्राहकसामग्रीसमवधानात् पूर्वं प्रवृत्त्याद्युत्पत्तौ बाधकाभावात् ।

इदं तु न विचारसहम्, ज्ञानग्राहकसामग्रीसमवधानात् पूर्वमेव प्रवृत्त्यभ्युपगमे प्राभाकर-मतस्य, प्रामाण्यनिश्चायकसामग्रीसमवधानात्तदभ्युपगमे च नैयायिकमतस्यानुप्रवेशापत्तेः ।

किञ्च, ज्ञानग्राहकसामग्रीसमवधानानन्तरं तत्र प्रामाण्यं स्वीकर्तव्यमप्रामाण्यं वेत्यत्र विनिगमनाविरह उभयोरप्यौत्सर्गिकत्वाभ्युपगमात् । न च कारणदोषात् क्वचिदप्रामाण्यं कारण-

---

१. न्यायभाष्ये—१।१।१, मूलपुस्तके पृ० २ ।

२. भट्टवार्तिके सू० २, श्लोकः ३४ ।

गुणाच्च क्वचित् प्रामाण्यं सेत्स्यतीति वाच्यम्; नैयायिकमतानुप्रवेशापत्तेस्तावताप्यनुद्धारात्। यदि चैकस्मिन्नेव ज्ञाने प्रामाण्यमप्रामाण्यञ्चेत्युभयमपि स्वाभाविकमभ्युपगम्यते, तथा च न नैयायिकमताविशेषापत्तिरित्युच्यते, तदा व्याघात एव, एकस्यैव ज्ञानस्यैकस्मिन् विषये (स्वविषये) स्वत एव प्रामाण्याप्रामाण्ययोरनुन्नतेनैकदैवाकथनादिति।

इदं पुनरिहावधेयम्—स्वतःप्रामाण्यवादानुसारेणापि प्रामाण्योत्पत्तौ गुणवतामिन्द्रियाणां भवतु कारणत्वम्, किन्तु गुणानां स्वरूपेण नापेक्षा, अपि तु दोषनिराकरणौपयिकतयैव। दोषाणां प्रामाण्योत्पत्तिविघातकत्वाद् गुणैरुत्सारितानां च तद्विघातकत्वासम्भवात्। अत एवासत्स्वपि वक्तृगुणेषु वेदे दोषाभावमात्रादेव प्रामाण्यं सिद्ध्यति। तेन तेषामपौरुषेयत्वोपगमेऽपि न काचिद् हानिः। इदमेवाभिप्रेत्याहुर्भट्टपादाः—

तस्माद्[1] बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ इति।

अत्रार्थान्यथात्वज्ञानञ्च द्विविधं भट्टाभिप्रेतम्—नैतदेवमित्याकारकं पूर्वावगतरूपोपमर्देन जायमानं प्रथमम्, तत्त्वप्रकाशनात्मकं च द्वितीयम्। हेतवो ज्ञानानामिन्द्रियादयस्तेषु वातादि-समुत्था दोषास्तिमिरादयः। तज्ज्ञानेनौत्सर्गतः प्राप्नुवन्ती प्रमाणताऽपोद्यत इत्यत्रत्य-वार्त्तिकाभिप्रायः।

तस्मात् स्थिते चैवमौत्सर्गिकप्रामाण्ये यत्र तस्यापवादः क्वचिद् भवति, तत्राप्रामाण्यम्। अप्रामाण्ये चावश्यम्भाव्यपवादः। द्विविधो हि भवति तदपवादः—बाधकप्रत्ययः कारणदोष-ज्ञानञ्च। यथाहुरभियुक्ताः—'यस्य च दुष्टं करणं यत्र च मिथ्येति बाधकः प्रत्ययः, स एवा-समीचीनः प्रत्ययो नान्यः' इति तत्र बाधकज्ञानं पूर्वज्ञानोपमर्दद्वारेणैव तस्मिन् विषये जायते। कारण-दोषज्ञानं तु भिन्नविषयमपि कार्यैक्याद् बाधकतां प्रतिपद्यते। यथा च 'अपः प्रणयेदिति' दर्शपूर्ण-मासाङ्गत्वात् क्रत्वर्थचमसो 'गोदोहनेन पशुकामस्य प्रणयेद्' इति काम्यमानपशुनिर्देशात् पुरुषार्थं गोदोहनञ्चेति रीत्या क्रत्वर्थपुरुषार्थतया भिन्नविषयत्वेऽपि चमसगोदोहनयोरप्रणयनाख्यं कार्यमेकमिति गोदोहनेन निर्वृत्ते तस्मिन् चमसो निवर्तते। एवमिह कारणदोषज्ञानं दोष-विषयमपि दोषाणामयथार्थज्ञानजननस्वभावत्वात् तज्जन्यस्य याथार्थ्यं बाधते। यथाहुः—

दुष्टकारणबोधे[2] तु सिद्धेऽपि विषयान्तरे।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥ इति।

---

१. श्लोकवार्त्तिके—२।५३।
२. मीमांसाश्लोकवार्त्तिकम् २।५८।

●●●

# अविद्यानिरूपणम्

श्रीरामयत्नशुक्लः
वेदान्तव्याख्याता
प्राच्यविद्याधर्मविज्ञानसङ्कायें,
का० हि० वि० वि०, वाराणसी ।

अज्ञो हि लोकः स्वस्वरूपपरिज्ञाने । तदज्ञानादेव सांसारिकसुखाभासमेव सुखमिव मन्यमानस्तदर्थं कायेन वाचा मनसा च प्रयतमानो नैकजन्मप्रयासादपि न तुष्यन् अद्याप्यशान्त इवोपलक्ष्यते । वास्तविकशान्तिस्तु तत्त्वज्ञानादेवार्विजिता भवति । 'ऋते ज्ञानान्न मुक्तिः' इत्येवं-क्रमेण वेदान्तेषु नैकतोऽवलोक्यते । तत्त्वज्ञानञ्च प्रत्यक्चैतन्यस्य सजातीयविजातीय-स्वगतशून्यस्याद्वयस्य सच्चिदानन्दस्यात्मनोऽनाद्यनिर्वाच्याचिन्त्यमहामहिमवैभवशालिन्याऽविद्यारूप-माययाऽऽवृतत्वेन न किल सर्वसाधारणसुलभम् । 'तमेव भान्तमनुभाति सर्वं तस्य भाषा सर्वमिदं विभाति[1]' इत्यादिश्रुतिभिर्ब्रह्मणः स्वप्रकाशत्वेऽपि घनच्छन्नदृष्टेऽर्काभानवद् अज्ञानस्याविद्या-वशाद् न तथा तत्प्रतीतिः । तथाचोक्तम्—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथामन्यते निष्प्रभं चातिमूढः ।
तथाबद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽयमात्मा ।।

तत्र का नाम अविद्या, यया स्वतः प्रकाशमानोऽप्यात्मा न प्रकाशते । अविद्यामाययोरस्ति भेदो न वा ? कथं तया आत्मनो ह्यावरणम् ? सा भावरूपा, अभावरूपा वा ? सादिर्वा स्यादनादिर्वा सा ? अनादित्वेऽपि सान्तत्वमनन्तत्वं वा ? सान्तत्वे एकत्वमनेकत्वं वा ? एकत्वे एकमोक्षे सर्वमोक्षापत्तिः, अनादित्वे कथं नाद्वैतभङ्गप्रसङ्गः ? तस्याः प्रभावः, कीदृशी वा तस्याः शक्तिः ? तूलाविद्या मूलाविद्ययोर्विवेक इत्येवं नानाकोटयोऽविद्याविषये प्रवर्तन्ते ।

**मायाविद्ययोः स्वरूपं लक्षणञ्च—**

'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति'[2] इत्यादिश्रुतिभिर्ब्रह्म एव जगत्कारणतया वेदान्तसिद्धान्त ऊरीकृतम् । यथा नीरसभूमौ ( ऊषरे ) नान्नोत्पत्तिः, स्निग्धायामेव सा, तथैव शुद्धनिर्गुणचैतन्यरूपाद् ब्रह्मणः सकाशाद् विचित्ररचनोपेतस्यानेककर्तृ-भोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्तनरचनारूपस्य जगतो नोत्पत्तिः सम्भवतीति । आरोपे सति निमित्तानुसरणं नहि निमित्तमस्तीत्यारोप इति न्यायेन ब्रह्मणि जगदारोपदर्शनेनारोपानुगुणा त्रिगुणा भावरूपा काचिच्छक्तिः कल्प्यते । सा चेयं कल्प्यमाना निस्तत्त्वान्मिथ्यैव स्वीक्रियते ।

---

१. मुण्डकोपनिषद्—२।२।१० ।
२. तैत्तिरीयोपनिषद्—३।१ ।

तथ चोक्तम्—

निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाग्निशक्तिवत् ।
नहि शक्तिः क्वचित्कैश्चित् बुध्यते कार्यतः पुरा ॥ इति ।

गीतायामपि भगवता इत्थमेवोक्तम्—'सम्भवाम्यात्ममायया' इति । आत्ममायापदेनेयमेवोच्यते ।

सा च माया सत्त्वाऽसत्त्वाभ्यामनिर्वाच्या, जगदनुरूपाऽनिर्वचनीयैव ।

जगतः स्वरूपविषये लङ्कावतारे भगवतोक्तम्—

बुध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः[1] ॥ इति ।

इयञ्च विशुद्धसत्त्वप्रधाना मलिनसत्त्वप्रधाना च कार्यानुसारेण स्वीक्रियते । इदञ्चोक्तं पञ्चदश्याम्[2]—

चिदानन्दपरब्रह्म प्रतिबिम्बसमन्विता ।
तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधापि सा ॥
सत्त्वशुद्ध्यशुद्धिभ्यां मायाविद्ये च ते मते ।
मायाबिम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः ॥
अविद्यावशगस्त्वन्यः तद्वैचित्र्यादनेकधा ॥

ईश्वरस्य स्वच्छत्वसर्वज्ञत्वादिधर्मदर्शनेन तदुपाधेस्तथात्वावगमः । जीवस्याल्पज्ञत्वादिधर्मदर्शनेन तदुपाधेर्मलिनसत्त्वप्राधान्यमवसितम् । ईश्वरोपाधेर्न स्वातन्त्र्यम्, अपि तु ईश्वरपारतन्त्र्यम् । न चेश्वरस्योपाधिपारवश्यम् । जीवोपाधिर्मलिनसत्त्वप्रधाना जीवं स्ववश्यतया परतन्त्रीकरोति । अत एव जीवः प्रतिहतप्रवृत्तिर्दृश्यते । मायाविद्ययोरयं भेदः सत्त्वशुद्ध्यशुद्धिभ्यां वश्यत्वाऽवश्यत्वाभ्याम् । ईश्वरोपाधिर्माया, जीवोपाधिरविद्या इत्युभयमपि वेदान्तेषु प्रवादः । ईश्वरस्यैक्यात् तदुपाधेरैक्यम् । जीवस्य नानात्वात् तदुपाधेर्नानात्वमित्यपि पक्षः । विशेषतस्तु अग्रे ब्रूमहे ।

सा द्विविधाऽपि शक्तिस्त्रिगुणात्मिका, भावरूपा, अनादिभूता कापि अनिर्वाच्या चोच्यते । सा किल माया, अविद्या वा सत्त्वेनासत्त्वेन निर्वक्तुमशक्या । अत एवानिर्वचनीया । सत्त्वे तत्त्वज्ञानेन बाधो न स्यात् । असत्त्वे वन्ध्यापुत्रादिवदलीकतया प्रतीत्यसम्भवेन तद्विलसितं शुक्तिरूप्यं न प्रतिभासेत । अतोऽनिर्वचनीयैव सा । तत्त्वज्ञानबाध्यत्वाच्च मिथ्यात्वसिद्ध्या तदुपादानकस्यास्य जगतो मिथ्यात्वसिद्धिः । तथा च 'ब्रह्म सत्यं जगन्मिथ्या' इति ब्रह्मसिद्धान्तो राजते ।

अविद्यामायासाधारणलक्षणन्तु अनादिभावत्वे सति साक्षाद् ज्ञाननिवर्त्यरूपं बोध्यम् । उत्तरकालिकज्ञाननिवर्त्यस्य पूर्वकालिकज्ञानस्य सादित्वेन न तत्रातिव्याप्तिः । ज्ञानप्रागभावस्य ज्ञाननिवर्त्यत्वेऽपि भावत्वाभावान्न तत्रातिव्याप्तिः । न च विद्याया भावरूपत्वे, अनिर्वचनीयत्व-

---

१. खण्डनखण्डखाद्यम्—१ ।
२. पञ्चदशी—१।१५।१७ ।

विलोपापत्तिः, भावत्वाभावेपि अभाववैलक्षण्येन भावत्वोपचारात्, परमार्थतो भावत्वास्वीकारात्। आत्मनोऽनादित्वभावरूपत्वेऽपि ज्ञाननिर्वर्त्यत्वाभावाद् न तत्रातिव्याप्तिः। ईश्वरत्वे जीवत्वादेरविद्यानाशद्वारा ज्ञाननिर्वर्त्यत्वस्वीकारात् साक्षाद् ज्ञाननिर्वर्त्यत्वाभावेन नापि तत्रातिव्याप्तिः।

तूलाज्ञानस्य मूलाज्ञानानतिरिक्ततया न दोषः। अतिरिक्ततायामपि अनादिचैतन्यसम्बन्धितया तस्यापि अनादितया न तत्राव्याप्तिः। सादित्वव्यवहारस्तु अवच्छेदकतया क्लृप्तशुक्त्यादीनां सादित्वात्।

अथाविद्यायाः तदुपादानकस्यास्य जगतो मिथ्यात्वे प्रत्यक्षविरोधः, प्रत्यक्षो जगत्सत्यत्वानुभवादिति चेत्, तत्रेत्थमुक्तिसम्भवः। त्रिविधा हि सत्ता स्वीक्रियते—पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी च। त्रिकालाबाध्यस्वरूपनित्यत्वरूपा प्रथमा, सा च 'ब्रह्मणः', तस्य त्रिकालाबाधत्वादेकत्वाच्च। तदतिरिक्तस्य ब्रह्मज्ञानबाध्यत्वेन न तथात्वसम्भवः। व्यावहारिकी सत्ता जगतोऽस्य वर्तते, तस्य सफलव्यवहारसाधकतया संसारदशायामबाध्यत्वात्। प्रातिभासिकी च सत्ता शुक्तिरूप्यादेरस्ति। न हि तत्र रजतसर्पादीनां तत्प्रतिभासकालातिरिक्तकाले सत्ता पृथगस्ति। यदैव ते प्रतीयन्ते तदैव ते सन्तः, प्रतीत्यभावकाले तेषामसत्वात्। प्रतिभासमात्रशरीरत्वात् तेषां प्रातिभासिकी सत्ता।

ननु व्यावहारिकप्रातिभासिकयोरुभयोरपि ज्ञाननिर्वर्त्यत्वेन को भेदः इति चेत्, ब्रह्मज्ञानान्याबाध्यत्वं व्यावहारिकत्वम्। ब्रह्मज्ञानान्यबाध्यत्वं प्रातिभासिकत्वमिति किञ्चित् परिष्कृत्य समाधेयम्। क्वचिदुपाधौ प्रतीयमानत्वविशेषणेन न ब्रह्मणि न चालीकेऽतिव्याप्तिः। तथा च व्यावहारिकसत्त्वविषयकतया प्रत्यक्षस्य नोक्तविरोधः। प्रत्यक्षेण सत्त्वमात्रं विषयीक्रियते, न तत्र पारमार्थिकत्वमपि विषयः। पारिमार्थिकत्वम्, त्रिकालाऽबाध्यत्वम्, प्रत्यक्षस्य वर्तमानग्राहितया त्रिकालघटितस्योक्तसत्त्वस्य तेनाग्रहात्।

अथेदं रजतमित्यत्र रजतस्य प्रतिभासकाले सत्त्वस्वीकाराद् व्यवहारकाले वियदादिसत्त्वानुभावाच्च कथं प्रातीतिकरजतस्य व्यावहारिकजगतो वा नेदं रजतमित्यनेन—'नेह नानाऽस्ति किञ्चन' इत्यादिना न त्रिकालनिषेध इति शङ्का न कार्या, यतो हि न तत्र रजतत्वेन जगत्साधारणेन धर्मेण वा निषेधः, किन्तु लौकिकपारमार्थिकत्वेन प्रातीतिकस्य, पारमार्थिकत्वेन च जगतो निषेधाद् व्यधिकरणाभावस्वीकारात्।

न चैवं सति जगतो हि पारमार्थिकत्वेन निषेधेऽपि व्यावहारिकत्वेन तदनिषेधाद व्यावहारिकजगत्सत्तायां ब्रह्मणि व्यावहारिकजगद्रूपविजातीयभेदस्य विद्यमानतया **'एकमेवाद्वितीयं ब्रह्म'** इति श्रुतीनां तात्पर्यभङ्गापत्तिरिति। **'एकमेवाद्वितीयम्'** इत्यादिश्रुतेस्तात्पर्यं त्रिविधभेदवारणे वर्तते। लोके हि भेदत्रयमनुभूयते। तथा चोक्तं पञ्चदश्याम्[1]—

> **वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः।**
> **वृक्षान्तरात् सजातीयो विजातीयः शिलादितः॥**

---

१. पञ्चदशी—२।२०।

एवंप्रकारेण ब्रह्मणि त्रिविधभेदप्राप्तिनिराकरणायैव श्रुतौ एकैवाद्वितीयपदानि वर्तन्ते। एतदपि [1]तत्रैवोक्तम्—

यथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ इति।

नन्वस्तु भेदत्रयं ब्रह्मणि इति [2]चेदाह तत्रैव—

सतो नावयवाः शङ्क्यास्तदंशस्यानिरूपणात्।
नामरूपे न तस्यांशौ तयोरद्याप्यनुद्भवात् ॥
सदन्तरं सजातीयं न वैलक्षण्यवर्जनात्।
नामरूपोपाधिभेदं विना नैव सदोभिदा ॥
विजातीयमसत्तत्तु न खल्वस्तीति गम्यते।
नास्यातः प्रतियोगित्वं विजातीयाद्भिदा कुतः ॥ इति।

तस्माद् ब्रह्मणि त्रिविधभेदनिवारणाय प्रवृत्तेयम् 'एकमेवाऽद्वितीयम्' इति श्रुतिः, पूर्वोक्त-रीत्या ब्रह्मज्ञानानन्तरमपि व्यावहारिकजगतोऽनिषेधाद् व्याहन्येतेति चेदत्रोच्यते—

ब्रह्मज्ञानेन हि मूलाविद्यानिवर्त्यते 'तमेव विदित्वातिमृत्युमेति' इत्यादिश्रुतेः, उपादान-निवृत्तौ हि तदुपादानकस्य कार्यस्य नितरां निवृत्तिरिति सर्वदर्शनसिद्धान्तः।

तथा सति मूलाज्ञानरूपोपादाननिवृत्तौ न तदुपादानकस्य जगतः स्थितिः। कथञ्चैवं सति तेन सर्वाऽद्वैतश्रुतेस्तात्पर्यभङ्ग इति सर्वमवदातम्।

सा चेयमविद्याऽनादिरूपा सान्तैव, न त्वनन्ता। कृतप्रहाणाकृताभ्यागमप्रसङ्गो हि अनादित्वस्वीकारे प्रमाणम् 'ब्रह्मविदाप्नोति परं पदम्' इत्यादिश्रुत्या च, तस्याः सान्तत्वं प्रमाणीक्रियते।

जीव ईश्वरो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितो योगः षडस्माकमनादयः ॥

इत्यत्र षण्णामनादिता उक्ता। एतेषु षट्सु विशुद्धा चिदेवानादिरनन्ता, ततोऽतिरिक्ता अनादयः सान्ताश्च।

माया द्वैविध्यं पूर्वमुक्तम्—इमामेव मायां मूलाऽविद्या तूलाविद्येति व्यवहरन्ति। मूलाऽविद्या व्यावहारिकजगदुद्भावयति समुद्भासयति च। अस्याश्च मायाया अनादित्वमपि कल्पित-मेवाश्रयस्या कल्पितत्वाश्रितधर्मस्याऽपि कल्पितत्वात्। ततश्च नाद्वैतभङ्गः। अस्याश्च त्रिगुणात्मिकायाः परिणामविशेषेष्वन्तःकरणेषु शुद्धबुद्धमुक्तस्वभावस्यापि चिदानन्दस्वरूपब्रह्मणः प्रतिबिम्बरूपेणाभासमानत्वाद् जीवत्वव्यवहारः। अनेन 'जीवो ब्रह्मैव नापरः', 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्', 'रूपं रूपं प्रतिरूपो बभूव' इत्यादिश्रुतयोऽपि समाधीयन्ते।

एवञ्चान्तःकरणेषु चित्सम्पर्कादिवावभासमानेषु चिदध्यासवत् चित्स्वरूपे ब्रह्मण्यपि अविद्यैवाहङ्काराध्यासाद् 'अयो दहति' इत्यादिवत् परस्परस्वरूपाध्यासवशात् जानेऽहमिति

१. पञ्चदशी—२।२१। २. पञ्चदशी—२।२२।२४।

प्रतीतिर्जायते। अनेन च अयःपिण्डस्य ( लौहस्य ) स्वतो दाहकत्वाभावेऽपि तस्मिन् अग्निप्रवेशे तन्मयत्वेनाग्निधर्मदाहकत्वस्य वह्नेश्च अयसश्चतुष्कोणाद्याकारस्वरूपावधारणेनान्योन्यधर्माध्यासेन 'अयो दहति' इति व्यपदेशो भवति। तथैवान्तःकरणविशेषरूपाहङ्कारे चिदाभासात् चित्स्वरूपे चाहङ्काराभासात् परस्पराध्यासाद् अविद्याप्रभावादेव 'अहं जाने' इति व्यपदेशोऽनादिकालादेवोपपद्यते। तत्र मायोपाधिरात्मा ईश्वरः, अविद्योपाधिर्जीवः। तदुक्तम्—'कार्योपाधिरयं जीवः [१]कारणोपाधिरीश्वरः' इति।

मायाविद्ययोरभेदे तु तत्परिणामभूतान्तःकरणोपाधिको जीव इति विशेषः। अन्तःकरणानां नानात्वेन तत्त्वज्ञानरूपविद्यया एकस्यान्तःकरणादिरूपोपाधिनाशे न सर्वस्य मोक्ष इति व्यवस्था। एतेन विद्यया एकस्या अविद्याया नाशे कथं न सर्वस्य मोक्ष इति शङ्काऽपि स्वतो विलीयते।

इयं माया त्रिगुणात्मिका। एतदुपादानकं जगदपि त्रिगुणात्मकमेव। मायोपाधिक ईश्वरो जगतो निमित्तम्। माया च परिणाम्युपादानभूता। ईश्वरस्य जगदधिष्ठानतया विवर्तोपादानकारणतया शक्तिशक्तिमतोरभेदादेव लूतातन्तुवद् अभिन्ननिमित्तोपादानत्वव्यवहार ईश्वरे भवति।

तथा हि लूताया देहिदेहिनोरभेदाध्यासादेव जालं प्रति अभिन्ननिमित्तोपादानकारणत्वव्यवहारवदेव मायामायाविनोरेभेदाध्यासादेवाभिन्ननिमित्तोपादानहेतुत्वमुपपद्यते, तदेवोक्तम् :—

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते॥ इति।

इयं चाविद्या शक्तिद्वयवती। ते च शक्ती आवरणशक्तिः, विक्षेपशक्तिश्च। तत्रावरणशक्तिर्द्विविधा—अभानापादिका, असत्त्वापादिका च। ब्रह्म नास्ति न भातीति व्यपदेशद्वयप्रयोजकम्। स्वस्वरूपाच्छादनद्वारा क्रमशोऽसत्त्वापादकम्, अभानापादकश्चाज्ञानम्। इदं च शक्तिद्वयम् अपरोक्षानुभवेन नश्यति। परोक्षाऽनुभवेन चासत्त्वापादकमेव तद्विनश्यति। कार्योत्पत्त्यनुकूला शक्तिर्विक्षेपः। सा चेयं मायाऽऽवरणशक्त्या ब्रह्मणो वास्तविकं स्वरूपमावृत्य विक्षेपशक्त्या तत्र ब्रह्मणि विवर्तरूपमनिर्वचनीयं त्रिगुणात्मकमुत्पादयति स्वसदृशम्। तदुक्तम्—'विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत्' इति।

इयं मूलाऽविद्या क्व तिष्ठतीत्यत्र प्रस्थानभेदेन मतद्वयमस्ति। आचार्यश्रीवाचस्पतिमिश्रमतेऽस्या अविद्यायाः विषयो ब्रह्म, आश्रयो जीव इति। श्रीविवरणाचार्यमते तु ब्रह्मैव अविद्याया आश्रयः, तदेव विषयः। तथा चोक्तम्[२]—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नाऽपि गोचरः॥ इति।

अथैतन्मते कोटिसूर्यसमप्रभे ब्रह्मणि तमःस्वरूपाऽविद्या कथं तिष्ठति, कथं च सा तदाच्छादयति ?

---

१. सिद्धान्तलेशः १।३२।
२. अद्वैतसिद्धिः, पृ० ५७७।

अत्रोच्यते—यथा सौरालोकः सर्वत्र पटादिसु सामान्यरूपेण वर्तमानोऽपि न किमपि वस्तु दहति, स एव सूर्यकान्तमण्यारूढः सन् पटादिदाहप्रयोजको भाति । तथैव शुद्धं चैतन्यं न खल्वविद्याविरोधि, प्रत्युत तदेव शुद्धं चैतन्यम्, अविद्यासाधकम् । ब्रह्माकारवृत्त्यारूढं सत् तदेवाविद्यानिर्वर्तकमिति वेदान्तप्रक्रिया । द्वितीये तु ऽज्ञानबाधकसाक्षिचैतन्ये चिदात्मनि 'अहमज्ञः' 'मामहं न जानामि' इत्येवंव्यवहारस्य सर्वसाधारणतया सिद्धत्वात् तस्याश्चाविद्यायाः स्वप्रकाशस्याप्यात्मन आच्छादकत्वं सम्भवति । 'कूटस्थं ब्रह्म नास्ति, न भाति' इति प्रतीतेरात्माऽऽवरणप्रयोजकत्वाच्चाज्ञानरूपाऽविद्यायास्तदाच्छादकत्वसम्भवात् ।

नन्वज्ञानस्य ब्रह्मसम्बन्धेऽसङ्गो ह्ययमिति श्रुतिविरोध इति चेदयमुच्यते—यथाऽज्ञानस्य कल्पितत्वेन नाद्वैतहानिः, तथैव तत्सम्बन्धस्यापि कल्पिततया नास्त्यसङ्गत्वविलोप इति । अविद्याया महात्म्यविषये उक्तम्[1]—

नन्वविद्या स्वयं ज्योतिरात्मानं ढौकते कथम् ।
सा कूटस्थाऽद्वितीयञ्च सहस्रांशुतमो यथा ॥
प्रसिद्धत्वादविद्यायाः साऽपह्नोतुं न शक्यते ।
आत्मनो न हि सा युक्ता विना नात्मा तया न हि ॥
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तं विद्यादात्मनो मायां यथाभासो तथा तमः ॥ इति ।

सा चेयमविद्या भावरूपेति पूर्वमेवोक्तम् । भावत्वाऽभाव उपादानत्वहानिः ।

भावरूपायां तस्यामस्ति प्रयोगो यथा—'मैत्रप्रमा, मैत्रगतप्रमा-प्रागभावातिरिक्ता-नादिनिर्वर्तिका, प्रमात्वात् चैत्रप्रमावत्' इति । अनेनानुमावेन भावरूपमज्ञानं सिद्धयतीति नूनं मन्तव्यम् ।

ननु अज्ञानस्य भावरूपत्वे नञः का गतिरिति चेत्, अत्रोच्यते—न चात्र नञ्-शब्दोऽभावार्थकः, किन्तु असुरादिशब्देष्विव विरोध्यर्थक एव । तथाहि यथा—असुर इत्यत्र सुरविरोधी इत्ययमर्थः, अधर्म इत्यत्र धर्मविरोधी अर्थः; तथैव अविद्या इत्यत्रापि विद्याविरोधीत्येवार्थः, न तु अभावः । तथा चोक्तम्[2]—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षड्विधाः स्मृताः ॥ इति ।

तदेवमविद्याविषये किञ्चिदुक्त्वा विरमामि ।

---

१. श्रीमद्भागवतम् ९।२७ ।
२. वैयाकरणभूषणसारः, पृ० ३५३ ।

●●●

# व्याकरणदर्शनस्य बीजचिन्ता

श्रीरामेश्वरप्रसादत्रिपाठी
अनुसन्धाता
काशीहिन्दूविश्वविद्यालयः, वाराणसी

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते ॥
इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

मानवः स्वभावतः चतुर्ष्वप्याश्रमेषु समाजसम्बन्धेनैव जीवनयात्रां निर्वोढुमिच्छति[1] विद्याऽध्ययनप्रधाने ब्रह्मचर्याश्रमे गुरोः सहाध्यायिनां सम्पर्केण भिक्षाचरणे गृहस्थानां सम्पर्केण च सामाजिकता स्पष्टमेवाङ्कुरिताऽनुभूयते[2]। गृहस्थाश्रमे तु भार्यया भ्रातृपुत्रादिभिरन्यान्य-सम्बन्धिभिश्च सा सुष्ठु विकसिता प्रतीयते[3]। वानप्रस्थाश्रमे वने एकान्तचर्य्याचरणेऽपि अग्नि-होत्रादिकर्मणा शास्त्रविहितदानादिक्रियया च समाजसम्बन्धो वर्तत एव[4]। त्यागप्रधाने सन्यासाश्रमेऽपि भिक्षाद्याचरणेन जनतायै सन्मार्गोपदेशादिना सामाजिकता नैव व्यपगता[5]। सहसैव वनस्थानां सन्न्यासिनां च स्वस्वसमाजोऽपि अपलपितुं कथं शक्येत ?

अस्या मानवीयसामाजिकताया निर्वाहः परस्परमभिप्रायसङ्क्रमणेनैव सम्भवति। तच्च व्यक्तशब्दानां[6] प्रयोगेणैव सम्पादयितुं शक्यते[7]। यद्यपि अक्षिनिकोचमुखविकासादिभिः

---

१. ब्रह्मचर्यं परिसमाप्य गृहीभवेत्, गृहीभूत्वा वनीभवेत्, वनीभूत्वा प्रव्रजेत्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वनाद्वा ( जाबालोपनिषद्–४ )।

२. मनुस्मृतिः, अ० २१ । ३. मनुस्मृतिः, ३–४–६ ।

४. मनुस्मृतौ—वानप्रस्थो जटिलः……दद्यादेव न प्रतिगृह्णीयात्, दद्यादेव पितृमनुष्येभ्यः, स गच्छेत् स्वर्गमानन्त्यम् ( ३।४५ ) मिताक्षरायामुद्धृता वसिष्ठस्मृतिः ।

५. सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकारामः परित्यज्य भिक्षार्थी ग्राममाश्रयेत् ॥ ( याज्ञ० स्मृतिः ३।५९ )

६. येषां वाच्यकारादयो वर्णा व्यज्यन्ते……त इमे व्यक्तवाचः । ( महाभाष्यम् १।३।४८ )

७. (क) अभिनयापि व्याप्तिमन्तः पाणिविहाराक्षिनिकोचादयः, तैरेव कार्यसिद्धिरस्त्विति । सत्यम्, अभिनया व्याप्तिमन्तः, न त्वणीयांसः, ते महता यत्नेन व्याप्नुवन्ति, न च निःसन्दिग्धं कुर्वन्ति । तत्प्रतीतार्थसम्बन्धस्य नेतरस्य । शब्दस्त्वपरिमितमर्थमल्पीयसा यत्नेन उच्चारितो व्याप्नोति । तस्मादणीयस्त्वादिति विशेषहेतूपपत्त्या शब्देनैव संज्ञाकरणं व्यवहारार्थं लोके इत्युपपन्नम् ( निरुक्तम्, दुर्गाचार्यवृत्तिः १।२।५ )।

(ख) अर्थगत्यर्थं शब्दप्रयोगः। अर्थं प्रत्याययिष्यामि इति शब्दः प्रयुज्यते। (म० भा० ३।१।७)

(ग) अर्थगत्यर्थो हि शब्दप्रयोगः ( धर्मोत्तरप्रदीपः ३।३४ )।

(घ) अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ( वा० प० १।१३ )।

(ङ) सर्वो हि शब्दोऽर्थप्रत्यायनार्थं प्रयुज्यते ( त० वा० १।३।८ )।

(च) सदपि वाग्व्यवहारेणानुपगृहीतमर्थरूपमसता तुल्यम् (वा० प० १–१२२) स्वोपज्ञवृत्तौ।

सङ्केतैरपि तस्य साधनं भवति । तथाऽपि तत्साधनम्, असन्दिग्धं सरलं चास्ति इति वक्तुं न शक्यते । मुखविकासादिभिर्हर्षस्याभिव्यक्तिरवश्यं भवति, परन्तु केन कारणेनायं हर्षः समुत्पन्नः ? किं परीक्षायाः साफल्येन ? किं वा पुत्रजन्मना ? किं वा धनावाप्त्या ? इत्यादि बोधनं ततो न सम्भवति । प्रकरणादिसाहाय्येनापि तत्कारणनिश्चयः सर्वत्र कर्तुं न शक्यते । वस्तुतस्तु किमपि ज्ञानं तादृङ् नास्ति, यच्छब्दानुगमादृते सम्भवेत् । सर्वं ज्ञानं शब्दानुस्यूतमेवास्ति । पशुपक्ष्यादीनामपि ज्ञानं तदीयशब्दानुविद्धमेव ।

तत्र बाह्यशब्दानुवेधासम्भवे आन्तर( मध्यमारूप )शब्दानुवेधः सर्वत्र सम्भवत्येव[1] । अद्वैतवेदान्तिसम्मतेऽनिर्वचनीयतावादेऽपि व्यवहारदशायां सर्वत्र ज्ञाने शब्दानुवेधस्वीकारे का हानिः ?

अत एव ब्रह्मतत्त्वप्रतिपादनायानेके ग्रन्थाः सन्त्येव । परमार्थदशायां तु अखण्डाकारवृत्तौ जातायां समस्तस्य प्रपञ्चस्य बाधे सति नास्ति किलौपाधिकं ज्ञानम्, नाप्यौपाधिकः शब्द इति कुत्र कस्यानुवेधः स्यात् ? अनौपाधिकं ज्ञानं तु परा वाग्रूपं स्वरूपज्योतिरेव स्वयंप्रकाशमानमस्ति । तस्यामवस्थायां शब्दब्रह्मवादिनां मतेऽपि कथं शब्दानुवेधः ? तस्य ज्ञानस्य शब्दस्वरूपत्वात् । अभिधेयत्वं केवलान्वयि इति मन्वाना दार्शनिकाग्रेसरा अपि प्रकारान्तरेणोक्तं सिद्धान्तं समर्थयन्त एव । यच्चापि बहुभिर्विद्वद्भिरुच्यते — इक्षुक्षीरगुडादीनां माधुर्यस्य महदन्तरं सरस्वत्यापि बोधयितुं न शक्यते[2] । एवमेव सर्वस्यापि मनोगतभावस्य शब्दतो बहिःप्रकाशनं विदुषां कृतेऽपि कठिनतममेव स्यादित्यादि[3] ।

तत्रेदमुच्यते—इक्षुरसादीनां माधुर्यस्य बोधने विशेषशब्दानामभावेऽपि सामान्यशब्दस्त्वस्त्येव । अन्यथा महदन्तरमिति स्वयं भगवान् कथं प्रयुञ्जीत ? नहि ज्ञानमात्रे शब्दानुवेधं वदतामेषा प्रतिज्ञा यद् विशेषत एव शब्दा अनुस्यूता इति । द्वितीयपक्षे तु न

---

१. (क) वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥ ( वा० प० १।१२४ )

(ख) वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद् दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः ॥ ( वा० प० १।१०८ )

(ग) इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ ( काव्य०—४ )

(घ) ज्ञानस्य शब्दत्वापत्तिरिति दर्शनमत्र महाभाष्यकारस्य । ( म० भा० प्र० १।४।२९ )

२. इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥ ( काव्यादर्शः )

३. (क) श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ॥
( मालविकाग्निमित्रम्—१-१६ )

(ख) भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि विशेषयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित् प्रकाशताम् ॥ ( किरात० १४।४ )

किञ्चिद्धीयते। काठिन्यं भवतु नाम, तावतापि सिद्धान्तः स्वस्थाने स्थिर एव चकास्ति। अत एव कविकुलगुरुणा कालिदासेन—'तादृशस्यात्मगतभावस्य प्रकाशयिता शिक्षकाणां धुरि प्रतिष्ठापयितव्य इत्येवं सम्मानितः'। महाकविमारविणाऽपि च गभीरार्थस्य प्रकाशकः 'उपपन्न-नैपुणः' इत्येवं रीत्या समादृतः।

किञ्च, नहि ज्ञानमात्रे शब्दानुवेध इत्यनेनैव शब्दानां महत्त्वम्, अपि तु समस्तस्य प्रपञ्चस्य मूलमपि अनादिनिधनं शब्दतत्त्वमेवेति पदार्थमात्रेऽपि उपादानतया तस्यानुवेधोऽभ्युपेयते वेदप्रामाण्यवादिभिर्दार्शनिकमूर्धन्यैः[१]। एवञ्चाभिप्रायप्रकाशनाय शब्दादृते सरलतमं निःसन्दिग्धं सर्वोत्कृष्टं साधनं नास्तीति निश्चप्रचम्। तत्र क्रियाकारकपदघटितो वाक्यात्मक एव शब्द इत्यपि निश्चितमेव। अत एव व्याकरणशास्त्रे वाक्यस्फोटः सिद्धान्तितः[२]।

यद्यपि 'पदप्रकृतिः संहिता' इत्यत्र पदप्रकृतिशब्दे षष्ठीतत्पुरुषेण वाक्यानां मूलत्वं पदानां च विकृतित्वमायाति। बहुव्रीहिसमासेन तु पदानां मूलत्वं वाक्यानां तद्विकारभूतत्वमिति [३]विपरीतमायाति। तथापि तैत्तिरीयसंहितादर्शनेन[४] निरुक्ते दुर्गाचार्यवृत्तिग्रन्थेन[५] च संहिता-सम्पन्नस्य वाक्यस्यैव प्रकृतित्वमवगम्यते। एवञ्च भाषाया मूलतो वाक्यात्मकत्वेऽपि सौकर्य्येण तस्या ज्ञानाय चाचार्या अन्वयव्यतिरेकाभ्यां वाक्येषु पदानि, पदेषु प्रकृतिप्रत्ययादीनि च विभागरूपेण [६]कल्पितवन्तः।

---

१. (क) अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥ ( महाभा० शा० प० २३२।२४ )
(ख) सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥ ( म० स्मृ० १।२१ )
(ग) अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ ( वा० प० १।१ )

२. (क) पदेन वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥ ( वा० प० १।७३ )
(ख) वाक्यस्फोटोऽति निष्कर्षे तिष्ठतीति मतस्थितिः। ( वै० भू० सा० का० ६१ )

३. पदप्रकृतिभावश्च वृत्तिभेदेन वर्ण्यते।
पदानां संहिता योनिः संहिता वा पदाश्रया॥ ( वा० प० २।५९ )

४. 'किं पुनरत्र ज्यायः—पदानां प्रकृतित्वम्, संहिताया विकारत्वम्, उत वा विकारत्वम्, पदानां प्रकृतित्वं संहिताया इति? उच्यते—संहितायाः प्रकृतित्वं ज्यायः, तस्मात् संहितैव प्रकृति-रित्येव साधीयः' इति—( नि० दुर्गा० १।१७।४ )।

५. "वाग्वै पराच्यव्याकृताऽवदत्। ते देवा इन्द्रमब्रुवन् इमां नो व्याकुर्विति। तामिन्द्रो मध्यतोऽ-वक्रम्य व्याकरोत्"—( तै० सं० ६।४।७ )।

६. म० भा० १।३।१।

एवमेव वाक्यार्थेऽपि पदार्थकल्पना, पदार्थे च प्रकृत्याद्यर्थकल्पना [1]कृता। मन्ये, इयमेवांशिकार्थकल्पना वाक्यांशपदांशकल्पनयोर्मूलम्। कल्पिताभ्यां प्रकृतिप्रत्ययाभ्यां पदानां तथा कल्पिताभ्यां पदाभ्यां पदैर्वा वाक्यानां साधुत्वं सारल्येन प्रतिपादयितुं[2] व्याकरणशास्त्रस्य रचना कृता शब्दतत्त्वविद्भिराचार्यैः। अत एव चास्यापरं नामधेयं शब्दानुशासनमित्युक्तं भगवता पतञ्जलिना[3]।

अत्र शब्दानां ज्ञानं श्रवणेन्द्रियेणैव भवति—निरर्थकं व्याकरणशास्त्रमिति शङ्काऽपि दूरापास्ता। शब्दानां स्वरूपं श्रवणेन ज्ञातं भवति, तर्हि भवतु नाम। तस्य साधुत्वं तु व्याकरण-शास्त्रमात्रसमधिगम्यम्। एतच्च साधुत्वं जातिविशेषरूपं शब्देषु पूर्वतोऽत्रस्थितमेव। व्याकरण-शास्त्रेण शिष्टप्रयोगेण चाभिव्यज्यते। भगवता भाष्यकृता त्वेकत्रैतदभिव्यञ्जनं शिष्टप्रयोगेणैव, व्याकरणं तु शिष्टपरिज्ञानार्थमित्यप्युक्तम्[4]।

एतत्तु सुनिश्चितमेव—यद् द्विजन्मनां भाषा कदाचित् प्रायेण संस्कृतभाषाऽऽसीत्। द्विजातीयशिष्टताया आदिमः कालो वैदिकयुग एवासीत्। तेषु भारतीयसाहित्यमूर्धन्येषु वेदेष्वेव व्याकरणशास्त्रस्य बीजानि लभ्यन्ते।

अतश्चैतत् सुस्पष्टं वक्तुं शक्यते यद् व्याकरणशास्त्रस्य बीजवपनं वैदिकयुग एव जातम्। उत्तरयुगे तस्य विकासश्चिरकालतोऽविच्छिन्नरूपेण प्रचलन्नागच्छतीति शम्।

---

१. म० भा० १।२।४५।
२. (क) साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।
अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्॥ ( वा० प० १।१४२ )
(ख) अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥ ( वा० प० १।१३ )
३. "शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्"। ( म० भा० १।१। आ० १ )
४. कैः पुनरुपदिष्टानि ? शिष्टैः। ·········· यदि तर्हि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते, शिष्टपरिज्ञानार्था अष्टाध्यायी।
५. "एतस्मिन् आर्यावर्ते आर्यनिवासे ये ब्राह्मणाः कुम्भीधान्याः, अलोलुपाः, अगृह्यमाणकारणाः, किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारङ्गताः, तेऽत्र भवन्तः शिष्टाः"।
( म० भा० ६।१।१०९ )।



# ध्वनिप्रसादनम्

पं० श्रीवायुनन्दनपाण्डेयः

साहित्यव्याकरणाचार्यः, साहित्यप्राध्यापकः, साहित्यविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

शक्तिभवत्यभिव्यक्तीनामाधारं परमेश्वरम् ।
स्मारं स्मारं गिरां सारं ध्वनितत्त्वं प्रसादये ॥

सहृदयहृदयानन्दसन्दोहनिस्स्यन्दिवाग्वैभवविलासप्रकाशिसमुचितललितचतुरमधुरवचन-रचनाकुशलकविकर्मकमनीयकाव्याङ्गभूतं ध्वनिं निरस्यासम्भावनाविपरीतसम्भावनादिशङ्का-कालुष्यं प्रत्यतिष्ठपद्विदग्धमनोमन्दिरे सहृदयसार्वभौमो राजानक आनन्दवर्धनाचार्य इति विख्यातमेव सङ्ख्यावतां मण्डले ।

तत्र प्रकटितविश्वरूपस्य हरेराकृतिरिवानेकेऽर्था अनेके भेदाश्च ध्वनेर्मनोगोचरतामञ्चन्ति विपश्चिताम् । तद् यथा—

(क) ध्वनतीति ध्वनिर्व्यञ्जकः शब्दोऽर्थश्च ।

(ख) ध्वन्यतेऽसौ ध्वनिर्व्यङ्ग्योऽर्थः ।

(ग) ध्वननं ध्वन्यतेऽनेनेति वा ध्वनिर्व्यञ्जनाव्यापारः ।

(घ) ध्वन्यतेऽस्मिन्निति ध्वनिः काव्यविशेष इति ।

उक्तञ्च ध्वन्यालोके[1]—"वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्व-साम्याद् ध्वनिरित्युक्तः" इति ।

विवृतमेतद् अभिनवगुप्तपादाचार्येण[2]—'अत्र चकारमन्तरापि गामश्वं पुरुषं पशुमितिवत् समुच्चयो बोध्यः । ततो वाच्योऽर्थः, वाचकः शब्दः, सम्मिश्र्यते विभावानुभावसंवलनया (सम्बन्धेन) इति सम्मिश्रो व्यङ्ग्योऽर्थः । शब्दनं शब्दः शब्दव्यापारः, स च नाभिधातात्पर्यलक्षणरूपः, अपि त्वात्मभूतो व्यञ्जनाव्यापारः शब्दात्मा पदेनोक्तः । काव्यपदेन व्यवहृतोऽप्यर्थो व्यञ्जकशब्दार्थ-व्यञ्जनाव्यापाराभिव्यक्तरसादिरूपव्यङ्ग्यार्थ इत्येतद्रूपध्वनिचतुष्टयमयत्वाद् ध्वनिरेवोच्यते' इति ।

तत्र शब्दब्रह्मणः सारभूतस्यामुष्यध्वनेः रसज्ञजनमनःप्रकाशमानस्य स्वरूपं प्रायेण निषेधमुखेनैवोपपादितम्, विधिमुखेन त्वालङ्कारिकग्रन्थेषु क्वचिदेव लघु लक्ष्यते ।

यत्रापि लक्ष्यते तत्रापि तटस्थलक्षणं प्रायेण न सर्वत्र स्वरूपलक्षणम्, यथा ब्रह्मणः स्वरूपं श्रुताविदं नेदं नेति[3] विधया व्यतिरेकमुखेन बहुश उपपादितम् । क्वचित् तटस्थलक्षणमपि,

---

१. प्रथमोद्योते । २. तत्रैव लोचने ।

३. "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादिना ।

यथा—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति[१]" इति। स्वरूपलक्षणं तु—'सत्यं ज्ञानमनन्तं ब्रह्म'[२] इति। तद्वत्—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥[3] इति

कारिकाकारो वृत्तिकारश्च तत्रैव "सर्वेषु च तेषु प्रभेदेषु तस्य वाच्यादन्यत्वम् तथा हि क्वचिद्वाच्ये विधिरूपे प्रतिषेधरूप[४] इत्यादिना वाच्याद् भिन्नत्वम्", 'भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः[५]' इत्यादिना लक्ष्यादन्यत्वमिति निषेधमुखेन लक्षयाञ्चक्रतुः।

मम्मटश्च—लक्षणामूलव्यञ्जनां निरूपयन् 'नाभिधा समयाभावात् हेत्वभावान्न लक्षणा[६]' इत्यादिना व्यतिरेकविधयैव विवेचयामास। स्वरूपतटस्थलक्षणे च "तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिरपि काव्यलक्षणविधायिनां बुद्धिभिरनुन्मूलितपूर्वम्[७]" इत्यादिना वृत्तौ—

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।
योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ[८]॥ इति।

मम्मटश्च—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्[९] ॥ इति

विश्वनाथश्च—

वृत्तीनां विश्रान्तेऽभिधातात्पर्यलक्षणाख्यानाम्।
अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम्[१०]॥
विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च[११]॥

स्वरूपलक्षणं तु क्वचिदेव लक्ष्यते, यथा आनन्दवर्धनाचार्यः—"स ह्यर्थो वाच्यासामर्थ्याक्षिप्तम्[१२]" इति। अत्र अभिनवगुप्तपादाचार्यः 'वाच्यसामर्थ्याक्षिप्तमिति भेदत्रयव्यापकं सामान्यलक्षणमित्याह स्म। यद्यपि ध्वनिरभिधादिवच्छब्दस्यैव व्यापारः तथाऽप्यर्थसामर्थ्यं सहकारिता-

---

१. तैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये प्रथमोऽनुवाकः। २. तै० उपनिषदि।
३. ध्वन्यालोके प्रथमोद्योते चतुर्थकारिका। ४. ध्व० लो० प्र० उ०।
५. ध्व० लो० प्र० उ० १४ का०। ६. का० प्र० द्वि० उ०।
७. ध्व० लो० प्र० उ०। ८. ध्व० लो० प्र० उ० १३ तमा कारिका।
९. का० प्र० द्वि० उ०। १०. सा० द० प० परि०।
११. सा० द० द्वि० परि०। १२. ध्व० लो० प्र० उ० वृत्तौ।

मुपपद्यते शब्दशक्त्युद्भवेऽपि प्रभेदेऽर्थसामर्थ्यादेव ध्वनिप्रतीतिरिति । सर्वत्रार्थसामर्थ्याक्षते:[1], इति निजगाद ।

'..............'यत्सोऽर्थान्तरयुक् तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मत:[2] ॥ इति ।

मम्मट:—

शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रय: ।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता[3] ।। इति ।

विश्वनाथश्च विशदयत: ।

एवम्—अर्थसामर्थ्याक्षिप्तत्वं ध्वनित्वमिति सामान्यलक्षणं फलितम् । तत्रार्थसामर्थ्या· क्षिप्तं च ( वस्तुरूपम् ), अर्थसामर्थ्याक्षिप्ताश्च ( अलङ्कारा: ), अर्थसामर्थ्याक्षिप्ताश्च ( रसादय: ) इत्यर्थसामर्थ्याक्षिप्तमिति एकशेषेण वस्त्वलङ्काररसादिरूपभेदत्रयव्यापकं लक्षणम् ।

अत्रार्थसामर्थ्याक्षिप्तमिति लक्षणमव्याप्तम्, असंल्लक्ष्यक्रमध्वनेरनर्थकवर्णादिभिरपि प्रकाशनात् । तदुक्तं ध्वनिकारेण—

यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।
वाक्ये सङ्घटनायाश्च सप्रबन्धेऽपि दीप्यते[4] ॥

अथ च—

सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभि: ।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रम: क्वचित् ।। इति ।

आलोककारेण चोदाहृतम्—'न्यक्कारो ह्ययमेव मे यदरय:' इत्यादि । तत्र 'मे' इत्यत्र षष्ठ्या व्यञ्जकत्वं ममापि लोकरावणस्य वध्यघातकभावसम्बन्ध इति सम्बन्धानौचित्यमित्यादि । तत्र धातुप्रातिपदिकप्रत्ययनिपातातिरिक्तानामेकवर्णानामनर्थकत्वात्—'न केवला प्रकृति: प्रयोक्तव्या नापि केवल: प्रत्यय:' इति प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमाच्च केवलप्रकृति-प्रत्यययोश्च लौकिकार्थाभावाद् वर्णप्रकृतिप्रत्ययादिप्रकाश्यत्वाद् ध्वनेरर्थसामर्थ्याक्षिप्तमिति लक्षणमव्याप्तमिति न शङ्क्यम्, अर्थसामर्थ्याक्षिप्ता एव रसादयो भासन्ते, परं व्यञ्जक: सोऽर्थोऽपि शब्दविशेषप्रतिपादित एव । तदर्थप्रतिपादने कदाचित् प्रकृते: प्रत्ययस्य प्रकृत्यंशा-दिकस्य च प्राधान्यम्, अतोऽन्वयव्यतिरेकाभ्यां तेषां व्यञ्जकत्वमवधार्यते ।

यथा 'निहन्ति राक्षसकुलम्' इत्यत्र तिप्प्रत्ययार्थो वर्तमानकालोऽपि । स च प्रारब्धा-परिसमाप्तिरूप:, तेन च व्यङ्ग्यो यद् रामो राक्षसान् न हनिष्यति, न वा जघान, अपि तु प्रतिदिनं हनन्नेव वर्तते ( हन्तुमुपक्रान्तो न च समापेति ) मदधिष्ठितेऽपि देशे मां विरुन्धन्नेवास्तीति यथा यथा विविच्यते, तथा तथा चमत्कृतिमाधत्ते, अतस्तिङो व्यञ्जकत्वोक्ति: सङ्गच्छत इति युक्तं लक्षणम् ।

---

१. तत्रैव लोचने ।       २. का० प्र० द्वि० उ० २० का० ।
३. सा० द० द्वि० परि० २१ तमा कारिका ।
४. ध्व० लो० ३ उद्योते ।       ५. तत्रैव ।

पण्डितराजो जगन्नाथश्च--व्यक्तिश्च भग्नावरणादिति लक्षणमवोचत्[1]। नागेशश्च स्फुटमव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यं लक्षणं लक्षयाञ्चक्रे। तद्यथा—'मुख्यार्थबाधादिग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिमाद्युद्‌बुद्धसंस्कारविशेषो व्यञ्जना'[2] इति।

अत्र लक्षणायामतिप्रसक्तिवारणाय मुख्यार्थेत्यादि। मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयक इति स्वरूपकथनम्; वक्त्रादिवैशिष्ट्यज्ञानेत्यादिसहकारिकथनम्। एवञ्च 'नियन्त्रितार्थविषयकधीजनकत्वं शब्दव्यञ्जना। वक्त्रादिवैलक्षण्यहेतुका या प्रतिभावतामन्यार्थधीस्तद्धेतुव्यापारत्वमर्थव्यञ्जना। शब्दस्य पर्यायपरिवृत्तिसहत्वासहत्वाभ्याञ्च तत्त्वम्' इति।

एवं कृते सति ध्वनिलक्षणे कल्पिता अभाववादिनः प्रत्युक्ताः। तथा हि केचिदाक्षिपेयुर्यत्—काव्यस्य शब्दार्थौ शरीरमित्यत्र न केषाञ्चिदपि विमतिः। शब्दविशेषः काव्यमिति वदतां मतेऽप्यर्थो विशेषणतयाऽपेक्षित एव। तत्र यदि शब्दोऽर्थो वा ध्वनिपदेनाभिधीयते, तदा नामान्तरमात्रकरणे को गुणः?

अथ 'शब्दस्यार्थस्य च यच्चारुत्वं स ध्वनिः' इत्युच्यते, तथापि स्वरूपाश्रितं सङ्घटनाश्रितं चेति द्विविधं चारुत्वम्। तत्र शब्दानां स्वरूपमात्रकृतं चारुत्वं शब्दालङ्कारेभ्यः, सङ्घटनाश्रितं चारुत्वञ्च शब्दगुणेभ्यः। एवमर्थानां स्वरूपमात्रनिष्ठं चारुत्वमर्थालङ्कारेभ्यः सङ्घटनापर्यवसितमर्थगुणेभ्यः, अतो न गुणालङ्कारव्यतिरिक्तो ध्वनिः।

उपनागरिकाद्या वृत्तयोऽनुप्रासरूपा वैदर्भीप्रभृतयो रीतयश्च गुणानतिरिक्तवृत्तय एव। अत्रानुमानाकारश्चेत्थम्—विवादास्पदं ध्वनिर्गुणाऽलङ्कारव्यतिरिक्तत्वाभाववान् चारुताहेतुत्वात्। यो यो गुणाऽलङ्कारव्यतिरिक्तो न स चारुत्वहेतुः। असाधुदुःश्रवत्वादिनित्यदोष इव इति।

शब्दार्थौ शब्दार्थचारुत्वहेतुर्वा ध्वनिर्मा भूदेतावता गुणालङ्कारव्यतिरिक्तः काव्यशरीरातिरिक्तश्चायमात्मा ध्वनिः सिद्ध इति शङ्कायामन्ये निगदेयुः—सहृदयहृदयाह्लादिशब्दार्थमयकाव्यस्य शब्दार्थौ शरीरम्, तच्चारुत्वहेतवो गुणा अलङ्काराश्चेति प्रसिद्धं प्रस्थानम्, तदतिरिक्तस्य नृत्यगीतादिप्रायस्य ध्वनेः काव्यात्मत्वेन स्वीकारे काव्यत्वहानिः स्यात्।

अनुमानप्रयोगश्च तत्र—विवादाध्यासितो ध्वनिर्न काव्यम्, शब्दार्थव्यतिरिक्तत्वात्, यद्यत् शब्दार्थव्यतिरिक्तं न तत् काव्यं नृत्यगीतादिवत्। ध्वनिरपि तथा, तस्मान्न स काव्यम्। एवं ध्वनिर्न काव्यसम्बन्धि, तद्‌गुणालङ्कारव्यतिरिक्तत्वात्। ये ये गुणालङ्कारव्यतिरिक्तास्ते न काव्यसम्बन्धिनो नृत्यगीतादिवत्। ध्वनिरपि तथा तस्मान्न तथेति।

अस्तु ध्वनिश्चारुत्वहेतुः शब्दार्थगुणाऽलङ्कारान्तर्भूतश्च, तथापि ध्वनिः काव्यात्मेत्यभिधानमपूर्वमेव पूर्वाचार्यैरनुक्तत्वादिति विचिकित्सायामपर आहुः—उक्तेषु चारुत्वहेतुष्वेवान्तर्भावान्नापूर्वः कश्चिद् ध्वनिः। शब्दार्थाभिधावैचित्र्याणामसङ्ख्येयत्वात् सम्भवत्यपि कस्मिंश्चित्

---

१. रसगङ्गाधरे रसनिरूपणे। २. लघुमञ्जूषायां व्यञ्जनानिरूपणे।

प्रकारलेशो कोऽयमत्यादरः का वाऽपूर्वसमाख्या । स च सामान्यलक्षणेन सङ्गृहीता एव । तदुक्तं वामनेन[1]—काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्कारा इति ।

भामहेनाऽप्युक्तम्—

वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः[2] ।। इति।

एवं शोभाहेतुत्वे गुणालङ्कारेभ्यो न व्यतिरिक्तः । व्यतिरिक्तत्वे वा न शोभाहेतुः । शोभाहेतुत्वे वा नादरास्पदम्,अतः प्रवादमात्रं ध्वनिरिति त्रिविधा अभाववादिनां विकल्पाः सम्भवन्ति। ते क्रमशः प्रत्युक्ताः । यथा—शब्दार्थशरीरं काव्यमित्युक्त्या शरीरानुप्राणकः कश्चिदात्माऽवश्यं स्वीकर्तव्यः । तत्र शब्दः शरीरभाग एव, नात्मा, सर्वजनसंवेद्यत्वात् । अर्थः सर्वजनसंवेद्यो न भवति । तथाप्यर्थमात्रेण काव्यत्वव्यपदेशे लौकिकवैदिकवाक्येष्वपि काव्यत्वप्रसक्तेस्तत्राप्यर्थ-सत्त्वादतोऽर्थस्य द्वौ भेदौ वाच्यः प्रतीयमानश्च । तत्र वाच्यः शरीरभाग एव । सहृदयश्लाघ्यः प्रतीयमानस्तु काव्यस्यात्मा । वाच्यार्थसवलितस्य प्रतीयमानस्य पृथग्भावे विमोहितहृदया वाच्यानुपमाद्यलङ्कारा नात्मत्वेन मन्यन्ते । यथा—चार्वाकाः शरीरादात्मनः पृथग्भावे विमोहिताः शरीरमेवात्मेति वदन्ति । अतो गुणालङ्कारव्यतिरिक्तो न ध्वनिः, चारुताहेतुत्वादिति । यदुक्तं तदसिद्धो हेतुर्ध्वनेरात्मरूपत्वात् । न ह्यात्मा देहस्य चारुत्वहेतुः ।

यदुच्यते प्रतीयमानस्य वाच्यार्थश्लाघास्वरूपातिशयहेतुत्वेन चारुताहेतुताऽस्त्येव, लोकेऽप्यात्मा शरीरस्य चारुत्वहेतुः, सर्वाभरणभूषितेऽपि शवशरीरे चारुत्वादर्शनादिति । तथापि व्यभिचारी हेतुः, प्रतीयमानसंवलिते वाच्यार्थेऽपि चारुताहेतुत्वसत्त्वाद् वाच्यार्थस्य च गुणालङ्कार-व्यतिरिक्तत्वादिति प्रथमेऽभाववादिनो निराकृताः ।

तदुक्तं ध्वनिकारेण ध्वनिलक्षणमुपक्रमता—

योऽर्थः सहृदयश्लाध्यः काव्यात्मेति व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ[3] ।।

अन्ये चाभाववादिनः—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु[4] ।।

इत्यादिना प्रतीयमानस्य वाच्यव्यतिरिक्तत्वं साधयता प्रत्युक्तास्तद् यथा—प्रसिद्धं वाच्यं धर्मि, प्रतीयमानेन व्यतिरिक्तेन तद्वत् । तथा भासमानत्वात् । लावण्योपेताङ्गनाङ्गवत् । अत्र 'सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयते' इति नियमानुरोधात् प्रसिद्धं धर्मीति च पदमुपात्तम्, न त्वनयोः पक्षकोटौ प्रवेशः ।

---

१. काव्यालङ्कारसूत्रे ।

२. काव्यालङ्कारे ।

३. ध्वन्यालोके प्रथमोद्योते द्वितीया कारिका ।

४. तत्रैव चतुर्थी कारिका ।

वाच्यस्यैव प्रतीयमानत्वमभ्युपगच्छतां मते स्वात्मकप्रतीयमानवत्त्वं सिद्धमिति सिद्ध-साधनवारणाय स्वव्यतिरिक्तत्वनिवेशः, अर्थाद् वाच्यं स्वव्यतिरिक्तप्रतीयमानसम्बद्धं स्वव्यति-रिक्तप्रतीयमानत्वेन प्रमीयमानत्वात् लावण्योपेताङ्गनाङ्गवदिति ।

एवम्--

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः[1] ।। इति ।

अर्थाद् यत्र गुणीकृतस्वरूपो वाच्यविशेषोऽर्थः; गुणीकृताभिधेयो वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः स काव्यविशेषो ध्वनिरित्युक्त्या वाच्यवाचकचारुत्वहेतुभ्य उपमाऽनुप्रासादिभ्यो विभक्त एव ध्वनेर्विषयः । अनेन तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति प्रत्युक्तम् । यदप्युक्तं प्रसिद्ध-प्रस्थानातिरेकिणो ध्वनेः स्वीकारे काव्यत्वहानेर्ध्वनिर्नास्तीति, तदप्ययुक्तम्, लक्ष्ये परीक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम् । ततोऽन्यत् कलामात्रत्वादालेख्यप्रख्यत्वा-दनुकारित्वाद्वा चित्रमेव ।

यच्चान्येन निगदितम्—चारुत्वहेतोर्ध्वनेश्चारुत्वहेतुषु गुणाऽलङ्कारादिष्वन्तर्भाव इति तदप्यविचारिताभिधानम् । गुणाऽलङ्काराणां वाच्यवाचकभावप्राणत्वाद् ध्वनेश्च व्यङ्ग्यव्यञ्जक-भावसारत्वान्न तेष्वन्तर्भावः । गुणालङ्कारादयस्तस्याङ्गभूतः । ध्वनिस्त्वङ्गी । अतो ध्वनिर्न गुणाऽलङ्काररूपोऽङ्गीत्वादात्मवत् । अत्र ( परिकरोति कारिकार्थमधिकाधानेनोपकरोतीति ) परिकरश्लोकः—

व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः ।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता [2]कुतः ।। इति ।

एवं सर्वेऽप्यभाववादिनः प्रयुक्ताः ।

वस्तुतो ध्वन्यभाववादिनः काल्पनिकाः सन्ति । तेषां विकल्पा ध्वनिकारैर्न श्रुताः, अपि तु सम्भाव्य ते पक्षा निराकृताः, यतस्तैः 'तस्याभावं जगदुः' इत्यत्र भूतानद्यतनपरोक्षार्थको लिट्लकारः प्रयुक्तः ।

भट्टनायकोऽपि ध्वनिं निराकर्तुं न चक्षमे, यतो ह्यवादीद्धृदयदर्पणे—

ध्वनिनापि परो योऽपि व्यापारो व्यञ्जनात्मकः ।
तस्य सिद्धेऽपि भेदे स्यात् काव्येंऽशत्वं न रूपता[3] ।। इति ।

तस्यायमभिप्रायो यत्—अभिधाभावनाभ्यां भिन्नो योऽपि व्यञ्जनात्मको व्यापार-स्तस्याभिधाभावनाभ्यां भेदे सिद्धेऽपि कार्येंऽशत्वं स्यात्, न त्वात्मरूपांशित्वमिति ।

तत्रांशत्वं वस्त्वलङ्कारध्वनितात्पर्येणोक्तं चेत् सिद्धसाधनम् । रसध्वनितात्पर्येण चेत् स्वोक्तिविरोधः । यतो हि मुख्यामुख्यविभेदेन द्विविधाऽभिधा-भावना-रसचर्वणात्मके त्र्यंशेऽपि काव्ये रसचर्वणैव जीवातुभूतेति भवदुक्तेः । तथा हि हृदयदर्पणे—

१. तत्रैव त्रयोदशतमा कारिका ।
२. ध्व० लो० प्र० उ० वृत्तौ ।
३. लोचने उदधृतम् ।

काव्ये रसयिता सर्वो न बोद्धा न नियोगभाग्[1] । इति ।

स च ध्वनिस्त्रिविधो वस्त्वलङ्काररसादिध्वनिभेदात् । त्रिविधोऽपि वाच्यसामर्थ्याक्षिप्तो वाच्याद्विभिन्न एव । विश्वनाथेन—

बोद्धृस्वरूपसङ्ख्यानिमित्तकार्यप्रतीतिकालानाम् ।
आश्रयविषयादीनां भेदाद् भिन्नोऽभिधेयतो व्यङ्ग्यः[2] ॥ इति ।

अन्य आचार्यास्तं काव्यात्मानं ध्वनिं [3]भाक्तमाहुः । अभिधेयेन प्रसिद्धिविशिष्टं सामीप्यादिनिमित्तं लक्ष्यार्थबोधनाय भज्यत इति भक्तिः सामीप्यादिसम्बन्धः । अथवा वक्तुः प्रतिपत्तुर्वा तीरादेर्गङ्गादिपदेन प्रतिपादने सामीप्यादेर्निमित्तत्वेन भजनं भक्तिस्तत आगतो भाक्तो लाक्षणिकोऽर्थः ।

अथ च गुणसमुदायप्रतिपादकस्य गुणद्वारा गुणिनः प्रतिपादकस्य वा सिंहादिशब्दस्य शूरतादिगुणरूपोऽर्थभागो भक्तिस्तत आगतो वा भाक्तो गौणोऽर्थः ।

आनन्दवर्धनाचार्यः—"अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः"[4] इत्युक्तवान् । तत्र काव्यात्मानं गुणवृत्तिरिति सामानाधिकरण्येन तयोरभेद उक्तः । तत्राऽयमभिसन्धिः—गुणवृत्तिशब्दस्य त्रयोऽर्था गुणाः सामीप्यादयस्तैक्ष्ण्यादयो वा धर्मास्तैरुपायैरर्थान्तरे वृत्तिर्यस्य स गुणवृत्तिः शब्दः । तैक्ष्ण्यादिगुणैर्वा शब्दस्य वृत्तिर्यस्मिन्नर्थे स गुणवृत्तिरर्थः । गुणद्वारेण वा वर्तनं गुणवृत्तिरमुख्याऽभिधावृत्तिः ।

एवं ध्वनिशब्दस्यापि त्रयोऽर्था ध्वनतीति ध्वनिः शब्दः । ध्वन्यतेऽसौ ध्वनिर्व्यङ्ग्योऽर्थः । ध्वननं ध्वनिरिति व्यञ्जनाव्यापारः । इत्थं ध्वनिगुणवृत्त्योः समानयोगक्षेमोऽतस्तयोरभेद इति ।

यद्यपि ध्वनिर्गौणो लाक्षणिको वाऽर्थ इति न केनापि कण्ठत उक्तम्, तथापि द्विविध एवाऽर्थो मुख्योऽमुख्यश्च । मुख्यो वाच्य एव ध्वनिस्तु वाच्यादतिरिक्तः, एतावताऽमुख्यः । अमुख्यवृत्त्या काव्येषु व्यवहारं दर्शयता भामहेन भट्टोद्भटेन वामनेन च ध्वनिदिगुन्मूलिता परं तद्ग्रन्थाधीयानैरभग्ननारिकेलवद्यथाश्रुतग्राहिभिर्ध्वनिस्वरूपविवेचनं न कृतम् ।

तत्र भामहेन—'काव्यकारणं निरूपयता शब्दाश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथा[5]' इत्युक्तम् । भट्टोद्भटश्च—स्वकृतभामहविवरणे 'शब्दाश्छन्दोऽभिधानार्था' इत्यत्र शब्दाभिधानयोः पृथक् पृथगुपादानं समीक्ष्य शब्दादभिधानस्य भेदं निरूपयन्नाह—शब्दानामभिधानमभिधाव्यापारो [6]मुख्यो गुणवृत्तिश्चेति । सादृश्याल्लक्षणा वक्रोक्तिरिति सूत्रयन् वामनोऽप्यामनुते लक्षणा वृत्तिम्[7] । तत्र सर्वैः प्रयोजनवती लक्षणा स्वीकृता । तद्यथा दण्डी समाधिगुणं लक्षयन्निजगाद—

---

१. लोचने उद्धृतम् ।　　२. साहित्यदर्पणे पञ्चमपरि० द्वितीया कारिका ।
३. ध्व० लो० प्र० उ० ।　　४. तत्रैव ।
५. काव्यालङ्कारे ।　　६. लोचने उद्धृतम् ।
७. काव्यालङ्कारसूत्रे सूत्रम् ८। अधि० ४। अ० ३ ।

अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते तत्र स समाधिः स्मृतो यथा ॥
कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च ।
इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः[१] ॥

अर्थाद् यत्र प्रस्तुतं धर्मं निगीर्य्य सादृश्येनाप्रस्तुतधर्मो वक्त्राऽध्यवसीयते तत्र समाधिर्गुणः । उदाहरणं यथा--कुमुदानि निमीलन्तीत्यादि । अत्र निमीलनोन्मीलनाभ्यां नेत्रक्रियाभ्यां सङ्कोचविकासौ सादृश्यान्निगीर्णौ । अतोऽत्र गौणसाध्यवसानलक्षणा वर्तते । सा च प्रयोजनवतीति ।

अतिशयोक्तिमुदाहरंश्च व्याजहार--

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥[२] इति ।

तत्र ज्योत्स्नाऽद्वैत्यं मल्लिकापुष्पाद्यभिन्नमित्यभिधानात् तस्याः श्वैत्याधिक्यप्रतीतिः प्रयोजनम् ।

[३]भट्टोद्भटश्च—

निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम् ।
मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया बुधाः ॥ इति ।

भामहोक्तमतिशयोक्तिलक्षणं परिष्कृत्याग्रे निबबन्ध—

भेदेऽनन्यत्वमन्यत्र नानात्वं यदि बध्यते ।
तथाऽसम्भाव्यमानार्थनिबन्धेऽतिशयोक्तिगीः ॥
कार्यकारणयोर्यत्र पौर्वापर्यविपर्ययात् ।
आशुभावं समालम्ब्य बध्यते सोऽपि पूर्ववत् ॥ इति ।

तत्र भेदेऽनन्यत्वप्रतिपादनमध्यवसानगौणलक्षणयैवेति प्रयोजनं तत्राप्यस्त्येवेति ।

[४]वामनश्च--

इह च निरन्तरनवमुकुलपुलकिता हरति माधवी हृदयम् ।
मदयति च केशराणां परिणतमधुगन्धिनिःश्वसितम् ॥

अत्र निःश्वसितमित्यस्य परिमलनिर्गमे लक्षणा, प्रतिक्षणं प्रसृतसुगन्धाधिक्यप्रतीतिः प्रयोजनम् ।

एवं भामहोऽभिधानेत्यभिधानेन, भट्टोद्भटो गुणवृत्तिरिति वचनेन, वामनो लक्षणाशब्देन ध्वनिदिशमुन्मीलयामासुः ।

---

१. काव्यादर्शे प्रथमपरिच्छेदे ९३-९४ तमौ श्लोकौ ।
२. काव्यादर्शे द्वितीयपरिच्छेदे २१५ तमः श्लोकः ।
३. भामहविवरणे ।
४ काव्यालङ्कारसूत्रे अधि० ४ अध्यायः ३ अष्टमसूत्रोदाहरणम् ।

अयं भावः—चतुरा नराः प्रयोजनविशेषमभिसन्धाय लक्षणयाऽर्थं प्रतिपादयन्ति । 'अन्यत्राऽन्यशब्दप्रयोगस्तद्धर्मप्रतिपत्त्यर्थः', 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे' इति न्यायाभ्यां च 'यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्' इति न्यायसूत्राच्च प्रयोजनप्रतिपत्तिर्लक्षणायाः फलमिति सर्वसम्मतम् । तत् प्रयोजनं नाभिधावेद्यम्, तत्र सङ्केतग्रहाभावात्, मुख्यार्थं बोधयित्वोपक्षयाच्चाभिधायाः ।

न च लक्षणावेद्यं, लक्ष्यार्थं प्रत्याय्य लक्षणाया विरामाद् मुख्यार्थबाधादित्रयहेत्वभावाच्च । अतस्तत्र तृतीयो व्यापारो व्यञ्जनद्योतनध्वननादिपर्यायो गुणवृत्तिं लक्षणां च स्वीकुर्वद्भिराचार्यैर्निर्दिष्टः । परं तत्स्वरूपनिरूपणं तैर्न कृतम् । तत्राकरणे कारणद्वयं सम्भाव्यते—

लक्षणाविषयतत्फलप्रतीत्योः सूक्ष्मक्रमस्यानाकलनाद लक्षणयैव द्वयोरवगतिरथवा तदभिव्यञ्जिकाया व्यञ्जनाया अनवगमात् प्रयोजनप्रत्यायिकाया वृत्तेरनिर्णयः । तत्र प्रयोजनज्ञानामपि तेषां तत्प्रत्यायिकाया वृत्तेरनिर्णय इति न रोचते विदग्धेभ्योऽथवाऽनिर्णयेऽपि न क्षतिर्ध्वनेः ( व्यङ्ग्यस्य प्रयोजनस्य ) अनिराकरणात् । अतः प्रयोजनांशस्य लक्षणया प्रतीतिसत्त्वे ध्वनेः ( व्यञ्जनायाः ) अनावश्यकत्वादाद्यपक्ष एव विचारणीयः ।

भवेन्नाम तेषामभिप्रायो यन्मुख्यातिरिक्तो निखिलोऽप्यर्थोऽमुख्ययैव वृत्त्या लभ्यः । लक्षणैवामुख्येति तथैव प्रयोजनमपि लक्ष्यम् । ध्वनिकारादर्वाचीनो मुकुलभट्टः स्फुटमभिधत्ते यद्—लक्षणया प्रतिपादितमेवार्थं ध्वनिरनुसरतीति । तद्यथा—'लक्षणाभागविगाहित्वं तु ध्वनेः सहृदयैर्नूतनतयोपवर्णितस्य दिशमुन्मीलयितुमिदमत्रोक्तम्[१]' इति ।

भोजराजश्च—मुख्यगौणीलक्षणा तद्भावापत्तिरुपचरितलक्षणेत्यादिविविधा वृत्तीरुपचर्योदाजहार—

एकस्मिन्नक्षिण श्रावणोऽन्यस्मिन् भाद्रपदः, माधवो महीतलन्नस्तो गण्डस्थले शरत् ।
अङ्गे ग्रीष्मः सुखासिका तिलवने मार्गशीर्षो मुग्धाया मुखपङ्कजसरसि आवासितः शिशिरः[२] ॥इति।

अत्र पूर्वोदीरितानां सर्वासां वृत्तीनां समन्वयं विधायाग्रे प्रणिजगाद—'असौ विरहवत्या अपि वियोगवेदनातिशयं लक्षयन्तो कमितरि स्नेहातिशयं लक्षयतीति[३]' । अत्र वियोगवेदनातिशयो लक्ष्यः, कमितरि स्नेहातिशयः प्रयोजनम्, परं तत्रापि लक्षणैव स्वीकृता भोजराजेनेति लक्षयतीत्युक्त्याऽवसीयते । एतावता सिद्धमिदं यदिमे प्रयोजनांशमपि लक्षणावेद्यमेवेत्यभिदधाना भाक्तवादिनः सन्ति ।

भक्तिवादिनामियं परम्परेदानीमपि ग्रन्थेषु स्फुटं लभ्यते, अतः 'भाक्तमाहुस्तमन्ये' इत्यत्राहुरिति वर्तमानकालेन निर्देशः ।

अत्र ध्वनिकारमतं व्याचख्यौ लोचनकारः—यदपि भक्तिवादिभिर्भक्तिर्ध्वनिरित्युक्तम्, तत्र जिज्ञास्यते यद्—

---

१. अभिधावृत्तिमातृकायाम् । २. सरस्वतीकण्ठाभरणे द्वितीयपरिच्छेदे । ३. तत्रैव ।

इन्द्रः शक्रः शतक्रतुरित्यादिवद् भक्तिर्ध्वनेः पर्यायः, उत पृथिव्या गन्धवत्त्वमिव तदितरभेदबुद्धौ साधनं भक्तिर्ध्वनेर्लक्षणम् ?

आहोस्वित् काकवद् देवदत्तगृहम् इत्यत्र यथा काकः कदाचित् सत्त्वमात्रेण गृहस्योपलक्षणम्, तद्वद् भक्तिर्ध्वनेरुपलक्षणम् ?

तत्र न प्रथमः, रूपभेदात्। रूपभेदश्चेत्थम्——यत्र वाच्यवाचकौ वाच्यार्थव्यतिरिक्तं व्यङ्ग्यमर्थं तात्पर्येण प्रकाशयतस्तत्र व्यङ्ग्यप्राधान्ये सति ध्वनिव्यपदेशः, तदुक्तम्——"वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः[1]" इति। तत्र तात्पर्येणेत्युक्त्या वक्त्रभिप्रायस्तस्मिन्नेवार्थे प्रतीयते, अतः प्रयोजनरूपोऽर्थः सः। भक्तिस्तु केवलमुपचारः। उपचारश्च व्यवहारातिशयः। अर्थाद् गुणयोगादनादिप्रयोगप्रवाहात् प्रयोजनं वा किञ्चिदभिसन्धाय शब्दस्य प्रसिद्धमर्थमतिक्रम्य तत्सम्बद्धान्यार्थे प्रयोगो व्यवहारातिशयः।

यदि भक्तिर्ध्वनिश्चेत्येकं तत्त्वम् तदा——

परिम्लानं पीनस्तनजघनसङ्गादुभयत–
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसनीपत्रशयनम्[2]॥

इत्यत्र भक्तिर्वा स्याद् ध्वनिर्वा, परमत्र बिसनीपत्रशयनं वदति इत्यनेन वदतिक्रियायाः कर्तृत्वेन शयनं विवक्षितम्, तद् न सङ्गच्छते, यतो हि वदधातुर्व्यक्तवाचि वर्तते। व्यक्तवाक् कश्चन चेतन एव भवति। शयनं त्वचेतनम्, अतः कथं वदेः कर्तृ स्यादिति मुख्यार्थबाधः। सादृश्यसम्बन्धेन तस्य गमयतीत्यर्थे लक्षणा। एवं गमयतीति लक्ष्यं लक्षयित्वा विरतायां लक्षणायां सन्तापस्य स्फुटतया प्रतिपत्तिरूपप्रयोजनं ध्वनिना प्रतीयत इति भक्तेर्ध्वनेश्चात्र पृथक् पृथक् सत्ता प्रतीयते, अतो न भक्तिर्ध्वनिरिति।

एवं भक्तिर्ध्वनेर्लक्षणमपि न सम्भवति, अव्याप्त्यतिव्याप्तिदोषग्रस्तत्वात्। व्यङ्ग्यप्राधान्ये हि ध्वनिर्भवति। यत्र व्यङ्ग्यकृतं महदसौष्ठवं नास्ति, तत्रापि प्रसिद्ध्यनुरोधात् कवय उपचारेण (लक्षणया) व्यवहरन्ति। यथा 'वदति बिसनीपत्रशयनम्' इत्यत्रैव सन्तापस्य स्फुटतया प्रतिपत्तिरूपप्रयोजनस्य स्फुटं प्रतिपत्तेर्वाच्यकल्पत्वादनादरणीयत्वं स्वशब्दाभिधानेनापि (स्फुटं प्रकाशयतीत्युक्त्याऽपि) तत्प्रतिपत्तेः। ध्वनिस्तु——उक्त्यन्तराऽशक्यचारुत्वव्यक्तिहेतुः, अतो वदतीति पदे भक्तिरस्ति, ध्वनिर्नास्ति।

अपि च सर्वथा प्रयोजनशून्यायां रूढिलक्षणायां लावण्यादिशब्दे ध्वनिसम्भावनाऽपि नास्ति, भक्तिरस्तीत्यतिव्याप्तिः।

अव्याप्तिदोषोऽप्यस्ति——यदि भक्तिर्ध्वनेर्लक्षणं स्यात्, तदा यत्र भक्तिर्न स्यात्, तत्र ध्वनिरपि न स्यात्। परमलक्षणाशून्येऽपि "शिखरिणी क्व नु नाम कियच्चरम्" इत्यादावभिधामूलध्वनिरस्तीति न भक्तिर्ध्वनेर्लक्षणम्।

---

१. ध्वन्यालोके प्रथमोद्योते १४ तमकारिकावृत्तौ। २. ध्व० लो० प्र० उ०।

आम्, ध्वनेः कस्यचनैकस्य ( लक्षणामूलप्रभेदस्य ) भक्तिरुपलक्षणतया सम्भाव्यते नाम, न सर्वेषां प्रभेदानामिति ।

येऽप्यनाख्येयतावादिनस्तेऽपि न सम्यग्वादिनः, यतो हि 'यत्रार्थः शब्दो वा' इत्यादिना सामान्यलक्षणे 'अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम्' इत्यादिना च विशेषलक्षणे कृतेऽपि यदि ध्वनेरनाख्येयत्वम्, तदा सर्वेषामपि वस्तूनामनाख्येयत्वप्रसक्तं स्यात् । तथा च—

निद्रानिमीलितदृशो मदमन्थराया नाप्यर्थवन्ति न च यानि निरर्थकानि ।
अद्यापि मे मृगदृशो मधुराणि तस्यास्तान्यक्षराणि हृदये किमपि स्फुरन्ति[1] ॥

इतिवदनयाऽतिशयोक्त्या ध्वनेः साररूपतां ख्यापयन्ति, तदा तेऽपि युक्ताभिधायिन इति ।

इत्थं भाक्तवादिनो द्विधा विभक्ताः सन्ति । प्रयोजनप्रतिपिपादयिषया हि लाक्षणिकशब्द-प्रयोगः, अतो लक्षणया लक्ष्यार्थबोधानन्तरं पुनर्लक्षणयैव प्रयोजनसम्प्रत्यय इत्येके ।

लक्ष्यप्रयोजनप्रतीतौ सूक्ष्मक्रमस्यानाकलनात् तयोर्युगपदेव लक्षणेत्यपरे ।

अत्र प्रकाशकारः[2]—यस्य शैत्यपावनत्वातिशयादिरूपप्रयोजनस्यानुभवमाधातुं वाचकं शब्दमनादृत्य लाक्षणिकः शब्द आश्रीयते, तत् प्रयोजनं शब्दैकगम्यं शब्दस्य सम्भृतसामग्री-कत्वादनुमानस्य व्याप्त्यादिप्रतिसंधानादिविलम्बेन विलम्बितत्वान्नानुमानगम्यम् । किञ्च, तथा सति गङ्गाद्यर्थ एव लिङ्गं सत् शैत्यादिकमनुमापयतीति स्वीकार्यम् । न च तटे गङ्गात्वं सिद्धम्, तत्पदप्रयोगविषयत्वे च न व्याप्तिग्राहकं प्रमाणम् । तत्कथमस्य लिङ्गता, अतः शब्दैकगम्ये प्रयोजने शब्दस्य व्यञ्जनादृते नान्यो व्यापारः । तथा हि– शैत्यपावनत्वादौ गङ्गादिशब्दानां सङ्केताभावादभिधायाश्च सङ्केतितार्थस्यैव बोधनाद् नाभिधा ।

तात्पर्यविषयान्वयानुपपत्तौ सत्यां प्रयोजनमभिसन्धाय मुख्यार्थसम्बद्धमर्थं प्रतिपादयन्ती लक्षणाऽपि प्रयोजनांशं न लक्षयति । यतो हि मुख्यार्थमभिधायाभिधायां विरतायां तात्पर्यान्वया-नुपपत्तौ सत्यां लक्षणा प्रवर्तते, अतस्तात्पर्यान्वयोपयोगिनमर्थं मुख्यार्थसम्बन्धेन लक्षयित्वा लक्षणोपक्षीणशक्तिः प्रयोजनांशबोधने न क्षमा ।

'गङ्गायां घोषः' इत्यत्राभिधया प्रवाहरूपोऽर्थोऽभिधेयः । आधाराधेयभावसम्बन्धस्य प्रवाहघोषयोरनुपपन्नत्वात् । प्रसरन्ती लक्षणा विवक्षितसम्बन्धसम्बन्धिनं मुख्यार्थसम्बद्धं लक्षयति । शैत्यं पावनत्वं च नाधाराधेयभावसम्बन्धिप्रतियोग्यनुयोगिनी भवतः । अतः प्रवाहस्य सामीप्यसम्बन्धसम्बन्धिनं विवक्षितसम्बन्धप्रतियोगियोग्यं तटरूपमर्थं लक्षयित्वोपक्षीणा लक्षणा प्रयोजनांशं न लक्षयति ।

अपि च प्रथमं मुख्यार्थोपस्थितिः, ततो बाधप्रतिसन्धानम्, ततो लक्ष्यार्थज्ञानम्, ततः प्रयोजनांशप्रतीतिरिति क्रमः । एवं प्रयोजनं शैत्यपावनत्वादिः, तदा लक्ष्यं स्याद् यदा लक्ष्य-स्तीरादिर्मुख्योऽर्थः ( गङ्गापदाभिधेयः ) स्यात् । न च तीरादिर्गङ्गापदाभिधेयः । तटाद्यर्थे मुख्ये

१. वक्रोक्तिजीवितस्य प्रथमोन्मेषे ५१ तमः श्लोकः ।
२. मम्मटः का० प्र० द्वि० उल्लासे ।

सति तत्र घोषाधिकरणत्वस्यासम्भवरूपबाधोऽपि न। प्रवाहसमवेतस्य शैत्यपावनत्वादिरूप-प्रयोजनेन तटस्य साक्षात् सम्बन्धोऽपि नास्ति। शैत्यपावनत्वादिप्रयोजने लक्षयितव्येऽन्यत् प्रयोजनमपि नास्ति। प्रयोजनेऽपि प्रयोजनान्तरकल्पनायां तत्प्रयोजनान्तरं कया शब्दवृत्त्याऽव-गम्यते ? यदि लक्षणया, तदा तत्रापि प्रयोजनान्तरं देयम्, एवमनवस्थापातः।

गङ्गादिशब्दः शैत्यपावनत्वादिप्रयोजनप्रतिपादने क्षीणसामर्थ्योऽपि न। यतो हि प्रयोजनप्रतिपत्तिस्तस्मादेव गङ्गाशब्दाद् जायते, परं नाभिधया तत्र सङ्केताभावात्। नापि लक्षणया मुख्यार्थबाधादिहेतुत्रयाभावात्। अतो व्यापारान्तरं मृग्यम्।

न च प्रयोजनं तटगतं शैत्यपावनत्वज्ञानं लक्ष्यमेव, तत्र प्रयोजनान्तर घोषवृत्तिशैत्यादि-प्रतीतिरिति शङ्क्यम्। घोषनिष्ठशैत्यादेः कया वृत्त्या प्रतीतिरिति शङ्कायां लक्षणयेत्युत्तरे, तत्रापि प्रयोजनान्तरमित्यनवस्थापातात्। न च बीजाङ्कुरन्यायेनवानस्था न दोषायेति वाच्यम्, प्रयोजनान्तरे लक्ष्ये तत्रापि प्रयोजनान्तरचिन्तायां मूलभूतलक्षणाप्रयोजनप्रतीत्यनापत्तेः। मूलक्षय-कारिण्या अनवस्थाया दोषत्वेनाभिधानात्। तद्यथा--

**मूलक्षतिकरीं चाहुरनवस्थां च दूषणम्** ॥ इति।

एवं पावनत्वादिकं प्रयोजनं न गङ्गापदाभिधेयम्, गङ्गापदनिष्ठसङ्केताविषयत्वात्। न च तात्पर्यवृत्तिवेद्यम्, पदार्थसंसर्गभिन्नत्वात् पदार्थयोः संसर्ग एव तात्पर्यवृत्तिवेद्यः, न वा गङ्गापदलक्षणया लक्ष्यं लक्षणाजन्यज्ञानजनकसामग्रीरहितत्वात्।

किञ्च, गङ्गापदस्य लक्षणावृत्तिस्तटमर्थं लक्षयित्वा पुनः प्रयोजनांशं लक्षयितुं न क्षमा **'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः'** इति न्यायात्। अतो व्यञ्जना स्वीकार्यैवेति प्रथमे निरस्ताः।

अपरे प्रयोजनांशविशिष्टे लक्ष्ये लक्षणामङ्गीकुर्वन्ति। तेषामयं भावः—**'गङ्गायां घोषः'** इत्युक्ते तात्पर्यविषयीभूतप्रवाहघोषयोराधाराधेयभावसम्बन्धानुपपत्त्या प्रवाहसम्बद्धे शैत्यपावन-त्वादिविशिष्टे तटे लक्षणा। न च प्रयोजनविशिष्टस्य लक्ष्यत्वे प्रयोजनाभाव इति वाच्यम्, गङ्गातटे घोष इति वाक्यात् केवलस्य तटस्याधारताप्रतीतेः 'गङ्गायां घोषः इत्यनेन शैत्यपावन-त्वादिविशिष्टतटस्येत्यधिकस्यार्थस्य प्रतीतेः प्रयोजनादिति।

**अत्रोच्यते**—शैत्यपावनत्वादिविशिष्टे तटे लक्षणा न युक्ता। विशिष्टलक्षणायां लक्षणा-जन्यज्ञानस्यैव फलज्ञानात्मकत्वाच्छैत्यपावनत्वादिज्ञानं लक्षणाजन्यज्ञानफलं न स्यात्। यथा ज्ञानस्य विषयो ज्ञानादन्यः, एवं ज्ञानस्य फलमपि ज्ञानादन्यत्। फलफलिनोः समसमय-समुत्पत्त्यसम्भवात्।

**भाट्टमीमांसकादीनां मते** प्रत्यक्षादिज्ञानस्य घटादिर्विषयः, घटप्रत्यक्षानन्तरं तस्मिन् घटे ज्ञाततापरपर्याया प्रकटता जायते। सा प्रकटतैव घटज्ञानस्य फलं यया घटज्ञानमनुमीयते।

**नैयायिकाश्च**—घटज्ञाने जाते घटविषयकज्ञानवानहमिति। प्रतीतिरूपाऽनुव्यवसायापर-नाम्नीसंवित्तिर्ज्ञातरि जायते, यया घटज्ञानस्य प्रामाण्यं भवति। अनयोर्मते ज्ञानं न स्वप्रकाश इति। एवं ज्ञातृधर्मः संवित्तिः प्रत्यक्षादिज्ञानस्य फलं ब्रुवते।

वेदान्तिनश्च—घटप्रत्यक्षे जाते घटेऽज्ञानात्मकावरणस्य भङ्गो भवति। स आवरणभङ्ग एव घटाभिव्यक्तिर्वेति घटज्ञानस्य फलमिति निगदन्ति। वेदान्तिप्रभाकरमीमांसकवैयाकरणालङ्कारिकाणां मते ज्ञानं स्वप्रकाश इति। एवं यथा प्रत्यक्षादिविषयफलयोः प्रत्यक्षादभिन्नत्वम्, तथा लक्ष्यज्ञानात् तत्फलस्य पावनत्वादिज्ञानस्य भिन्नत्वमवश्यमवगन्तव्यम्, अतो विशिष्टे लक्षणा भवितुं नार्हति। तदाहुर्मम्मटभट्टाः—

ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।
विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते॥ इति।

अत्र सूत्राक्षरस्वारस्येन ज्ञानस्य विषयोऽन्यः, फलञ्चान्यदिति विषयफलयोर्भेद इति प्रतीयते, परमिदं न युक्तम्, यतो हि फलं द्विविधं भवति—जन्यं वा ज्ञाप्यं वा। अत्र शैत्यपावनत्वादिफलं जन्यं चेत्, तर्हि विशिष्टलक्षणापक्षेऽपि शैत्यपावनत्वादिज्ञानस्य लक्षणाजन्यज्ञानत्वाद् विषयभेदसत्त्वाच्च (फलं ज्ञानं विषयो न ज्ञानमिति भेदसत्त्वाच्च) शैत्यपावनत्वादौ फलत्वमव्याहतमेव।

अपि च मृद्घटोपादानमितीश्वरगतोपादानप्रत्यक्षफले घटादौ तद्विषयभेदासत्त्वाद् व्यभिचरितश्चेति। यदि ज्ञाप्यं फलं तदा फलं तु प्रकटता संवित्तिर्वेति दृष्टान्तविरोधस्तयोर्जन्यत्वरूपत्वादिति।

अतो लक्षणया बोधिते तटादौ ये शैत्यपावनत्वादयो विशेषाः प्रतीयते, ते न लक्षणया गम्याः, अपि तु व्यञ्जनद्योतनध्वननादिपर्यायेण व्यापारान्तरेण गम्याः।

अवधेयम्—मम्मटाचार्यो लक्षणां ज्ञानरूपां मनुते, अतोऽन्योऽर्थो यल्लक्ष्यते सा लक्षणेति लक्षणं लक्षयाञ्चक्रे। अत्र यदिति क्रियाविशेषणमतो यल्लक्ष्यते—ज्ञायते सा ज्ञप्तिरेव लक्षणेति, तन्मते लक्षणा ज्ञानरूपा सिद्धा। अत एव प्रयोजनविशिष्टे लक्ष्ये लक्षणां निराकुर्वन् सः 'ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्' इत्यवोचत्।

यदि तन्मते लक्षणा ज्ञानरूपा न स्यात्, तदा विशिष्टलक्षणानिराकरणाय 'ज्ञानस्य विषयो ह्यन्यः' इत्याद्युक्तिरनर्गलप्रलाप एव स्यात्। ज्ञानरूपलक्षणेति स्वीकारे सत्येवेयमुक्तिः सङ्गच्छते।

मीमांसकैरपि—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इति लक्षणाऽलक्षि। तेषामपि ज्ञानरूपैव लक्षणा। शक्यादशक्योपस्थितिर्लक्षणेति प्राचीनानां मते ज्ञानं लक्षणा, अतो लक्ष्यज्ञानं जनकम्, फलं तु तज्जन्यमिति तयोः पौर्वापर्यक्रमसत्त्वे विशिष्टे लक्षणा भवितुं नार्हतीत्युक्तिः सङ्गच्छते। परं वामनादयोऽन्ये नव्याः टीकाकारा लक्षणामभिधावच्छब्दव्यापाररूपां मन्वते, अतो यदिति ययेत्यर्थकमव्ययं मत्वा यया शब्दवृत्त्याऽन्योऽर्थो लक्ष्यते सा शब्दवृत्तिर्लक्षणेति। एवम्—'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' इत्यत्रापि प्रतीयतेऽनयेति प्रतीतिरिति प्रतीतिकरणभूता वृत्तिर्लक्षणेति व्याचक्षते।

अत एव विश्वनाथः—

मुख्यार्थबाधे तद्युक्तो ययाऽन्योर्थः प्रतीयते ।
रूढेः प्रयोजनाद् वासौ लक्षणाशक्तिरर्पिता '।[1] इति ।

लक्षणा लक्षणे ययेति तृतीयान्तं पदमुपादद्दे । तेषां मते विशिष्टे लक्षणास्वीकारे किं बाधकमिति चिन्तायां प्रदीपकाराद्यो[2] ब्रुवते यत्—तात्पर्यविषयान्वयानुपपत्तौ सत्यां लक्षणा प्रवर्तते, अतस्तदन्वयिनमर्थं लक्षयित्वा विरता सती प्रयोजनांशं न लक्षयति । यथा 'गङ्गायां घोषः' इत्यत्र प्रवाहघोषयोराधाराधेयभावसम्बन्धानुपपत्तौ प्रसरन्ती लक्षणा तत्सम्बन्ध-प्रतियोगियोग्यं तटमेव लक्षयति, नान्यत् प्रयोजनादिकम् ।

न च यथा तापापहर्तुं कृतश्चन्दनलेपस्तापमपहरति शैत्यमप्याधत्ते तथैव, तात्पर्यविषया-न्वयानुपपत्तौ कृता लक्षणाऽन्वयोपपत्तियोग्यमर्थं लक्षयित्वा प्रयोजनांशमपि लक्षयेत् चेत्, का क्षतिरिति वाच्यम्, चन्दनं स्वसन्निधिमात्रेणोभयं करोतीति तत् स्वभावसिद्धम्, परं लक्षणा यावतीमनुपपत्तिं परिहर्तुमुपासिता, तावतीमेव परिहरतीति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् ।

न च प्रयोजनप्रतिपिपादयिषया समुपासिता लक्षणा प्रयोजनांशविशिष्टं लक्ष्यं प्रतिपादयेदिति वाच्यम्, शैत्यपावनत्वादिविशिष्टे तटे लक्ष्ये सति शैत्यपावनत्वादीनां विशेषणानां लक्ष्यस्य (तटस्य) असाधारणधर्मत्वापत्तेः । शैत्यादिकं नासाधारणो धर्मस्तटस्येति न विशिष्टे लक्षणेति दिक् ।

आचार्यकुन्तकश्च—पुनरेवं सर्वतो भावेन सिद्धं ध्वनिमपलपितुं यदा न पारयामास, तदाऽलङ्कारसम्प्रदायाभिभूतत्वात् तं ध्वनिमेव वक्रोक्तिनाम्ना निजगाद । ध्वनिकारप्रतिपादितान् सर्वान् ध्वनिभेदांश्च यथास्वं जग्राह । तद्यथा—

उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः ।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते ॥[3] इति ।

अर्थात् शब्दार्थावलङ्कार्यतया स स्वीकरोति तयोश्चालङ्कृतिः पुनरेका वक्रोक्तिरेव । वक्रोक्तिश्च प्रसिद्धाभिधानव्यतिरिक्ता विचित्राऽभिधैव । सा च षड्विधा—

(क) वर्णविन्यासवक्रता ।

(ख) पदपूर्वार्धवक्रता ।

(ग) प्रत्ययाश्रयवक्रता ।

(घ) वाक्यवक्रता ।

(ङ) प्रकरणवक्रता ।

(च) प्रबन्धवक्रता इति च ।

---

१. सा० द० द्वि० प० । २. काव्यप्रदीपे द्वि० उ० ।

३. वक्रोक्तिजीविते प्रथमोन्मेषे १० तमा कारिका ।

यथाऽऽनन्दवर्धनोऽलङ्कारविनिवेशने समीक्षां निर्दिदेश, तथैव वर्णविन्यासवक्रतानिरूपणे कुन्तकोऽप्यादिदेश । अग्रे च स्वयं शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यपदध्वनेर्वाक्यध्वनेर्वा विषयतया तृतीयपर्यायवक्रतां निर्दिदेश । तद्यथा—

इत्थं जडे जगति को नु वृहत्प्रमाणकर्णः करी ननु भवेद् ध्वनितस्य पात्रम् ।
इत्यागतं झटिति योऽलिनमुन्ममाथ मातङ्ग एव किमतः परमुच्यतेऽसौ[1] ।।

अत्र मातङ्गशब्दः प्रस्तुते वारणे वर्तते । शिष्टया वृत्त्या चाण्डाललक्षणस्याप्रस्तुतस्य वस्तुनः प्रतीतिमुत्पादयन् रूपकालङ्कारच्छायां संस्पर्शात् पर्यायवक्रतां पुष्णाति स एवाऽयम्, स इवाऽयं वेति ।

इत्थं सर्वान् ध्वनिभेदानलङ्कारांश्च वक्रोक्तावन्तर्भावयामास । यदवोचत्—

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा ।
यत्राऽलङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति[2] ।। इति

महिमभट्टश्च ध्वनिं ( व्यङ्ग्यमर्थम् ) स्वीकरोति । परं ध्वननं ध्वनिम् ( व्यञ्जनाम् ) नोररीकरोति । व्यङ्ग्यमर्थमनुमेयं साधयति । यथा—सर्वस्यैव ध्वनेरनुमानेऽन्तर्भावं कर्तुं व्यक्तिविवेकाख्यं ग्रन्थमारभमाणः स्वयं प्रतिजानीते । वदति च—'सर्व एव शाब्दो व्यवहारः साध्यसाधनभावगर्भतया प्रायेणानुमानरूपोऽभ्युपगन्तव्यः[3]' इति ।

अन्यच्च—

शब्दस्यैकाऽभिधाशक्तिरर्थस्यैकैव लिङ्गता ।
न व्यञ्जकत्वमनयोः समस्तीत्युपपादितम्[4] ।। इति ।

तन्मते वस्त्वलङ्कारध्वन्योर्वाच्यव्यङ्ग्ययोः क्रमस्य संलक्ष्यत्वात् तयोरविनाभावाद् वाच्येन व्यङ्ग्योऽनुमीयते । परं रसध्वनेस्त्वसंलक्ष्यक्रमतया तत्र वाच्येन सह सम्बन्धादीनां स्मरणलेशोऽपि न सह्यः । अतः कथं सोऽनुमेय इति न शङ्क्यम्, ध्वनिकारेण स्वयं तत्रापि क्रमस्य समर्थितत्वात् । तथाहि—'न हि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः । अत एव विभावादिप्रतीत्यविनाभाविनीरसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेनाऽवस्थानात् क्रमोऽवश्यं भावी' इति[5] ।

मतस्यास्य मम्मटो[6] हेतोरनैकान्तिकविरुद्धासिद्धसत्त्वादिभिरनिश्चयान्नानुमितिरिति, विश्वनाथश्च[7] नानुमानं रसादीनामित्यादिना बहुशः खण्डनं कृतवन्ताविति तत एव ज्ञेयम् ।

अत्र राजानको रुय्यकस्तत्रैवाह टीकायाम्[8]—'विभावादिरूपनिमित्तप्रतीतिकाले निमित्तिनो रसादेः प्रतीतिर्नास्त्येतावता व्यङ्ग्यत्वं रसादेर्नोपपद्यते' । गम्यत्वं पुनरुपपद्यत इत्यनुमिति-

---

१. व० जी० द्वि० उ० ३५ तमः श्लो० ।　　२. व० जी० प्र० उ० २० तमा का० ।
३. व्य० वि० प्र० विमर्शे ।　　४. व्य० वि० प्र० वि० २७ तमः स० श्लो० ।
५. व्य० वि० प्र० वि० उद्धतम् ।　　६. का० प्र० प० उ० ।
७. सा० द० प० प० ।　　८. व्य० वि० प्र० वि० टीकायाम् ।

वादिनोऽभिमतिः । एतदस्माभिरपि व्यक्तिवादिभिर्नापह्नूयते, घटप्रदीपादिदृष्टान्तेन तथा साधितत्वात् । परं व्यङ्ग्यस्य रसादेः प्रतिपत्तिकाले व्यञ्जकस्य विभावादेः प्रतिपत्तिर्न निवर्तते, न वा पृथगनुभूयते; अपि तु तत्सहभावेन रसादेः प्रतीतिः । व्यञ्जकप्रतीतिकाले व्यङ्ग्यप्रतीतिर्नियतेत्यस्माकं नाशयः । व्यङ्ग्यप्रतीतिकाले तु नियमेन व्यञ्जकप्रतीतिः, अतोऽक्रमत्वं व्यङ्ग्यव्यञ्जकभावश्च समर्थितं भवति । तथा ह्येवमुक्तं ध्वनिकारेण—'न हि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति, वाच्याविनाभावेन तस्य प्रकाशनात्' इत्यादि । न त्वेवम्—न हि वाच्ये प्रतीयमाने व्यङ्ग्यबुद्धिर्दूरीभवति इति ।

गम्यगमकभावप्रयोजकोऽविनाभावोऽन्यो यत्र गम्यस्य गमकोपरागो न प्रतीयते । व्यङ्ग्यव्यञ्जकभावसाधकोऽविनाभावोऽन्यादृशः, यत्र प्रत्याय्यस्य प्रत्यायकोपरागः प्रतीयते । अतो रसादयो व्यङ्ग्या एव ।

अपि च रत्यादिस्थाय्येव रसः । परं नानुकार्यानुकर्तृगतः, अपि तु सहृदयगतः । स च नानुमितिविषयः । अनुकर्तृगतोऽनुमितिविषयश्चेत्, न स रसपदवीमधिरोहति । सहृदयानामेव चर्वयितृत्वाच्चर्वणाऽनुप्राणत्वाच्च रसस्य सहृदयगत एव रसः । अतो रसस्य मुख्यं व्यङ्ग्यत्वं नौपचारिकम्, रस्यमानतासारत्वाच्च न कृत्रिमत्वम् ।

वस्त्वलङ्कारध्वन्योरपि तृतीयकक्षानिक्षिप्तयोरर्थयोर्नाभिधया, न वा लक्षणया प्रतीतिस्तदर्थं व्यञ्जनाव्यापारोऽवश्यमभ्युपगन्तव्यः ।

न च वाच्यप्रतीतिकाले व्यङ्ग्यस्य प्रतीतिर्नास्तीति कथं व्यङ्ग्यत्वम् ? व्यङ्ग्यप्रतीतिकाले वाच्यस्यापि प्रकाशकस्य प्रतीतेः । वाच्यकाले व्यङ्ग्याप्रतीतिर्न दूषणम् । 'भ्रम धार्मिक' इत्यादौ विरुद्धस्यापि व्यङ्ग्यस्य प्रकाशकत्वेन वाच्यप्रतीतेरदोषात् ।

अपि च—जातिपलाण्डुन्यायेन सहृदयस्यैव निगूहिततया काव्यार्थस्य प्रकटनाद् व्यक्तिवाचोयुक्तिरेव समीचीनेति ।

**समीक्षा**—प्राचीना आलङ्कारिका रसादीन् व्यङ्ग्यानर्थानाज्ञासिषुरिति वक्तुं न शक्यते, परं तान् केचनालङ्काररूपतया, केचन गुणरूपतया स्वीचक्रिरे । तत्र भामह-दण्डिप्रभृतयो रसं रसवदलङ्काररूपेण, भावं प्रेयोऽलङ्कारतया, रसाभासं भावाभासं चोर्जस्विरूपतया, भावशान्तिं च समाहिताऽलङ्काररूपतया निरूपयाञ्चक्रुः ।

यद्यपि—ऊर्जस्विसमाहितयोर्लक्षणेन ( दण्डिप्रोक्तेन ) स्पष्टं तथा न प्रतीयते, तथाप्युदाहरणविवेचनेन तथा निश्चीयते । दण्डी तु माधुर्यं निरूपयन्नाह—

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः[1] ।। इति ।

अपि चानुप्रासमपि रसावहं प्रशंसति, यथा—'सानुप्रासा रसवहा[2]' । किञ्च सर्वेष्वप्यलङ्कारेषु रसाभिव्यक्तिं वाञ्छति, यथा—'कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चतु[3]' इत्यादिना ।

---

१. का० द० प्र० प० ५१ तमः श्लो० । २. तत्रैव ५२ तमस्य चतुर्थचरणः ।
३. तत्रैव ६२ तमः ।

अन्यत्र चाभिधया रतिनिवेदनं ग्राम्यदोषदुष्टतया वैरस्याय मनुते । विदग्धजनव्यवहार्यम-ग्राम्यमर्थं रसावहं मनुते । यथा—

कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्मत्सरो दिष्टचेत्यग्राम्योऽर्थो [1]रसावहः ।। इति ।

अत्रार्थो रसावह इति प्रतिपादनेनेदमवसीयते यदर्थसामर्थ्याद् रसप्रतीतिरिति ।

एवं रसवदलङ्कारोदाहरणे 'सैवावन्ती मया लब्धा कथमत्रैव जन्मनि' इत्यत्रापि 'रूप-बाहुल्ययोगेन रतिः शृङ्गारतां [2]गता' इत्याद्यमिदधद्विभावादिसम्बन्धेनैव रसाभिव्यक्ति स्वीकरोति, न वाच्यतया, यतो हि रूपबाहुल्ययोगेनेत्यस्य प्रकृष्टविभावादिसम्बन्धेनेत्यर्थः । रसवदलङ्कारं लक्षयन्नपि 'रसवद् रसपेशलम्' इत्याह । एवं सर्वान् रसानलङ्कारतयोदाजहार ।

वामनोऽप्यर्थगुणं कान्ति लक्षयन् सूत्रयामास —'दीप्तरसत्वं [3]कान्तिः' इति ।

उदाजहार च—

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया ।
द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः ।।
तावत्प्रच्युतपाणिसम्पुटगलन्नीवीनिबन्धं धृतः ।
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा [4]गतिः ।। इति ।

अत्र शृङ्गाररसो दीप्त एतावता कान्तिर्गुणः । परमत्र शृङ्गारशब्दो रसादिशब्दो वा नोपात्तः, अपि तु विभावादय उपात्ताः, अतो रसो न वाच्य इति निश्चप्रचम् । न वा लक्ष्यः, मुख्यार्थबाधादिहेत्वभावात् ।

एवं रसादीन् सर्वे आचार्या मन्वते । आग्नेये तु 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इत्युक्तम् । महिमापि 'वाक्यस्याङ्गिनि रसादिरूपे न कस्यचिद्विमतिः' इत्युदाजहार । अलङ्कार-सर्वस्वकारोऽपि प्राचीनान् भामहादीनलङ्कारपक्षे निक्षिप्तया रसादीन् मन्वानान् व्याजहार । वस्तुतो व्यङ्ग्यस्यार्थस्यापामरप्रतीतिरिति लौकिकव्यवहारादप्यनुभूयते ।

अतो ध्वनौ ( व्यङ्ग्येऽर्थे ) न कस्यचिद्विमतिः । परं मीमांसका दीर्घदीर्घतराभिधा-व्यापारेण, भट्टनायको भोजकत्वव्यापारेण, धनिकधनञ्जयौ तात्पर्येण, ( अत्र तात्पर्यमभिधैव ) मुकुलभट्ट—भट्टलोल्लटप्रभृतयोऽप्यभिधाव्यापारेण. भोजराजस्तु लक्षणामूलध्वनिं लक्षणयाऽभिधा-मूलमभिधया, वक्रोक्तिजीवितकारो वक्रोक्त्या, अर्थाद् विचित्राभिधया वेद्यं व्यङ्ग्यमङ्गीकुर्वन्ति । ते च व्यञ्जनाव्यापारे विवदन्ते । तत्र भट्टनायकस्य भोगकृत्वं कुन्तकस्य विचित्राऽभिधा-व्यञ्जनानतिरिक्तैव नाममात्रे विवादः । तात्पर्यशक्तेः संसर्गं बोधयित्वोपक्षयाद् धनिक-धनञ्जयौ निरस्तौ ।

अन्ये चाभिधावेद्यवादिनः स्वरूपसङ्ख्याप्रतीतिकालादीनां भेदादभिधेयतो भिन्नो व्यङ्ग्य इति पूर्वमुपपादितत्वान्निरस्ताः ।

---

१. तत्रैव ६४ तमः श्लो० ।        २. का० द० द्वि० प० २८० तमः श्लो० ।
३. का० ल० सू० अधि० ३ अ० १ सूत्र० १४ ।        ४. तत्रैव ।

भाक्तवादिनोऽनुपदमेव पूर्वं निराकृताः ।

तत्रानुमानवादी महिमाऽपि पूर्वाचार्यैर्मम्मटादिभिर्बहुशो निराकृतः, तथापि प्रष्टव्यो यद् भवतोच्यते यच्छब्दे एकैव शक्तिः । एकस्मिन् विभिन्नाः शक्तयः परस्परनिरपेक्षा युगपदेव प्रवृत्ता भवन्ति । यथा अग्नौ दाहकता-पाचकता-प्रकाशिकाश्च शक्तयः । अर्थादग्निर्युगपदेवेन्धनं दहति, तन्दुलं पाचयति, प्रकाशयति च ।[1] शब्दे त्वभिधालक्षणादिका नैतादृशाः, अपि तु परस्पर-सापेक्षाः क्रमशश्च प्रवृत्ता भवन्ति । अभिधया प्रतिपादितस्यार्थस्य बाधे सति लक्षणया तत्सम्बद्धोऽन्योऽर्थो लक्ष्यते । ततो जाते लक्ष्यार्थबोधे प्रयोजनप्रतिपत्त्यर्थं व्यञ्जना प्रवर्तते इति न शब्देऽनेकाः शक्तयः, अपि त्वभिधैवैका शक्तिरन्येऽर्था अनुमेया इति । तत्र किं मानम् ? प्रति मनुष्यं ज्ञानेच्छाक्रियाशक्तयः सन्ति । ताः परस्परसापेक्षाः क्रमशश्च प्रवृत्ता भवन्ति । प्रथमं जानाति, तत इच्छति, ततो यतत इति । एवं चन्दने तापशामकत्वशक्तिः, शैत्याधानशक्तिश्च परस्परं सापेक्षे क्रमशः प्रवृत्ते भवतः । प्रथमं तापशान्तिः, परं शैत्याधानं च भवतः ।

अपि च 'गङ्गायां घोषः' इत्युक्तौ गङ्गापदलक्ष्ये तटे यच्छैत्यपावनत्वादिप्रतीतिस्तत्कथमनुमेयम् ? का तत्र व्याप्तिः? 'यद् यद् गङ्गापदवाच्यम्, तत्तच्छैत्यादिविशिष्टमिति चेत्, लक्ष्ये तटेऽव्यापनाद् यद् यद् गङ्गापदलक्ष्यमित्युक्तौ वाच्येऽव्यापनात्' अतो यद् यद् गङ्गापदप्रतिपाद्यम्, तत्तच्छैत्यादिविशिष्टमित्युक्तौ, कस्यचन मार्गशोधकस्य ( मार्जनीकर्मकरस्य ) गङ्गेत्यभिधानं सोऽपि गङ्गापदप्रतिपाद्यः, परं न स शैत्यपावनत्वादिविशिष्ट इति कथं व्याप्तिग्रहः ?

अपि च प्रत्यक्षमेव ज्ञानं चमत्कारजनकम्, नानुमितमिति कथमनुमितो रस आनन्दमयः । किञ्च रसमनुभवामीत्यनुव्यवसायः सर्वेषां सहृदयानां नानुमिनोमीति । अपि चानुमितः पदार्थो लौकिक एवातस्तेभ्यो रतिशोकादिभ्यो लौकिकाः सुखदुःखादयो जायन्तां नाम नाऽलौकिकानन्दमयो रसास्वाद इति । स्वयं महिमाऽस्यां विचिकित्सायां च वस्तुस्वभावेन परिहरन् प्रमाणयति भरतम्; यथा—

भा संयोजनाव्यङ्ग्यपरसंवित्तिगोचरः ।
आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते[2] ।। इति ।

परमत्र व्यङ्ग्य आस्वादनात्माऽनुभवात्मकश्च रसः प्रतिपादितः, नानुमेयः परोक्षात्मक इति । अत एव रसानुमितिपक्षवादिनं तार्किकं श्रीशङ्कुकं भट्टनायकादय आचार्या नादद्रिरे ।

अपि च काव्यादेव रसादयोऽभिव्यञ्जन्ते, अतः कश्चन सम्बन्धोऽवश्यं वाच्यः । स च व्यङ्ग्यव्यञ्जकभाव एव, नान्यः कश्चन ।

अपि चानुमायां निपुणेनापि केनचिज्जरन्मीमांसकेन यद्रसो नास्वाद्यते, तत्र को हेतुः ? सहृदयैर्विदग्धैरनुभूयते निर्वासनैर्नानुभूयत इत्यत्र मानं किं स्यात् अतस्त्रिविधोऽपि व्यङ्ग्यो नानुमया गतार्थ इति व्यञ्जना तदर्थमवश्यं स्वीकर्तव्येति शिवम् ।

---

१. का० वि० प्र० वि० ।
२. व्य० वि० प्र० वि० उद्धृतम् भरतमतम् ।



# सर्वङ्कषाया अलङ्कृतिविवेचनपरीक्षणम्

श्रीशशिधरशर्मा, वाचस्पतिः

पञ्चापविश्वविद्यालये प्राध्यापकः

अस्ति खलु सकलशास्त्रकूलङ्कषा 'सर्वङ्कषा'अभिधाना महाकविराजिराजस्य माघस्य 'शिशुपालवधः' नाम गुणगणधाम काव्यरत्नमधिकृत्य कृता पदवाक्यप्रमाणपारावारपारङ्गतस्य सुमतस्य कोलाचलसूरेर्विद्वत्सहृदयमण्डलीनाथस्य मल्लिनाथस्य टीका।

सतीष्वपि विविधासु काव्योत्तमस्याऽस्य धन्याख्यासु व्याख्यासु सकलशास्त्रसर्वपथीनतया कवयितुराशयस्याशेषतया स्फोरकतया च सर्वङ्कषैव तासु सर्वासु निकषायते[1], अत एव च तुषारमहीधरादारभ्य दक्षिणार्णवं यावदस्याष्टीकायाः शताब्दीभ्यः प्रचरत्यव्याहतः प्रसरः। स्वयं मल्लिनाथोऽस्या विषये धीरगभीरया गिरा सङ्गिरते स्म——

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणाऽलङ्क्रिया।
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वनि।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे मिमङ्क्षन्ति ये।
तेषामेव कृते करोमि विवृतिं माघस्य सर्वङ्कषाम्[2]॥

इदञ्च भूतार्थवचनं यदत्युक्तेर्लेशोऽपि न स्पृशतीति विशेषविदोऽविशेषेण सम्मन्वते। तत्राऽपि चाऽलङ्कारशास्त्रे तस्य भूयानेवादरो वांशिको च प्रौढिः—यत् तस्य तनुजनुषावपि तादृशावेवेति तदीयकनिष्ठसूनुना कृतया प्रतापरुद्रीयस्याऽलङ्कारागमाऽलङ्कारायमाणस्य ग्रन्थस्य रत्नापणाख्याया व्याख्याया अवलोकनेनाऽवसीयते। स्थाने स्थाने भामह-रुद्रट-दण्डि-वामनाऽलङ्कारसर्वस्व-काव्यप्रकाश-साहित्यदर्पणादीनाकरग्रन्थान् समुल्लिखन्नामूलचूलमखिलालङ्कारागममार्मिकतां स्वस्य स आविस्तरां करोतीव। पञ्चमहाकाव्यानां प्रामाणिकं व्याख्यानमधिजिगमिषूणां सर्वङ्कषैव परमं प्रमाणपदमधिरूढाः।

तत्र सर्वङ्कषाकारः खलु धौरेयः श्रद्धेयानामित्यत्र नास्ति विप्रतिपत्तिः। सन्ति तु तत्रापि तादृशान्यपि स्थलानि यत्राऽऽलङ्कारिकसरण्या दुर्लभं समर्थनम्। तेषु कतिचन स्थलानि स्थालीपुलाकन्यायेन नयनविषयतां नेतुमर्हन्ति नयज्ञाः। तथाहि—

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि।
वसन् ददर्शाऽवतरन्तमम्बराद् हिरण्यगर्भाङ्गभुवं मुनिं हरिः[3]॥

---

१. एतस्य काव्यस्य बह्वयष्टीकाः सन्ति, परं तासु सर्वासु मध्ये महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायाः सर्वङ्कषायाष्टीकाया एव गुणगणगम्भीरतया काव्याशयस्येतरापेक्षया स्पष्टं प्रकटीकरणाच्च बाहुल्येन प्रचारो दृश्यते।

२. शिशुपालवधम्, निर्णयसागरसंस्करणे प्रस्तावः, पृ० २ सर्वङ्काषाया उपक्रमः ६।

३. शिशुपालवधमहाकाव्यम्—निर्णयसागरीये संस्करणे, पृ० १।

इतीदं गुणगणाढ्यस्य काव्यरत्नस्याऽस्याऽऽद्यं पद्यम् ।

अत्र 'जगज्जगद्' इति सकृद् व्यञ्जनद्वयसादृश्याद् वृत्त्यनुप्रासमभिप्रैति सर्वङ्कषाकारः[1]। तत्र 'पतिः श्रीमति', 'वसुदेवसद्मनि वसन्' 'तरन्तमम्बराद्धिरण्य' इत्यादौ तकारसकाररेफादेरसकृदावृत्त्या स्ताद् वृत्त्यनुप्रासः। 'जगज्जगद्' इत्यत्र तु शब्दस्यार्थस्य चाऽऽवृत्तिः, तात्पर्यमात्रे भेदः, तस्माल्लाटानुप्रास एव वक्तुमुचितः। 'शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः'[2] इति तल्लक्षणकक्षीकारात्। एतदेव दर्पणकारेणान्ववादि—''शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः[3]' इति।

अनुप्रासः सामान्यम्, वृत्तिच्छेकलाटादयश्च विशेषाः। तेषां व्यवस्थितविषयकतैव सकलालङ्कारागमविप्लवापत्तेर्युक्ता, न पुनः साङ्कर्यम्। आलङ्कारिकवरस्य महामहोपाध्यायहरिदासभट्टाचार्यस्य मतेऽप्यत्र लाटानुप्रास [4]एव। जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्चेति च [5]सूरिवरः। तत्र 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति लक्षणलक्षितत्वात् सत्यमत्र सत्त्वं विरोधस्य, न तु तस्य वाचकम् ( द्योतकम् ) किमपि पदमत्र दत्तमिति, स व्यङ्ग्य एव सम्भवति, न वाच्यः। अत एव—

अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते।
[6]प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥

शब्दशक्त्यनुरणनरूपव्यङ्ग्यस्य प्रथमभेदोदाहरणानामन्यतमतया मान्यतमानामग्रेसरो मम्मटभट्टः—

तिग्मरुचिरप्रतापो विधुरनिशाकृद् विभो मधुरलीलः।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान्॥

इत्यत्रैकैकस्य द्विपदत्वे विरोधाभासः।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो।
अहितः सहितः साधु यशोभिरसतामसि ॥ इति।

अत्रापि विरोधाभास इत्यव्याजं [7]व्याजहार।

---

१. निर्णयसागरीये सर्वङ्कषासहिते शिशुपालवधे पृ० १।
२. काव्यप्रकाशः ९।८२।
३. साहित्यदर्पणः।
४. समाधुरीके शिशुपालवधे १८८२ प्रकाशिते।
५. वेङ्कटेश्वरीये संस्करणे पृ० २।
६. काव्यप्रकाशः–४।३८।
७. स एव–४।३८।
उदाहरणद्वयेऽपि वृत्तौ विरोधाभास इत्यस्य व्यङ्ग्य इति शेषः। स्पष्टश्चेदं प्रायः सर्वेष्वेव प्रकाशव्याख्यानेषु।

सहृदयहृदयानन्दवर्धनः श्रीमदानन्दवर्धनश्च—

आक्षिप्त एवाऽलङ्कारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः[1] ॥

इत्येतन्निदर्शनत्वेन विरोधालङ्कारस्य ध्वनिं शब्दशक्त्युद्भवमनुरणनरूपं विशदयितुं स्थाण्वीश्वरजनपदवर्णनपरां भट्टबाणस्य वाणीमुदाहरति स्म—

'यत्र च मत्तमातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च, श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदनाः, मदिरामोदिश्वसनाश्च, चन्द्रकान्तवपुषः शिरीषकोमलाङ्ग्यश्च, अभुजङ्गगम्याः कञ्चुकिन्यश्च, पृथुकलत्रश्रियो दरिद्रमध्यकलिताश्च, लावण्यवत्यो मधुरभाषिण्यश्च, अप्रमत्ताः प्रसन्नोज्ज्वलरागाश्च, अकौतुकाः प्रौढाश्च प्रमदाः' । स्त्रीयां च—

सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ।
चतुरात्मानं निष्क्रियमरिमथनं नमतचक्रधरम्[2] ॥ इति ।

तस्माद् व्यङ्ग्य एवाऽत्र भवेद् विरोधः, न वाच्यः । वाच्यालङ्कारप्रवाहे तु सर्वङ्कषाकारोऽमुं व्याजहार । न च वाच्यव्यङ्ग्ययोरविशेषेणोक्तिर्युज्यते विशेषविदुषाम् । न च वाच्यगम्ययोर्विशेषं न विदाञ्चकार सर्वङ्कषाकार इति शक्यं वक्तुम्, स्थले स्थले तेन विविच्य तयोर्दर्शनात् । दिङ्मात्रमुदाह्रियते—

नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव ।
ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम्[3] ॥

इत्यत्र 'इन्दुदलस्यानुपात्तनिजधावल्यगुणनिमित्तमलयजार्द्रत्वगुणस्वरूपोत्प्रेक्षेति—

अवधार्य कार्यगुरुतामभवन्न भयाय सान्द्रतमसन्तमसम् ।
सुतनोः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे[4] ॥ इति ।

अत्रापि च—

'अत्र सन्तमसकुचयोः कामनिमित्ते भयकम्पानुदये कार्यगौरवावधारणहेतुकत्वोत्प्रेक्षेयमतेन व्यज्यते' इति वाच्यतास्थले सामान्यत उल्लिखन्नपि व्यङ्ग्यतायां तथा निर्दिशत्येव सः । एकत्रैव स्थले—

स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति ।
दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्यवर्त्म सुदृशां ददृशुः[5] ॥

---

१. ध्वन्यालोकः—२।२२ ।
२. सलोचने ध्वन्यालोके—निर्णयसागरसंस्करणे पृ० १२२–१२३ ।
३. शिशुपालवधम्—९।२८ ।
४. तदेव—९।२२ ।
५. तदेव—९।२२ ।

इत्यत्र—"अत्र रसाञ्जनवाक्यार्थेन प्रियवेश्यदर्शनसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः। तेन रसः सिद्धाञ्जनमिवेत्युपमाध्वननादलङ्कारेणालङ्कारध्वनिः" इति वाच्य-( कज्जक ) व्यङ्ग्यौ भेदेनैव निर्दिशति।

आद्यपद्यव्याख्यायां तु न तथा, प्रत्युत—अधिकस्य तद्रीत्या वृत्त्यनुप्रासभेदयोश्च। मध्ये विरोधस्योल्लेखः। तेषाञ्च संशयातिगतो वाच्यभावः। तस्माद् विरोधस्याऽपि स वाच्य-तामभिप्रैतीत्यसन्दिग्धम्। न च तदुपपन्नमुक्तहेतोरेव। तथा च—

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः[1] ॥

इत्यत्र—'अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्य-वर्णनाद् व्यतिरेकः'। तदुक्तं काव्यप्रकाशे—'उपमानादन्यस्य व्यतिरेकः स एव सः'[2] इति सूरिधौरेयः सर्वङ्कषाकारः[3]। न चैतद् युक्तिसहम्, अनूरुसारथेर्गतं तिरश्चीनम्, हविर्भुजो ज्वलनमूर्ध्वगतिः, विवेचनाविषयस्य ( नारददेह ) धाम्नः पतनं चाऽधः सर्वतोगतीति लक्षणभेद-मात्रस्याऽत्रोक्तेः, न पुनरुपमानत आधिक्यस्य, तस्यैव च लक्षणे व्यतिरेकशब्देनेष्टेः। 'किमेत-दित्याकुलमीक्षितं जनैः' इत्यक्षरसन्निवेशविद्वेषाच्च।

नहि व्यतिरेकस्थल ईदृशीसङ्घटना भवति। तस्मादुक्ताक्षररचनानुरौप्येण ससन्देह एवाऽत्र सङ्घटतेऽलङ्कारः। अनूरुसारथेर्गतं तिरश्चीनम्, हविर्भुज ऊर्ध्वज्वलनं प्रसिद्धम्। एतत्सर्वतो विसारि धाम अधः पततीति च भेदकानामुक्तिः। तथा च वाग्देवताऽवतारा मम्मटभट्टपादा एव लक्षयाम्बभूवुः—'ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः'[4] इति।

अत्र—'संशयः ससन्देहः' इति लक्षणम्। भेदोक्तौ तदनुक्तौ चेति विभागः[5]। त्रिभेद-श्चाऽयम्। तदुक्तम्—'शुद्धो निश्चयगर्भोऽसौ निश्चयाऽन्त इति त्रिधा'[6]। इति।

उदाहृतश्च समानरूपम्—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः,
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम्।
कृतान्तः किं साक्षान् महिषवहनोऽसाविति वदन्,
समालोक्याऽऽजौ त्वां विदधति विकल्पान् प्रतिभटाः[7] ॥ इति।

---

१. शिशुपालवधम्—१।२।
२. तदेव—१०।१०५।
३. वेङ्कटेश्वरीये सर्वङ्कषासंस्करणे पृ०—२।
४. काव्यप्रकाशः—१०।९२।
५. काव्यप्रकाशप्रदीपः—आनन्दाश्रमसंस्करणे पृ० ४६१।
६. साहित्यदर्पणः—१०।५१।
दर्पणकारः संशयनाम्नाऽलङ्कारमिमं व्यपदिशति।
७. सप्रदीपोद्द्योतकाव्यप्रकाशे, आनन्दाश्रमीये संस्करणे पृ० ४६२।

दृष्टान्ते—मार्तण्डादेः सप्ततुरगेतरत्वादिव प्रकृतेऽनूरुसारथिप्रभृतेस्तिरश्चीनगतादिवैधर्म्य-मात्रं बोधयति। ईदृशे च स्थले व्यतिरेकोपगमे भेदोक्तिमयस्य ससन्देहस्य समुच्छेद एवाऽऽपद्येत। तथा च सकलालङ्कारिकप्रदीपाः प्रदीपकृतः कृतवन्तो व्यक्तमुक्तोदाहरणविवेचने विनिर्णयम्—

'न चाऽयं व्यतिरेकाऽलङ्कारः, तस्य सन्देहानुयायितया तेनैव व्यपदेशौचित्यात्' इति। तस्मात् "गतं तिरश्चीनम्" इत्यादीनि मल्लिनाथस्य व्यतिरेकोक्तिरस्थाने। तत्समर्थने काव्य-प्रकाशीयस्य लक्षणस्योद्धरणञ्च सुतरां तथा 'तिरश्चीनं गतम्' इत्यादेरुपमानस्योपमेयाद् वैधर्म्य-मात्रबोधकत्वात्।

इदञ्चात्राऽवधेयं यत्—तिरश्चीनोर्ध्वैकगतिकाभ्यां तपनदहनाभ्यां सकाशात् पततः प्रकृतस्य धाम्नः सर्वतोगतिकत्वाद् व्यतिरेकं विवक्षंल्लक्ष्यते मल्लिनाथः। संरम्भगोचरता तु कुत्र कवयितुरिति विवेक एव निकषो विवेकस्य। उपसंहरणवर्णानुगुण्येन तु ससन्देह एव कवेरैदम्पर्यगोचरः पर्यवस्यति। विशेषणानां गतिश्चोक्तैव। भेदोक्तिगर्भे तस्मिन् नान्तरीयकता तेषाम्। तत्र व्यतिरेकेण व्यपदेशे चाऽस्य विलय एवाऽऽपद्येते इत्यवोचाम प्राक्।

न चेष्टापत्तिः शक्या कर्तुम्, पृथगलङ्कारजीवातोश्चमत्कारस्य दुरपह्नवत्वादन्यथा सकलालङ्कारागमाकुलीभावापत्तेः। तस्मादत्र व्यतिरेकोक्तिरयुक्तैव।

पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत।
गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः[1] ॥ इति।

टीकाकृतां मौलिमल्ली मल्लिनाथ इदं माघपद्यं व्याचक्षाण आह—

'पतत्पतङ्ग इत्यत्र पतङ्गस्य पतनाऽसम्भवादियमभूतोपमा' इत्याचार्यदण्डिप्रभृतयो बभणुः। अत एवाऽप्रसिद्धस्योपमानत्वायोगादियदुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्वे वर्णयन्तीति[2]।

अत्र चिन्त्यते—उपमा वा उत्प्रेक्षा वा परमार्थत इति। तत्र पतङ्गस्य पतनं लोकेऽ-प्रसिद्धमपि कविसम्प्रदाये सुप्रसिद्धमेव। अत एव कविकुलकुशेशयरविर्भारविः—

वीक्ष्य रन्तुमनसः सुरनारीरात्तचित्रपरिधानविभूषाः।
तत्प्रियार्थमिव यातुमथास्तं भानुमानुपपयोधिललम्बे[3] ॥

इत्यत्र सुरनारीप्रियफलत्वमुत्प्रेक्षमाणोऽपि भानुमत उपपयोधिलम्बनं नोत्प्रैक्षिष्ट।

एकतामिव गतस्य विवेकः कस्यचिन्न महतोऽप्युपलेभे।
भास्वता निदधिरे भुवनानामात्मनीव पतितेन विशेषाः[4] ॥ इति।

अत्र पतितेनेति विशिशेष स भास्वन्तम्।

---

१. शिशुपालवधम्—१।१२।
२. वेङ्कटेश्वरसंस्करणे पृ० ६-७।
३. किरातार्जुनीयम्—९।१।
४. तदेव—९।१२।

स्वयं माघश्चाह—

अभितापसम्पदमथोष्णरुचिर्निजतेजसामसहमान इव ।
पयसि प्रपित्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपपत्[1] ॥ इति ।
प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि[2] ॥ इति ।
पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत् परितस्तमांसि परितस्तरिरे[3] ॥ इति ।

इत्थं पतङ्गस्य पतनं वर्णयाम्बभूव बहुधा । तथा च कविसमयप्रसिद्धत्वादप्रसिद्धत्वोक्तिः पातङ्गपतनेऽसिद्धैव ।

किञ्चोत्तरार्धे—'गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीटादुदतिष्ठदच्युतः' इत्यत्रोपमा प्रयुक्तेत्यसन्दिग्धम् । तदानुरूप्याच्च पूर्वार्धेऽपि सैवोचिता, न तूत्प्रेक्षा ।

'पतङ्गप्रतिम' इत्यत्रत्यं 'प्रतिमा' पदञ्चोपमाया उपोद्बलकम्, नोत्प्रेक्षायाः, अस्योत्प्रेक्षावाचकेषु कुत्राप्यपरिगणनात् ।

'मन्ये' 'शङ्के' इत्यादीनां कतिपयेषामेव पदानां तथात्वेन प्रामाणिकैरुरीकारात्—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।
उत्प्रेक्षावाचकाः शब्दा इव शब्दोऽपि तादृशः[4] ॥ इति ।

'प्रतिमा' इत्यस्य प्रत्युत[5] सादृश्ये प्रसिद्धेः । अत एव 'गुरोः कृशानुप्रतिमाद् बिभेषि' इति कविकुलगुरोः प्रयोगः । कोशे च—

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ।
वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्[6] ॥ इति ।

एषां सदृशार्थकैः सह पाठात् । प्रतिमा······उपमायामित्यभिधानचिन्तामणेः[7] । स्वयं मल्लिनाथ उद्धृतचरं रघुवंशश्लोकं व्याचक्षाणः—कृशानुः प्रतिमा, उपमा यस्य तस्मादग्निकल्पा[8]दिति' प्रकृतं पद्यञ्च लापयन् 'पतन् पतङ्गः प्रतिमा, उपमानं यस्य'[9] इत्युपमार्थमेव

---

१. शिशुपालवधम्—९।१ । २. तदेव—९।६ । ३. तदेव—९।१८ ।
४. काव्यादर्शः—२।२३४, चौखम्भीये संस्करणे तु तृतीयचरणे 'उत्प्रेक्षा व्यज्यते शब्दैः' इति पाठः ( पृ० १६४ ) ।
५. रघुवंशम्०—२।४९ ।
६. अमरकोशः—२, शूद्रवर्गे ३६ ।
७. अभिधानचिन्तामणिः, तृतीयभागः, पृ० २४४ ।
८. निर्णयसागरीयसंस्करणे ।
९. वेङ्कटेश्वरीये संस्करणे ।

'प्रतिमा' पदं प्रतिपेदे। तस्मात् प्रतिमपदस्वारस्यादपि पतत्पतङ्गप्रतिम इत्यत्रोपमैवेति विभावनीयं भावुकैः।

वस्तुतस्तु—पततेरधःसंयोगानुकूलमर्थं मनसिकृत्य कृतिना तथाऽकथि मल्लिनाथेन। न च तत्राऽर्थे नियतिः पतेः। पत्लृगताविति गतिसामान्ये पाणिनिना तस्य पाठात्। नानाविधैरभिप्रायैश्च सौर्यागतेः श्रुतिस्मृतिपुराणेषूपलम्भात्। अन्यथा पतता पतङ्गेन देवर्षेः साम्यवर्णनेऽनौचित्यापातात्।

सर्वङ्कषाया व्याकृतिविवेचनप्रकरणे वितत्य विचारितमिति प्रकृते तद्विस्तराद्विरम्यते।

उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्।
उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया[1]॥ इति।

अस्मिन् हि माघपद्ये—कान्तारमार्गं कश्चिद् गच्छन् पाटच्चराधिरूढं गतागताभावेन दुर्गमं च बिभेतितमां मनसि सातत्येन तं पन्थानममुं निस्तीर्णश्च स्वं प्राप्यस्थानं प्राप्य निर्भयं निःश्वसिति, तथैवोद्रिक्तविषयं रागपाटच्चरपरिपूर्णं कतिभिश्च सुकृतिभिरेवोपगतं मोक्षमार्गं गता योगिनो भवन्त—( भगवन्तं वासुदेवम् )मेव गन्तव्यस्थानमधिगत्याऽभयमासादयन्ति। 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन'[2] इति श्रुतेः। अपेताऽपायश्च तत्स्थानं 'न स पुनरावर्तते' इति श्रुतेरित्याशयके ध्वनिमाह। तस्याऽयं भावः—कान्तारगामिपुरुषव्यवहारोऽत्र प्राधान्येन व्यङ्ग्यः। तत्सादृश्यस्य प्राधान्येन ध्वननाच्च प्रतिरोधकादिशब्दशक्तिमूलो ध्वनिरिति, 'अग्रभूमिः प्राप्यस्थानम्' अग्रमालम्बने प्राप्ये इति विश्व इति वदतः[4]।

परन्तु 'अग्रमालम्बने प्राये' इति कोशे केवलस्याग्रशब्दस्य प्राप्यापरपर्यायत्वमुक्तम्। तथा च—'त्वमग्र' इत्येव भगवत आलम्बनत्वस्य ( प्राप्यत्वस्य ) सिद्धिः। तस्य भूमित्वेन रूपणाद्रूपकमलङ्कारः—'रूपकं रूपितारोपो विषये निरपह्नवे'[5] इति।

शब्दतस्तात्पर्यतो वा प्रतिषेधरहिते विषय उपमेयपदार्थे रूपितस्य निरूपितस्य रूपकघटकत्वेनावधारितायोपमानाभेदस्य, उपमानपदार्थतादात्म्यस्येति यावद् आरोपः, सादृश्यातिशयवशात्....सारोपाख्यलक्षणया[6] आरोपणं रूपकम्। रूपयति = उपमानोपमेययोरभेदारोपणं करोतीति व्युत्पत्तिः।

भगवत्तत्त्वं पुनर्भूतभौतिकप्रपञ्चाद् भूम्यादेः परतमम्।
पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि[7]॥ इत्युक्तेः।

---

१. शिशुपालवधम्—१।१३।
२. तैत्तिरीयोपनिषत्—२।९।
३ छान्दोग्योपनिषत्—८।१५।१।
४. वेङ्कटेश्वरीये सर्वङ्कषासंस्करणे।
५. साहित्यदर्पणः—१०।
६. उपमेये उपमानाभेदप्रतीतेः सारूपाख्यलक्षणामूलकत्वे रूपकम्, साध्यवसानाख्यलक्षणामूलकत्वे तु अतिशयोक्तिः। उक्तदर्पणे म० म० हरिदासकृता कुसुमप्रतिमा,—पृ० ६२०।
७. पुरुषसूक्तम्।

अस्यालम्बनत्वं प्राप्यत्वञ्च—

एतदालम्बनं श्रेष्ठम् एतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा अत्र ब्रह्म समश्नुते[1] ।। इति ।

अपरञ्च—

तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्[2] ।। इति ।

'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः'[3] इत्यादिश्रुतिष्वसकृत् श्रुतम् । तथा च शारीरकमीमांसायां बादरायणश्रीचरणा निरदीधरन्—'मुक्तोपसृप्यव्यपदेशात्'[4] इति । तस्मात् किमास्तिकानामेव, नास्तिकानामपि तु दर्शनानां अरण्यान्याः पञ्चास्येन रूपणात्मनैवाऽत्र भूमिरिति निर्देशः कृतः, नान्यथा ।

तस्मादग्रभूमिरिति भूमिपदस्वारस्येन सावयवरूपकमिदम् । प्रतिरोधकशब्दे श्लेषश्च तदङ्गमिति प्रतिभाति । अत्र युक्तायुक्तत्वे सुधियः परं प्रमाणम् ।

विभिन्नशङ्खः कलुषीभवन्मुहुर्मदेन दन्तीव मनुष्यधर्मणः ।
निरस्तगाम्भीर्यमपास्तपुष्पकं प्रकम्पयामास न मानसं न [5]सः ।।

तथा च—'अत्र दन्तिरावणयोः प्रकृताप्रकृतयोः श्लेषः' इति मल्लिनाथः[6] । स च स्फुटं चिन्त्यः । उपमानोपमेयसाधारणधर्माणां चतुर्णामुपात्ततया पूर्णोपमायाः स्पष्टत्वात्[7] । सा च श्लेषेणानुप्राणितेत्यन्यदेतत् । एवम्—

परेतभर्तुर्महिषोऽमुना धनुर्विधातुमुत्खातविषाणमण्डलः ।
हृतेऽपि भारे महतस्त्रपाभरादुवाह दुःखेन भृशानतं शिरः[8] ।। इति ।

अत्र 'हृतेऽपि भारे नतमिति विरोधः, तदनुप्राणिता चेयमत्रनतिहेतुत्वसाधर्म्यात् त्रपाभरत्वोत्प्रेक्षा' इति [9]मल्लिनाथः । यथा तु तेनाशयो वर्णितस्तथा रूपकस्यैव ज्यायस्त्वं प्रतिभाति ।

त्रपैव भरस्तस्मात् । ततोऽपि दुर्भरादिति भावः । त्रपैव भर इति हि रूपकोचितः पदक्रमः, नोत्प्रेक्षोचितः, 'तद्रूपकमभेदो य उपमानोपमेययोः[10]' इति सिद्धान्तात् ।

---

१. यजुर्वेदीयकठोपनिषत्—२।१७ ।
२. मुण्डकोपनिषत्—३।२।८ ।
३. छान्दोग्योपनिषत्—८।७।१ ।
४. ब्रह्मसूत्रम्—१।३।२ ।
५. शिशुपालवधम्–१।५५ ।
६. वेङ्कटेश्वरीयसंस्करणे–पृ० २३ ।
७. म० म० हरिदासकृता 'माधुरी' ।
८. शिशुपालवधम् १।५७ ।
९. वेङ्कटेश्वरीयसंस्करणे-पृ० २३ ।
१०. काव्यप्रकाशः–१० ।

न चात्रोत्प्रेक्षाया वाचकमुपस्थापकं वा किमपि । 'अपाया भरोऽतिशयः—अन्यथाऽतिशयो भरः' इत्यमरात्[1], तस्मादित्येवं व्याख्याने गम्योत्प्रेक्षेति वक्तुं घटेतापि । न तु तथा कृतम् । तस्मादुत्प्रेक्षोक्तिरयुक्तैव ।

करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम् ।
हरे हिरण्याक्षपुरस्सरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया[2] ॥

इत्यस्य व्याख्याने—'अत्रासुरद्विपानामिति हरिवद्धरिरिति । श्लिष्टपरम्परितरूपकं मृगाणामिवेत्युपमयाऽङ्गाङ्गिभावेन सङ्कीर्यते' इत्याह मल्लिनाथः । हरिरिति कृष्णसिंहयोरुपस्थितौ श्लेषेण कृष्णे सिंहत्वारोपरूपे परम्परितरूपके 'मृगाणामिवेति तत्रोपमाङ्गभावमृच्छतीति तस्य भावः । परम्परितया च कृष्णे सिंहत्वारोपस्याऽसुरेषु द्विपत्वारोपौपयिकत्वात् ।

तत्त्वतस्तु रूपकोपमयोः सङ्कर एवाऽसुरद्विपेत्यत्राभ्यपगन्तुमर्हः–असुरा द्विपा इवेति लुप्तोपमाया अवसीयमसत्वात् । अन्यतरस्य सावधिकबाधकाऽभावात् 'मृगाणामिवेत्युपमा' तावदविद्यमानविवादा । तदानुगुण्याय प्रत्युतोपमाया एवाऽत्रोपगमे स्वारस्यसंरक्षणात् । सुधियः समीक्षन्तां युक्तायुक्तत्वे ।

तदिन्द्रसन्दिष्टमुपेन्द्रयद्वचः क्षणं मया विश्वजनीनमुच्यते ।
समस्तकार्येषु गतेन धुर्यतामहिद्विषस्तद् भवता निशम्यताम्[3] ॥ इति ।

अत्र 'स्फुटमत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः' इति मल्लिनाथः । उपेन्द्र इन्द्रावरजः । अत एवेन्द्रसन्दिष्टं श्रोतव्यमिति भावः । तत्र सम्बोधनपदमुपेन्द्र इति वचनस्य भवतश्च विशेषणं क्रमेण विश्वजनीनमिति । धुर्यतां गतेनेति च समर्पयन्ति । श्रवणे हेतुमिति तस्याशयः । परन्तु नोक्तैः पदैः स्फुटतया हेतुः समर्प्यते । साभिप्रायतया तु तेषां प्रयोग इति । परिकर एव युक्तः ।

उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः[4] ।

इति लक्षणात् । पदार्थबलात् प्रतीयमानोऽर्थ एवात्र वाच्योपकारकताङ्गतः, न पदार्थः । अयमेवाऽलङ्कारयुगलया भेदः ।

यदाहुः—"ननु साभिप्रायपदार्थविन्यसनरूपात् परिकरात् काव्यलिङ्गस्य किं भेदकमिति चेत्, उच्यते—परिकरे वाक्यार्थबलात् प्रतीयमानोऽर्थो वाच्योपकारकतां भजते । काव्यलिङ्गे तु पदार्थवाक्यार्थाविव हेतुभावं भजते"[5] इति । परिकरलक्षणे च विशेषणैरित्युपलक्षणं विशेष्यस्यापि, तेन साभिप्राये विशेष्येऽपि सः ।

तेन साभिप्राये विशेष्येऽपि तत्प्रवृत्तिः । यथा—'चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः' इति ।

अत्र चतुर्भुज इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम् । बाहुलकलभ्यकर्मल्युडन्तकरणल्युडन्तयोर्विशेषणपदयोरेकशेषो वा । उक्तिरित्यस्यार्थकथनमित्येवार्थः । एतेन

१. अमरकोशः १।१।६६ ।
२. शिशुपालवधम्–१।२९ ।
३. शिशुपालवधम्–१।२१ ।
४. काव्यप्रकाशः–१०।१।७ ।
५. वामनाचार्यकृतं काव्यप्रकाशव्याख्यानम्–पृ० ६७८ ।

साभिप्राये विशेष्ये परिकराङ्कुरनामाभिन्नोऽलङ्कार इत्यपास्तम्—इत्युद्योतकृतः । तथा च—
'साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुरः[1]' इति ।

जयदेवोक्तिरन्यथासिद्धैवेति तदीयं हार्दम् । सुधासागरकृतो भीमसेनस्तु[2]—'विशेष्यांशस्य साभिप्रायत्वे परिकराङ्कुरः स्वीकृतो जयदेवादिभिः । न चाऽसौ प्रामाणिकः, तत्रापि विशेषणांशस्यैव साभिप्रायत्वात् । निर्धर्मकस्य विशेष्यांशमात्रस्य स्वप्नेऽपि साभिप्रायत्वासम्भवादित्यभिप्रयन्ति । उभयथापि 'उपेन्द्रः' इति प्रकृतपद्यान्तर्गतपदेऽपि परिकर एव सिद्ध्यति, न काव्यलिङ्गम् ।

नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्[3] ।। इति ।

'अत्र समानधर्मबिम्बबिम्बिततया दृष्टान्तालङ्कारः' इति सर्वङ्कषाकारः[4] ।

वस्तुतस्तु—'प्रतिवस्तूपमा तु सा । सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः[5]' ।। इति ।

लक्षणलक्षितस्य प्रतिवस्तूपमालङ्कारस्यैवाऽयं विषयः । प्रतिवस्तु प्रतिवाक्यार्थमुपमा साधारणधर्मो यत्रेति तन्निरुक्तिः । वाक्यार्थो हि वाक्यार्थं प्रत्येवोपमानम् । भिन्नशब्दोपात्तैकधर्मके वाक्यार्थयोरार्थिकमौपम्यं प्रतिवस्तूपमेति प्रभाकृतां निष्कृष्टं लक्षणम्[6] ।

अत्र च दृष्टान्तालङ्कारे व्याप्तिवारणायाद्यं विशेषणम् । स्मरणालङ्कारवारणाय च वाक्यार्थेति[7] । तथा च भिन्नविषयत्वात् प्रतिवस्तूपमैवाऽत्र न दृष्टान्त इति सुधीभिरूह्यम् । 'न····अतिशय्यते, न····अत्येति' इत्यनयोर्वाच्यभेदेऽपि धर्मस्यैक्यमस्मद्दृष्टौ तु—भास्वतः प्रभाप्रतीकाशम् ।

भवतु, दिग्दर्शनमात्रमस्माकमभिप्रेतम् । अत एवाद्यसर्गद्वयादेव कतिचिदुदाहरणानि कृतसमाहरणानि । तानि सारस्वतस्य ( सागरस्य ) आनन्त्यमेव पर्यवसाययन्ति । तथापि तत्तलमवगाह्य अनपायिप्रभाभासुराणि नित्यनूतनानि रत्नानि ये समाजह्रुः, ते पूर्वे श्रद्धापूर्वमाराध्या एवेति नालोचिताचार्यवर्याणां श्रद्धेयताऽपचय इत्यनाविलमखिलं विपश्चिदपश्चिमेष्विति शिवम् ।

---

१. काव्यप्रकाशस्य काव्यलिङ्गस्थप्रदीपे उद्योतः ।
२. निर्णयसागरीये कुवलयानन्दस्य टिप्पणे—पृ० ७७ ।
३. शिशुपालवधम्—२।२३ ।
१. वैङ्कटेश्वरीये संस्करणे—पृ० ३८ ।
२. काव्यप्रकाशः—१०।९५–१६ ।
३. सप्रभे निर्णयसागरीये प्रदीपस्य संस्करणे—पृ० ३४३ ।
४. तत्रैव ।



# अलङ्कारचिन्तामणिप्रणेतुरजितसेनस्य समयः

डॉ० दशरथद्विवेदी
गोरखपुरविश्वविद्यालयः

अलङ्कारचिन्तामणिरिति नाम्ना विश्रुतः श्रीमदजितसेनस्यालङ्कारशास्त्रग्रन्थोऽतितरामेव प्रशंसनीयः खलु संस्कृतकाव्यशास्त्रेतिहासक्षेत्रे। ग्रन्थेऽस्मिन् सन्ति पञ्च परिच्छेदाः। प्रथमपरिच्छेदे काव्यहेतुस्वरूपप्रयोजनादीनि प्रतिपादितानि सन्ति। द्वितीये च परिच्छेदे चित्रवक्रोक्त्यनुप्रासयमकानां चतुर्णां शब्दालङ्काराणामुल्लेखक्रमेण शतद्वयादप्यधिकभेदप्रतिपादनोदाहरणप्रदर्शनपुरस्सरं चित्रालङ्कारव्याख्यानमुपलभ्यते। वक्रोक्त्यनुप्रासयमकानां त्रयाणां शब्दालङ्काराणां लक्षणोदाहरणानि च तृतीये परिच्छेदे सन्ति निबद्धानि। चतुर्थपञ्चमयोः पुनः क्रमेण विद्यानाथानुसारि कक्षाविभागोऽर्थालङ्काराणां रसध्वनिगुणदोषादीनाञ्च सम्यग्विनिबन्धनं परिदृश्यते। एवं नूनमेव प्रबन्धोऽतितराम् उपयोग्यनुसन्धित्सुजिज्ञासुच्छात्राणाम्।

सर्वप्रथमं श्रीमत्पद्मराजपण्डितवर्यैः 'काव्याम्बुधौ' त्रिचतुर्वा नवत्युत्तराष्टादशशततमेशवीयख्रीष्टाब्दे (१८९३–९४ ईशवीयवर्षे) प्रकाश्यतां नीतोऽयं ग्रन्थः[1]। तदनु चैकोनत्रिंशत्युत्तराष्टादशशततमे शकसंवत्सरे (१८२९) कोल्हापुरस्थजैनमुद्रणालयादस्य द्वितीयमपि प्रकाशनं सञ्जातम्। प्रकाशनेऽस्मिन् भ्रान्त्या मुखपृष्ठे ग्रन्थकर्तुः 'जिनसेनः' इति नामोल्लेखो दृश्यते; किन्तु ग्रन्थकृता स्वयमेव स्वकृतौ स्वनामसङ्कीर्तनं व्यधात्—'अजितसेनेन कृतः चिन्तामणिः भरतयशसीति गम्यते'[2] इति।

अत एव लेखकोऽस्य काव्यशास्त्रग्रन्थस्य नूनमेवाजितसेनो न तु जिनसेन इति।

ग्रन्थकर्तृविषये डॉ० सुशीलकुमारदेमहोदयैरुक्तं यत् कविरयमजितसेनो गङ्गराजरासमल्लस्यामात्यस्य चामुण्डायस्य पुरोहितो दिगम्बरजैन आसीत्। समयश्च तस्य दशमशतकस्यान्तिमो भागः खल्वासीत्। स वै कन्नडकवेर्नागवर्मण उपाध्याय आसीत्, यो रासमल्लस्यानुजस्य रासगङ्गस्याधीनतायामासीत्[3]। इतिहासप्रमाणाद् ग्रन्थकर्तुर्देमहोदयप्रतिपादितकालः चामुण्डारायस्य मन्त्रित्वञ्चेत्युभयमपि विरुद्धम्।

ग्रन्थकर्तुः कालनिर्धारणे सन्त्युपलब्धानि पञ्च तथ्यानि, येषां समुपलब्धौ डॉ० देमहोदयस्य कथनमयुक्तिमत्त्वमवगाहते। तानि च यथा—

---

१. द्रष्टव्यमत्र—इण्डिया ऑफिस प्रिण्टेड बुक्स, १९३८, पृ० ७२।

२. अलङ्कारचिन्तामणौ, पृष्ठाङ्काः—४४।

३. द्र०—डॉ० एस० के० देमहोदयस्य 'हिस्ट्री ऑफ संस्कृत पोइटिक्स' पृ० २६४—६५। तुलनीयम्—काणेमहोदयस्य 'संस्कृत काव्यशास्त्र का इतिहास' इति नाम्ना प्रसिद्धग्रन्थस्य पृष्ठाङ्काः—८४६।

(१) ग्रन्थस्य पुष्पिकायां राजाधिराजचामुण्डाराज्ञ उल्लेखः,
(२) ग्रन्थकृत्प्रतिपादनया पञ्चास्यपराक्रमेण म्लेच्छपराजयः,
(३) ग्रन्थे वाग्भटस्योल्लेखः,
(४) अर्थालङ्काराणां कक्ष्याविभागेषु विद्यानाथस्य पूर्णतयानुगामित्वं केषाञ्चित्तन्मतानां खण्डनञ्च ।
(५) पुष्पिकायां ग्रन्थस्य पठनश्रवणतिथ्योः कथनञ्च ।

ग्रन्थकृता ग्रन्थपरिसमाप्त्यवसर आत्मपरिचयनिवेदनात्मकपुष्पिकायां[1] प्रतिपादितविवरणैस्तस्य कालनिर्धारणं कर्तुं शक्यते । आत्मकथायां तेन स्वं च काश्यपगोत्रस्य चाहमान इत्युक्तम् । सामान्यतया चाहमानानां गोत्रो वत्स आसीदिति मन्यते । विजोलियाभिलेखे लिखितं वर्तते यच्छाकम्भरीचाहमाना वत्सगोत्रस्य विप्रात्सञ्जाताः[2] । कतिपयाभिलेखेषु च काश्यपगोत्रीयानामपि चाहमानानामुल्लेखो दृश्यते ।

अभिलेखैर्ज्ञायते यत् काश्यपगोत्रीयचाहमानाः पूर्वमध्यकालप्रारम्भ आसन् राजस्थानप्रदेशे । चामुण्डाराजस्तु नासीदमात्यः, एतत्तु ग्रन्थपुष्पिकयैव सुस्पष्टं प्रतिभाति । अत्र च सः राजाधिराजविशेषणमण्डितो दृश्यते । चामुण्डाराजः नड्डूलवंशस्य चाहमानराजासीदिति प्रतीयते । अभिलेखेषु चास्य महाराजपुत्रचामुण्डाराज इति रूपेणोल्लेखो विद्यते । सप्तसप्तत्युत्तरद्वादशशततमेषु विक्रमाब्देषु ( वि० सं० १२७७ ) स 'मण्डोर' मण्डले शासनं कुर्वन्नासीत् । तस्य ज्येष्ठभ्राता 'सिंहविक्रमः' एकचत्वारिंशदधिकद्वादशशततमेषु विक्रमाब्देषु (१२४१ वि०सं०) स्वपितुर्किल्हणस्याधीनतायां 'मण्डोरम्' इति 'माण्डव्यपुरम्' इति वा प्रसिद्धमण्डले शासक आसीत् । अष्टसप्तत्यधिकैकादशेषु ख्रिष्टीयाब्देषु ( ई० सन् ११७८ तथा च वि० सं० १२४३–४४ ) 'गोरी' इति नाम्ना यवनशासकेन किल्हणमभिभूय पराजित्य तस्य राजधानीं नाडोकनगरमधिकृतम्, किन्तु यदा तेनाग्रेऽप्यभियानं कृतं किल्हणस्यानुजेन कीर्तिपालस्य परमारराज्ञो धारावर्षस्य सेनाभ्यामाक्रमितपराजयमुखमुपलेभे[3] ।

---

१. जगत्प्रपूज्यविन्ध्याग्रे इक्ष्वाकुवरवंशजम् ।
सुरासुरादिवन्द्याङ्घ्रि दोर्बलीशं नमाम्यहम् ॥१॥
राजाधिराजचामुण्डराज्ञानिर्मितपत्तनम् ।
तत्पुरे स्थितवतां चारुकीर्तिपण्डितयोगिनाम् ॥२॥
प्लवसंवत्सरे मासे शुक्ले च सुशरद्दतौ ।
अश्विजे च चतुर्दश्यां युक्तायां गुरुवासरे ॥३॥
एतद्दिनेष्वलङ्कारचिन्तामणिसमाह्वयम् ।
सम्यक् पठित्वा श्रुत्वाहं सम्पूर्णं शुभमस्तु नः ॥४॥
काश्यपे नाम्नि गोत्रे च सूत्रे चाह्वाननाम्नि च ।
प्रथमानुयोगशाखायां..... वृषभप्रवरेऽपि च ॥५॥
एतद्वंशेषु जातोऽहम्—इति ।

नातः परं पाठो लभ्यते ।

२. द्र०, डॉ० दशरथशर्मणः अर्ली चौहान डाइनस्टीज, पृ० ९, तथा च विजोलियाभिलेखः फाल्गुनवदी–३, वि० सं० १२३० ।

३. डॉ० दशरथशर्मा, तत्रैव, पृ० १३८ तथा खुन्दाभिलेखः, श्लोकः–३६ ।

अत एव ग्रन्थोल्लिखितः पञ्चास्य [1]पराक्रमः, येन म्लेच्छाः पराभूताः, निश्चितं सिंहविक्रमेणैव तेन भाव्यम् । सन्दर्भेऽस्मिन् सिंहविक्रमस्यानुजश्चामुण्डाराज्ञो ग्रन्थस्यास्य चामुण्डाराजो भविष्यति । एवमस्यालङ्कारग्रन्थस्य प्रणेतुरजितसेनस्य कालः सहस्रसहस्त्यधिकद्वादशशततमाद्विक्रमाब्दात् ( वि० सं० १२७७ ) प्राक्कथमपि नैव स्थापयितुं शक्यते ।

ग्रन्थकृत् स्वीयकृतौ द्विर्वाग्भट्टमुद्धृतवान् । औदार्यगुणस्य व्याख्यानानन्तरं स्वोक्तिसमर्थनार्थं सः वाग्भटमतमवतारयति—

पदानामर्थचारुत्वप्रत्यायकपदान्तरैः ।
मिलितानां यदादानं तदौदार्यं स्मृतं यथा ॥

इति वाग्भटोक्तिरपीष्टा[2] ।

पूर्वोक्तेयं कारिका वाग्भटप्रथमस्य ग्रन्थे वाग्भटालङ्कारे अविकलतयोपलभ्यते[3] गुणनिरूपणावसर एव पुनरपि वाग्भटमनुस्मरन् ग्रन्थकृता कथितम्, वाग्भटादिमतौ उदात्तगुणमौदार्यगुणेऽन्तर्भवतीति[4] । ध्यातव्यमत्र—वाग्भटप्रथमेनोदात्तगुणस्योल्लेखोऽपि न कृतः । स च दशगुणान् प्रतिपादयति—औदार्यम् समता, कान्तिः, अर्थव्यक्तिः, प्रसन्नता, समाधिः, श्लेषः, ओजः, माधुर्यम्, सौकुमार्य्यञ्च[5] । एवं यद्यपि 'वाग्भटः' उदात्तगुणस्य न करोत्युल्लेखः, न च कथयति उदात्तमौदार्येऽन्तर्भवति, तथाप्यनुल्लेखाद् ज्ञातुं शक्यते । तत् तस्यास्मिन् विषये सहमतिरवश्यमेवासीत् । अनेन स्पष्टतरं यत् 'अलङ्कारचिन्तामणेः' प्रणेता वाग्भटप्रथमात् पश्चादासीत् । वाग्भटप्रथमस्तु अणहिलपट्टनस्य शासकस्य चालुक्यजयसिंहसिद्धराजस्याश्रयच्छायायामासीद् यस्य च कालः खीष्टाब्दं १०९४–११४३ इति मन्यते इतिहासविद्भिः । डॉ० देमहोदयानुसारेण वाग्भटप्रथमः खीष्टाब्द—११२३–११५७ समये जगदलङ्कार, साहित्यिककार्यकालश्च तस्य सम्भवतया द्वादशशतकस्य पूर्वार्द्धं आसीत्[6] ।

अलङ्काराणां कक्ष्याविभागघटनेषु रुय्यकमतमवलम्ब्य विद्यानाथविभाजनपद्धतिमेव स्वीकृतवान् अजितसेनाचार्यमहोदयः । यथा च विद्यानाथः समग्रानलङ्कारग्रामान् प्रथमं चतुर्धा विभाजितवान्—प्रतीयमानवस्तु, प्रतीयमानौपम्यम्, प्रतीयमानरसभावादि, अस्फुटप्रतीयमानत्वञ्चेति रूपेण ग्रन्थकृताप्येवमेव कृतम् । पुनश्च विद्यानाथानुसारमेव भेदाभेदाभेदभेदेति

---

१. तान् म्लेच्छान्विहितागसोऽपि नमयप्राणैः सह श्रीजये—
व्यात्तश्रीकरुणः सुरेशहरिदाद्यब्धिस्यदेवानतिः ।
ध्यायन्नप्यनहङ्कृतिः सकलदिग्भूमीशपूज्याङ्घ्रिकः,
श्रीपञ्चास्यपराक्रमो नविकृतिं सर्वत्र सोऽगान्निधीट् ॥ (अ० चि०, ५।३१५ )

२. अ० चि०, पृ० १३७–३८ ।

३. वाग्भटालङ्कारे—३।३ ।

४. उदात्तमौदार्येऽन्तर्भवति वाग्भटाद्यपेक्षया । अ० चि०, पृ० १३२ ।

५. द्र०, वाग्भटालङ्कारः—३।२ ।

६. डॉ० दे०, तत्रैव, पृ० १९२–९३ ।

त्रिरूपसाधर्म्यस्य, अध्यवसायस्य, विरोधस्य, वाक्यन्यायस्य, लोकव्यवहारस्य, तर्कन्यायस्य, शृङ्खलावैचित्र्यस्य, अपह्नववैचित्र्यस्य विशेषणवैचित्र्यस्य चाधारेण समस्तानर्थालङ्कारान् विभक्तवान् अलङ्कारचिन्तामणिकर्ता[1]।

अलङ्कारवर्गीकरणे विद्यानाथमनुसरन्नपि अजितसेनेन तेषां खण्डनमपि कृतम्। विद्यानाथस्तु साधर्म्यम्, भेदोऽभेदः, भेदाभेदश्चेति त्रिधा विभज्योचिवान् अभेदप्राधान्यालङ्कारेषु उपमानोपमेययोः स्वत एव भिन्नत्वाद् अभेदप्राधान्यं तत्र शाब्दं ( आरोपितम् ) भवति, न तु वास्तविकम्--'उपमानोपमेययोः स्वतो भिन्नत्वाच्छाब्दमेतन्न वास्तवम्[2]' । इति ।

असहमतः खल्वजितसेनाचार्यो विद्यानाथस्यास्मिन् सिद्धान्ते । स चाभिमन्यते साधर्म्यस्य वस्तुरूपतया उपमानोपमेययोर्वास्तविकत्वमुचितमेव, अन्यथा शशविषाणयोरप्युपमानोपमेयत्व-भावप्रसङ्गो भविष्यति 'तत्पुनरुपमानोपमेययोः स्वतो भिन्नत्वाच्छाब्दमेव न वास्तवमित्येके । तदसत्, साधर्म्यस्य वस्तुरूपत्वादन्यथा खरविषाणशशविषाणयोरप्युपमानोपमेयत्वप्रसङ्गात्[3]' ।

स्पष्टमेव, अलङ्कारचिन्तामणेर्लेखको विद्यानाथात् पश्चात्तनीन एव । डॉ० देमहोदया-नुसारेण विद्यानाथस्य समयः त्रयोदशशतकाब्दस्यान्तिमो भागः चतुर्दशस्य च प्रथमो भाग एव भविष्यति[4] । अत एवायमजितसेनः तदनन्तरवर्त्यैवास्ति ।

ग्रन्थस्य पुष्पिकायां ग्रन्थकृता लिखितम्—प्लवसंवत्सरे, शरदृतौ, आश्विनशुक्लचतुर्दश्यां गुरुवासरे च ग्रन्थस्य सम्यक् पठनं श्रवणञ्च अनुष्ठितमिति । अफेमरीजम-( पञ्चाङ्गचक्रम् ) नुसृत्य तत्स्थदिनादिसाक्ष्येण १५९० विक्रमाब्देषु, अधिकत्रिंशदुत्तरपञ्चदशशततमेशवीयाब्द-स्यावतूबरमासस्य द्वितीयतिथौ ( २ अक्तूबर, १५३३ ई० ) पूर्वोक्तानि तिथिपक्षमासवासरादीनि आसन् इति निर्धार्यते ।[5] एवमुपरितनप्रतिपादितसामग्रीसमवलम्बनेन अजितसेनस्य पञ्चदश-शतकस्यान्तिमे भागे षोडशशतकस्य च पूर्वार्द्धभागे धरित्रीमलङ्कुर्वतोऽलङ्कारग्रन्थप्रणयनादिसमयो भविष्यतीत्येवमेवाकलनीयं विद्वद्भिरिति शम् ।

---

१. प्रतापरुद्रयशोभूषणम्—पृ० २४५-४६ तथा च तु० अ० चि०, पृ० ५१-५३ ।

२. प्र० रु० य० भू० पृ०, २४६ ।

३. अ० चि० पृ० ५२ ।

४. डॉ० दे, तत्रैव, पृ० २०९ ।

५. द्रष्टव्यमत्र—स्वामिकन्नुपिल्लेकृतमफेमरीज, भागो पञ्चमः—पृ० २६९ ।

●●●

# स्वप्नवासवदत्तस्य पताकामीमांसा

श्रीइन्द्रमोहनसिंहः

संस्कृतविभागे, सागरविश्वविद्यालयः ( म० प्र० )

पताकाशब्दस्यार्थो ध्वजोऽस्ति। ध्वजस्त्वचेतनः, परं पञ्चोपायेषु पताका चेतनभूता[1]। अतः पताकाशब्दस्यात्र सङ्गतिर्न विद्यते किम्? पताका खलु यथा कस्यापि राज्ञः प्राशस्त्य-सूचकम्, एवं द्वयोः प्राशस्त्यसाम्येनाभिधानं युज्यते[2]।

उपनायकवृत्तान्तः प्रासङ्गिक उदाहृतः[3]। स्वप्नवासवदत्त एतादृशो वृत्तान्तः पद्मावत्या अस्ति। प्रधानत्वाद् वासवदत्ता नायिका, पद्मावती चोपनायिका। अस्मिन्निबन्धे विविधशास्त्र-प्रमाणेन पद्मावत्या वृत्तान्तः पताकारूपेण निरूप्यते।

आनुषङ्गिककथा प्रधानस्योपकरणार्थं भवति[4]। यथा रामायणे सुग्रीवस्य कथा रामस्य कृते, तथैव पद्मावत्या सह विवाहेनोदयनेनापि संवर्धितशक्तिना पुना राज्यमधिगतम्।

प्रासङ्गिकस्य स्वार्थोऽपि प्रसङ्गतो मतः[5]। पद्मावत्याः स्वार्थसिद्धिरूपयुक्तपतिरूपेणो-दयनस्य प्राप्त्या भवति। रामायणे सुग्रीवः स्वकीयं राज्यं पत्नीं च फलरूपेणावाप्नोति। पश्चात् तेन प्रधानफलाय रामस्य पूर्णमनोयोगेन सहायता विहिता। पद्मावत्या सह विवाहा-नन्तरमुदयनस्योदयो नितरामभूत्। प्रथमं पद्मावतीपितृपक्षसेना राज्यप्राप्तये सहायिका बभूव। तदनन्तरं वासवदत्ताविषयकसूचनया पद्मावत्या नायक आह्लादितः।

पताकानायकस्य फलसिद्धिर्गर्भसन्धिपर्यन्तमथवा विमर्शसन्धिपर्यन्तं निबध्यते[6]। यदि न स्यादेवं तर्हि नाट्यदोषमुद्दिश्य नाट्यदर्पणेऽभिहितम्—'निर्वहणसन्धावपि तत्फले निबध्यमाने तुल्यकालयोरुपकार्योपकारकत्वाभावान्न तेन प्रधानस्योपकारः स्यात्'। स्वफलप्राप्त्यनन्तरं पताकानायकः प्रधाननायकस्य सहायकरूपेण तस्य फलासिद्धये यतमानो वर्ण्यते। एवं च

---

१. इह हेतुर्द्विविधोऽचेतनश्चेतनश्च····चेतनोऽपि द्विधा—मुख्य उपकरणभूतश्च···उपकरणभूता द्विधा—स्वार्थसिद्धियुतः, परार्थसिद्धिपरश्च। पूर्वः पताका अन्यः प्रकरीति।—ना० द० प्रथमो विवेकः।

२. ना० द० प्रथमविवेके २७ सूत्रस्य वृत्तिभागो दर्शनीयः।

३. भा० प्र० पृ० २०१ मा० ओ० सां।

४. ना० शा० १९-५। प्रासङ्गिकं द्विविधम्—सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक्—द० रू० सूत्रम्–२१।

५. द० रू० सूत्रम्–२० प्रथमप्रकाशः।

६. नायकशब्दो मुख्यनायकनायिकोपनायकादीनां द्योतकोऽस्ति। नाटकलक्षणरत्नकोशो दर्शनीयः—पृ० सं० २८ ( चौ० सं० सी० )

नाट्यसमाप्ति यावदङ्केषु भवितुमर्हति । स्वप्नवासवदत्तस्य चतुर्थाङ्के समारब्धो गर्भसन्धिः[1] । अस्याङ्कस्य प्रारम्भ एव पद्मावत्युदयनयोर्विवाहः सूचितः । यथा—"विदूषकः—( सहर्षम् ) भोः ! दिष्ट्या तत्रभवतो वत्सराजस्याभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः" इति ।

अतः पताकानायिकायाः पद्मावत्या उदयनप्राप्तिरूपफलाधिगतिरूपयुक्तस्थानप्रतिपादनेन शास्त्रशरणिमनुसरति । परवर्तिष्वङ्केषु सोदयनप्रयोजनप्राप्तये सहायिकारूपेण निरूपिता ।

उदयनस्य कथा नैककविभिः काव्यविषयीकृता । तेषु राज्ञो हर्षस्य नाटिकाया रत्नावल्याः प्रसिद्धिः सर्वातिशायिनी । यथा स्वप्नवासवदत्ते विवाह उदयनस्य पद्मावत्या सहाभूत्, तथा रत्नावल्यां नास्ति । अस्यामुदयन-सागरिकयोः प्रेमकथा विविधरूपेण नाटिकायाः समाप्ति यावद् विनिबद्धा । यथा पद्मावत्या वृत्तान्तः पताकारूपेण स्वप्नवासवदत्ते स्वीकृतः, तथा सागरिकायाः कथा न शक्यते स्वीकर्तुम्, तस्याः प्रधानत्वात् । उदयनसागरिकयोरनुरागः शास्त्रकारैर्बीजरूपेण [2]वर्णितः । नाटिकायामुदयनसागरिकयोर्विवाहस्वीकृतिरूपमिलनमन्ते भवति । परं स्वप्नवासवदत्ते चतुर्थाङ्क एवोदयनपद्मावत्योर्विवाहस्य सूचनाऽवाप्यते, पद्मावत्या अप्रधानत्वात् । विवाहानन्तरमनेकदीर्घप्रेमव्यापारसम्पन्नं प्राक् करुणार्द्रं पश्चाद् हर्षोद्रेकं पुनर्मिलनमुदयनवासवदत्तयोः कविना कारितम् । स्वप्नवासवदत्ते वासवदत्ताया प्रधानता दराहश्यते, रत्नावल्यां सागरिकायाः । अस्मिन् प्रसङ्गे रत्नावल्याम् उदयनः स्वयमेव व्याजहार–

श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितम्,
वक्त्रेऽस्याः कुटिलीकृतभ्रुवि यथा यातं मया पादयोः ।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परम्,
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥[3]

भासेनापि वासवदत्तायां पौनःपुन्येनोदयनस्य प्रीत्याधिक्यं प्रतिपादितम् । तद्यथा—

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः ।
वासवदत्तावद्धं न तु तावन्मे मनो हरति ॥[4]

अतो निष्कर्षरूपेण वयं कथितुं पारयामो यदुदयनसागरिकयोर्नाटिकायामनुरागबीजं विकसितं भूत्वा तयोर्मिलनरूपफले परिणतम् । एवमेतद् वस्तत्राधिकारिकम् । किन्त्वीदृशमनुरागबीजमुदयनपद्मावत्योर्नाटके न विकसितं वासवदत्तायां नृपस्यानुरागाधिक्यात् । उदयनराज्यप्राप्तये सहायिका वासवदत्तायाः संरक्षिका च भूत्वा पद्मावती प्रधानफलप्राप्तये पताकावदस्ति । अत एतत्सम्बद्धवस्तु प्रासङ्गिकम् ।

---

१. दीक्षितमहोदयस्य शोधप्रबन्धः 'भास की भाषासम्बन्धी तथा नाटकीय विशेषताएँ' दर्शनीयः ( पृ० १६० )

२. इति वैतालिकमुखेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः समागमहेत्वनुरागबीजानुगुण्येनैव विलोमनाद्विलोभनमिति—दशरूपके प्रथमः प्रकाशः ।

३. रत्नावली—३।१८ ।

४. स्वप्नवासवदत्तम्—४।४ ।



# पुराणोपादेयताविमर्शः

श्रीकृष्णमणित्रिपाठी
पुराणेतिहासविभागाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

वेदेभ्य उद्धृत्य समस्तधर्मान् योऽयं पुराणेषु जगाद देवः ।
व्यासस्वरूपेण जगद्धिताय वन्दे तमेतं करुणासमेतम् ॥

वस्तुतो भारतीयमध्ययनं वेदत एवारभ्यते, यतो हि वेदाः सन्ति भारतीयसंस्कृतेर्मूलमाधारः । विश्ववाङ्मये वेदात् प्राक्तनं किमपि साहित्यं नोपलभ्यत इति सर्वैः पौर्वात्यैः पाश्चात्यैश्च विपश्चिद्भिर्मन्यते । अतः श्रद्धालवो हिन्दवः सर्वतोऽधिकं वेदप्रामाण्यमेवाभ्युपगच्छन्ति, तन्मूलकस्मृतिपुराणानुसारमाचरन्ति, व्यवहरन्ति च निरन्तरम् । संस्कृतवाङ्मये पुराणानामस्ति विशिष्टं स्थानम् । वेदस्मृत्योरनन्तरं पुराणानामेवास्तिकजगति प्रामाण्यमङ्गीक्रियते । यतोऽत्र वेदार्थमेव स्पष्टीकर्तुं ज्ञानकर्मोपासनानां सिद्धान्ता अतिसरलया भावगम्यया प्राञ्जलया भाषया विविधाभिर्भक्तशिरोमणीनां मानवमणीनां कथाभिः सम्यगवबोधिताः सन्ति, येषां मननद्वारा साधारणबुद्धयोऽपि जना व्यावहारिकीं स्थितिं सम्पादयन्तो वेदोपनिषत्प्रतिपाद्यं मानवानां प्रधानं लक्ष्यं परमात्मानं प्राप्य मुक्ता भवितुमर्हन्ति । वेदानां यथार्थमर्थमवगन्तुं पुराणानामस्ति पूर्णः सहयोगः । अतो वेदार्थानां विस्तराय पुराणानुशीलनस्यावश्यकता प्रदर्शिता महाभारतस्यादिपर्वणि भगवता व्यासदेवम्—'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्'[1] । इति ।

अतो भगवन्निःश्वासरूपापौरुषेयवेदवत् पुराणानामपि प्रामाण्यं सिध्यति । वस्तुतोऽनादिपरम्परातः प्रचलितायाः भारतीयसंस्कृतेः, सदाचारस्य, वर्णाश्रमधर्मस्य, समस्तस्य समाजस्य, सम्पूर्णस्य राष्ट्रस्य च मर्यादासंरक्षणं यथा वेदैर्विधीयते, तदनु स्मृतिभिः सम्पाद्यते, तथैव पुराणैरपि क्रियत इति न संशयग्रस्तम् । वेदानां दुरूहतया तदीयतत्त्वसाक्षात्कारो यादृक् काठिन्यमावहति, न तादृक् सरलातिसरलभाषानिबद्धानां पुराणानामस्ति काठिन्यम् ।

साधारणेष्वपि जनेषु वेदरहस्यज्ञानस्यावश्यकत्वमनुभूय भगवान् कृष्णद्वैपायनो महर्षिर्व्यासदेवः पुराणानि रचितवान्, कृतवांश्च तत्र ज्ञानकर्मोपासनापेक्षया ऋजुभिरुपायैर्मानवमात्रेणाचरणीयस्य भक्तिमार्गस्याविष्कारम् । अतो निखिलानां जनानां कल्याणकारिभिरुपायैः परिपूर्णानां पुराणानामनुशीलनेन भवति मानवतायाः जागर्तिः, सम्यक् सञ्जायते धर्मस्य संरक्षणम्, मानवजन्मनः साफल्यं च सिध्यति । अत एव सङ्गच्छते निम्नाङ्कितं पद्यम्—

विस्ताराय तु वेदानां स्वयं नारायणः प्रभुः ।
व्यासरूपेण कृतवान् पुराणानि महीतले ॥

---

१. महाभारतम्—आदिपर्वणि—१।२६७ ।

यथा दिवसे प्रकाशो भगवता भास्करेण भवति, रात्रौ प्रकाशश्चन्द्रमसा जायते, गृहान्धकारो दीपेनापनीयते, तथैव परमात्मस्वरूपप्रदर्शनार्थं ज्ञानं तु पुराणवचनैरेव सम्भवितुमर्हति । विविधाभिर्वासनाभिर्भूयो भूयो भवाटव्यामस्यां बंभ्रम्यमाणानां जीवानां कृते पुराणमस्ति सरल आलोकमार्गः । अत एव लोकपितामहेन ब्रह्मणा सर्वासां विद्यानामादौ पुराणविद्यैव स्मृता, ततो वेदा आविर्भूताः[१] ।

सर्वशास्त्राणां ज्ञातृत्वेऽपि पुराणज्ञानाभावात् कस्यापि पुरुषस्य विचक्षणत्वं न सम्भवतीति विष्णुपुराणस्यास्ति डिण्डिमघोषः[२] ।

पद्मपुराणे तु प्रोक्तमस्ति यद् यैर्वेदास्तदितराणि च शास्त्राणि सम्यगधीतानि, परन्तु तैर्यदि पुराणानामध्ययनं न कृतं चेत्, तर्हि तेषामुत्तमज्ञानप्राप्तिर्न जायते[३] । धार्मिकसन्देहानां निवृत्तये प्रवृत्तये चाध्यात्मिक-परलोकमार्गे पुराणानामनुशीलनं नितान्तमस्त्यावश्यकम् । इदं हि विरुद्धैर्हेतुभिर्न हातव्यम् । शास्त्रेषु अप्रतर्क्यपुराणमानवधर्मशास्त्रसाङ्गवेदचिकित्सासु पुराणस्यैव प्रथमं स्थानं निर्दिष्टमस्ति महाभारते, यतो हीमानि भगवत आज्ञारूपाणि सन्ति[४] ।

पुराणं मानवजातेर्हृदयान्धकारस्यापाकरणाय सर्वथा मणितुल्यं प्रकाशकमस्ति । परमतत्त्वदृष्ट्या पुराणं हि नूनमस्ति श्रद्धेयं शास्त्रम् । पुराणेषु विविधैर्गाथैर्विभिन्नैर्नामभिर्विविधेभ्योऽधिकारिभ्यो विविधैः प्रकारैः परमं पुरुषार्थमवगन्तुमुपायाः प्रदर्शिताः सन्ति । अद्यत्वे पुराणानां सम्यगध्ययनाभावादेव तत्र निर्मूला अनेके आक्षेपा भवन्ति । गभीरतया तदनुसन्धाने क्रियमाणे तेषामाक्षेपाणामनायासेन निराकरणं जायते । यदि पुराणान्याक्षेपपूर्णानि स्युः, तर्हि महादार्शनिकानां परमतत्त्वविचारकाणां कुमारिलभट्ट-श्रीशङ्कराचार्य-रामानुजाचार्यप्रभृतीनां महानुभावानां निर्भ्रान्तप्रमाणानि पुराणानि कथङ्कारं स्वीकृतानि स्युः ?

पुराणानामन्तस्तलं प्रविश्य समीक्षायां क्रियमाणायां स्फुटमवगम्यते, यत् पुराणेषु देशकालस्थित्यनुसारं सर्वानुकूलं कर्तव्यमुपदिष्टं वर्तते, येन मानवानां सर्वथा कल्याणमेव जायेत । अतः पुराणपारायणशीलैर्विद्वद्भिर्भारतीयजनताया महत उपकाराय राष्ट्रसमुन्नतये च पुराणज्ञानराशिर्नूनं प्रसारणीयः प्रचारणीयश्च । अद्यत्वे स्वतन्त्रताया उषःकाले नित्यनवीनैरुत्साहैरभिनवचाक्यचिक्ययुगेऽपि पुराणानि महान्तमुपकारं कर्तुं प्रभवन्ति । भारतीयपथप्रदर्शनाय पुराणानि,

---

१. पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ ( म० पु० ५३।३ )

२. यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चेत् पुराणं संविद्यान्नैव स स्याद् विचक्षणः ॥ ( वि० पु० २।५१ )

३. बहुशास्त्रं समभ्यस्य बहून् वेदान् सविस्तरम् ।
पुंसोऽश्रुतपुराणस्य न सम्यग् याति दर्शनम् ॥

४. पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हातव्यानि हेतुभिः ॥ ( प० पु० ४।१०५।१३ )

महाभारतम्, रामायणञ्च सर्वतोऽधिकं साहाय्यं विधातुं शक्नुवन्ति, यतो हि पुराणादीनां भूमिः समस्तं भूमण्डलं वर्तते, न च केवलं भारतवर्षमात्रम्। पुराणव्यवस्थायां विश्वबन्धुत्वस्यादर्शो निहितोऽस्ति, येनान्ताराष्ट्रियसमस्यायाः समाधानेऽपि पर्याप्तं साहाय्यं भवितुमर्हति।

लौकिकविषयाणामिव पारलौकिकविषयाणामपि पुराणेषु पर्याप्तं विवेचनं विद्यते। यतो हि पुराणानां दृष्टिपथे न केवलं भारतवर्षस्यापितु तत्रोर्ध्वाधोभागे वर्तमानानां चतुर्दशभुवनानामपि पदार्थाः सम्यग् विवेचिताः सन्ति। एवं सार्वजनीनं हितमुपदेष्टुं प्रवृत्तानां पुराणानां समीक्षा कस्य सचेतसो मानवस्य न प्रियकरी कल्याणकरी च स्यात्।

पुराणं हि हिन्दुजातेः सर्वस्वम्, भारतीयसंस्कृतेः पोषकम्, मानवसमाजस्य पथप्रदर्शकमार्य-साहित्यस्य चाधारस्तम्भो विद्यते, येन सर्वविध धार्मिक-सांस्कृतिक-ऐतिहासिक-नैतिक-सामाजिक-सद्व्यवहारादीनां सौविध्यमवाप्यते। भारतीयप्राचीनेतिहासस्यान्धकारे युगेऽपि पुराणप्रभया प्रकाशः प्राप्यते। अत एव महर्षिणा याज्ञवल्क्येन विद्यागणनायां पुराणस्य प्राथम्यमुपात्तम्[1]।

यथा वेदा ईश्वरानुग्रहेण पूर्वं ब्रह्मणो हृदि आविर्भूताः, ततो विभिन्नानां महर्षीणां हृदाकाशे प्रकाशिताः, तदनन्तरं च मानवसमाजे विस्तृताः, तथैव सर्वप्रथमं पुराणविद्या ब्रह्मद्वारैव स्मृता, तदनु देवर्षिहृदयेषु प्रस्फुरिता, पश्चात् कथनोपकथनद्वारा मानवेषु प्रसरन्ती महर्षिव्यासद्वारा ब्रह्म-पद्मादिपुराणरूपेणोपनिबद्धा सती लोककल्याणं कुरुते।

अत एवोभयमर्मज्ञो भगवान् व्यासो वेदविभाजयिता, पुराणसङ्कलयिता चोच्यते। भारतीयपरम्परानुसारं वेदमन्त्राणां गूढोऽर्थो ब्राह्मणग्रन्थद्वाराऽवगम्यते, तस्य स्पष्टीकरणं च पुराणेतिहाभ्यां भवति। पुराणेषु येऽर्था उक्ताः सन्ति, ते वेदार्थस्य विस्तृतरूपा विद्यन्ते। भगवता व्यासेन पुराणातिरिक्तमेकं महाभारतमपि रचितम्, यत्र सर्वविद्यानां सङ्ग्रहो जातः। तदर्थं तेन प्रतिज्ञातं यत्—यदिहास्ति तदन्यत्राप्युपलभ्यते, यन्नेहास्ति न तत् क्वचित् प्राप्यते। महाभारतमितिहासशैल्या लिखितमस्ति। अत एतदितिहासः प्रोच्यते। पुराणेतिहासयोः यज्ञ-दान-तीर्थ-व्रतोत्सवादीनां वर्णनप्रसङ्गे प्राचीनस्य भारतीयसमाजस्य प्रत्यक्षं रूपं दृष्टिगतं भवति, यत्राद्यत्वे हिन्दुसंस्कृतिरवलम्बिताऽस्ति। एवं पुराणेतिहासाभ्यां नूनं प्राचीनभारतस्य ज्ञानराशिवैभवमवगम्यते।

आधुनिकभूगोलशिक्षार्थमपि पुराणानामनुशीलनमत्यावश्यकमस्ति। भौगोलिकदृष्ट्या मिश्रदेशस्य सुप्रसिद्धाया नीलनद्या तदेव स्थानमस्ति, यद् भारते भगवत्या भागीरथ्या गङ्गाया विद्यते। तस्या उद्गमस्थानजिज्ञासया विल्फोर्डमहोदयेन पुराणवर्णितभूगोलाधारेणान्वेषण-मारब्धम्। तेन पुराणवर्णनानुसारं नीलनद्या उद्गमस्थानस्यैकं मानचित्रं प्रकाशितम्, किन्तु कनिंघमप्रभृतयो योरोपीया विद्वांसो भारतीयपुराणसाहित्यस्य तद्गौरवमसहमाना विल्फोर्डमुपहसन्तस्तन्निमित्तं तन्नीलनदीमानचित्रं सर्वथाऽविश्वसनीयं भारतपक्षपातपूर्णमित्युद्घोष्य खण्डितवन्तः। तदनन्तरं वास्तविकतापक्षपातिना लेफ्टिनेण्ट जे० एच्० स्पीकेन नीलनद्या

---

१. पुराणं न्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥

उद्गमस्थानविषये परिश्रम आरब्धः । तेन विचारजातमनुशील्य विल्फोर्डमानचित्रं गृहीत्वा मिश्रे भ्रमता तन्मानचित्राधारेणैव यात्रां कुर्वाणेन नीलनद्या उद्मस्थानमपि प्रत्यक्षीकृतम् । सर्वं तद्वृत्तम् 'डिस्कवरी आफ् दि सोर्स नील' नामके पुस्तकेऽङ्कितमस्ति । अस्यैव विषयस्य विवरणम् 'एशियाटिक रिसर्चेज' तृतीयभागेऽपि लिखितमस्ति । एवंविधा अनेके सन्दर्भाः पुराणभौगोलिकविवरणानां प्रामाणिकतां साधयन्ति । पुराणेषु प्रधानतया भारतवर्षस्य गौणतया चान्यदेशानामपि किञ्चिद् विवरणं निर्दिष्टमस्ति, परमिदानीं दीर्घकालव्यवधानात्, प्रकृतिपरिवर्तनात्, राजनीतिविप्लवाच्चांशिकरूपेण पुराणनिर्दिष्टानां नदी-जनपदादीनां यथार्थतः परिचयोऽद्यत्वेऽतिकठिनो जातः । परं प्रसन्नताया विषयोऽस्ति यत् पुरातत्त्वानुशीलन-निरतानां गवेषकाणां परिश्रमेण पुराणभौगोलिकविवरणसत्यता शनैः शनैः प्रमाणीभवति ।

अथर्ववेदस्य पृथ्वीसूक्ते मातृभूमिं प्रति भारतीयभावनाया अत्यन्तमुदात्तं वर्णनं विद्यते । यथा माता स्वकीयं तनयं वात्सल्येन दुग्धं पाययति, तथैवास्माकं मातृभूमिरपि विभिन्नाभिः पयस्वतीभिर्भारतीयां जनतामाप्याययति । अत एवेयं विश्वम्भरा धात्री चोच्यते—'माता भूमिः पुत्रो अहं पृथिव्याः'[1] इति । अस्मिन् मन्त्रे मातृभूमेः स्वरूपस्य, तथा तया सह मानवहृदयस्य चैकताया यादृशमुत्कृष्टं रूपं वर्तते, तादृशमन्यत्रास्ति दुर्लभम् । भारतीयसंस्कृतौ सत्यस्य यः प्रकाश उपलभ्यते, तस्योद्गमो मातृभूमिरेवास्ति[2] । वायुपुराणेनापि पृथिव्या अनन्तेति नाम निर्दिशता सा सर्वभूताश्रया जननी प्रोक्ताऽस्ति[3]—

जननी सर्वभूतानां सर्वभूतधरा धरा ।
नानाजनपदाकीर्णा नानाधिष्ठानपत्तना ॥
नानानदनदीशैला नैकजातिसमाकुला ।
अनन्ता गीयते देवी पृथ्वी बहुविस्तरा ॥

पृथ्वीसूक्ते राष्ट्रं त्रिविधं निर्दिष्टमस्ति—निकृष्टम्, मध्यम्, उत्तमं च । तत्र निकृष्टकोटिके राष्ट्रे भौतिकसम्पत्तेः पूर्णतया विकासो दृश्यते । मध्यमे राष्ट्रे जनताया बुद्धौ सर्वदा चाञ्चल्य-मवतिष्ठते । उत्तमस्य राष्ट्रस्य वैशिष्ट्यं तत्रत्या संस्कृतिर्भवति । अतो वेदमन्त्रद्वारा उत्तमराष्ट्रे मानसिकस्य तेजसः, शारीरिकबलप्राप्तेश्च प्रार्थना कृता विद्यते[4] । पृथ्वी हि राष्ट्रस्य शरीरम्, जनता प्राणः, संस्कृतिश्चास्ति मनः । एषां त्रयाणां सम्मेलनेनैव राष्ट्रस्यात्मनो भवति निर्माणम् । अतो यस्मिन् कस्मिन्नपि राष्ट्रे समुत्पद्य तत्रत्यायाः संस्कृतेः समुन्नतिकरणं तत्रत्यायाः प्रत्येकव्यक्तेर्भवति परमं कर्तव्यम् । वस्तुतः स्वसंस्कृतेः समुन्नतिद्वारैव मानवो राष्ट्रे जन्मग्रहणस्य ऋणान्मुक्तो भवितुमर्हति । यथा प्रत्येकव्यक्तिः स्वकीयं नैजं वैशिष्ट्यं बिभर्ति, तथैव प्रत्येक-राष्ट्रस्य नैजी विशेषता भवति, यया तद्राष्ट्रमपरराष्ट्रापेक्षया समुन्नतं प्रतीयते । तत्र भारतस्य

---

१. अथर्ववेदः—१२।१।१२ ।

२. यस्य हृदयं परमे व्योमन् सत्येनावृतममृतं पृथिव्याः ।

३. वा० पु० ५।२३ ।

४. सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ।

वैशिष्ट्यमस्माभिर्वेदपुराणद्वारैवावगन्तुं शक्यते। अन्यराष्ट्रापेक्षया भारतस्य वैशिष्ट्यमत्रैवास्ते, यत्तत्राध्यात्मिके ज्ञाने, स्वधर्मपालने, परोपकारकरणे, संयमे, राष्ट्रस्योद्धारे, सर्वसमुन्नतौ च बलं दत्तमस्ति।

यदि वेदो भारतीयसंस्कृतेः सर्वोच्चमुद्गमं स्थानमस्ति, तर्हि, पुराणानि सन्ति भारतीय-संस्कृतेः शाश्वतानि स्रोतांसि। हिन्दुजातिसंस्कृतिसम्बन्धिनः कदाचिदेव केचन एवंविधा विषयाः सम्भवेयुः, येषु प्रकाशः पुराणैर्न दत्तः स्यात्। वेदानन्तरं भारतीयसंस्कृतेर्वास्तविकं स्वरूप-मस्माभिः पुराणैरेवावगन्तुं शक्यते। पुराणानुसारं पुराणानि हि धार्मिक-सामाजिक-सांस्कृतिक-राजनीतिक-आर्थिकादिषु क्षेत्रेषु लोकवर्गस्य विचाराणां कार्याणां च यथार्थं चित्रमुपस्थापयन्ति। पुराणानामनुशीलनेनास्माभिः स्वजीवनोद्देश्यपूर्तये आदर्शमयः सदुपदेशो लभ्यते। यतो हि पुराणेष्वेकत्रैवैहिकामुष्मिकहितसिद्धये उदाहरण-प्रत्युदाहरणकथानकोपकथानकद्वारा शुभकर्मणि प्रवृत्तयेऽशुभकर्मभ्यश्च निवृत्तये सदुपदेशो दत्तोऽस्ति—'रामादिवत् वर्तितव्यं न रावणादिवत्' इति।

पुराणानुसारमस्माकं देशस्य नामास्ति भारतवर्षम्। तथात्र निवासिन्याः प्रजाया नामास्ति भारती। पुराणेषु भारतवर्षस्य भौगोलिको विस्तारः समुद्रादुत्तरे हिमालयाच्च दक्षिणे प्रोक्तोऽस्ति[1], तथा कन्याकुमारीतो हिमालये गङ्गाया उद्गमस्थानपर्यन्तं विस्तृतो भूभागो भारते सम्मिलितोऽभिमतोऽस्ति[2]। निरुक्तशास्त्रदृष्ट्या वायु-मत्स्यपुराणयोर्भारतवर्षस्य निर्वचनं कृतमस्ति यत् प्रजानां भरण-पोषणकारणादेका संज्ञा भरत इत्यस्ति[3]। एतन्निरुक्तेराधारेणायं देशो भारतमित्युच्यते।

इदमस्य रहस्यम्—भरणपोषणात्मकेन गुणेन मनुर्भरतः प्रोक्तोऽस्ति, तथा यत्र भूभागे मनु-पद्धत्यनुसारं तत्सन्ततयो निवसन्ति, तन्नाम भारतमिति जातम्। यद्वा राज्ञ ऋषभदेवतनयस्य भारतस्य नाम्नाऽयं देशो भारतमित्युच्यते, अथवा दौष्यन्तेर्भरतस्य ( सर्वदमनस्य ) नाम्नाऽ-स्माकं देशो भारतमिति निगद्यते। तथा चोक्तं[4] भागवते—'अजनामं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति' इति। [5]वायुपुराणेऽपि प्रोक्तम्—

चक्रवर्ती ततो जज्ञे दौष्यन्तिर्नृपसत्तमः।
शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्॥ इति।

---

१. उत्तरं यत् समुद्रस्य हिमवद्दक्षिणं च यत्।
वर्षं तद् भारतं नाम यत्रेयं भारती प्रजा॥ ( वा० पु० ४५।७५ )

२. आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै।
तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु॥ ( वा० पु० ४५।८१ )

३. भरणाच्च प्रजानां वै मनुर्भरत उच्यते।
निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम्॥ ( म० पु० ४५।७६ )

४. भागवतम—५।७।३।

५. वा० पु० ९९।११३।

एवं पुराणेषु भारतस्य नामकरणविषये त्रीणि मतान्युपलभ्यन्ते ।

पुराणेतिहासयोर्या भारतवर्षस्य वन्दना विद्यन्ते, तासु महाभारतस्य भीष्मपर्वणि भारतवन्दना भावदृष्ट्याऽत्यन्तमुत्कृष्टाऽस्ति[1] । तेषु पद्येषु येषां चक्रवर्तिनां राज्ञां नामानि गणितानि सन्ति, तेषां धार्मिको भावः, प्रजावात्सल्यम्, सत्यपालनम्, परोपकारमयं जीवनम्, निरन्तरं लोककल्याणकामना तैः स्थापिता, आदर्शमयी व्यवस्था च भारतीयगौरवस्यास्ति विषयः । ये महापुरुषाः स्वदेशस्य कालस्य च प्रतिनिधयो भवन्ति, तेषामेव वृत्तान्तोपस्थापनं पुराणेतिहासयोरनिवार्यं जायते । एतदनुसारमेव तत्र तेषां चरित्रचित्रणं कृतमस्ति । पुराणेषु भारतवर्षं स्वर्गादप्युत्कृष्टं वर्णितमस्ति । तत्र सिद्धान्तितं वर्तते यद् देवाः स्वर्गे गीतं गायन्ति यत्ते मानवाः सन्ति धन्यतमा ये भारते जन्म गृह्णन्ति । भारतवसुन्धरा हि स्वर्गादपि उत्कृष्टास्ति, यतो हि तत्रत्या जनाः स्वर्गं मोक्षं चोभयं लब्धुं शक्नुवन्ति । ये स्वर्गे भुक्तदेवत्वभोगास्ते मोक्षाय भूयो भारते जन्म गृह्णन्ति । सुरत्वं प्राप्तानस्मानपेक्ष्याधिक सुकृतिनस्ते । अतो भारतवर्षे जन्मग्रहणं नास्ति साधारणस्य पुण्यस्य फलम्[2] ।

अपि च जम्बूद्वीपे वर्तमानेभ्योऽन्यवर्षेभ्यो भारतवर्षं सर्वश्रेष्ठं ज्येष्ठं चाभिमतम्, यतो हि अन्यानि वर्षाणि केवलं भोगस्थानानि सन्ति, किन्तु भारतं कर्मभूमिः प्रोक्ताऽस्ति । अत्र सत्कर्मानुष्ठानद्वारा मानवो भोगं मोक्षं चोभयमपि लब्धुं शक्नुयात् । तथाहि विष्णुपुराणे[3] इदमस्य रहस्यम्—भारतभूरेव सदसत्कर्मानुष्ठानयोग्या भूमिः । भारतादन्या भूमयो हि सुखदुःखसाक्षात्काररूपस्य भोगस्य स्थानानि । अत्रैवानुष्ठितेन विहितकर्मणा धर्मः, निषिद्धेन च कर्मणाधर्मो जायते, ताभ्यां च यथाक्रमं सुखदुःखे तद्भोगाश्च जायन्ते, न त्वन्यत्र समनुष्ठितेन कर्मणा तथेति भावः ।

यदा काचिज्जातिः परस्परविद्वेषवशात् स्वकीयमादर्शमयं चरित्रं विस्मृत्यात्मनः स्वरूपं परित्यजति, अन्याधीना च भवति तदा विश्वस्य इतरजातयः तस्या उपेक्षणं कर्तुं प्रारभन्ते । तद्धार्मिका ग्रन्थाः पोपकल्पना, तत्पूर्वजा असभ्याः, तद्भाषा अव्यवहार्या, तद्वेशभूषादिकं लज्जाजनकम्, तदाचार-विचार-व्यवहारादिकं च बालानां क्रीडनकम् इत्याद्युक्त्वा तां जातिं सर्वथाऽयोग्यामुद्घोष्टुं चेष्टन्ते । एतन्नैसर्गिकनियमानुसारं विविधा जातयोऽन्येषां कुचक्रे समागत्य स्वकीयं स्वरूपं परिहरन्ति । तासामस्तित्वं केवलमितिहासपृष्ठेष्वेवाङ्कितमवतिष्ठते ।

---

१. प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य वा ।
पृथोस्तु राजन् वैन्यस्य तथेक्ष्वाकोर्महात्मनः ॥
अन्येषां च महाराज ! क्षत्रियाणां बलीयसाम् ।
सर्वेषामेव राजेन्द्र ! प्रियं भारत ! भारतम् ॥ ( म० भा० भी० प० ९।५।९ )

२. गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥ ( २।३।२४ )

३. तत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।
यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः ॥
इतः सम्प्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति वै ।
तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने ॥ ( वि० पु० २।३।४।२२ )

विश्वस्येतिहासोऽस्ति साक्षी यद् हिन्दुजातिर्विश्वस्मिन् सर्वतः प्राचीनतमा। अस्याः पवित्रतममुद्देश्यानि सन्ति, स्वधर्माचरणम्, परोपकारकरणम्, स्वार्थत्यागः, ईश्वरं प्रति अनन्यप्रेमप्रतिष्ठापनम्, समस्तं विश्वं विष्णुमयं मत्वा तत्र श्रद्धाचरणं च। अतस्तत्र विश्वबन्धुत्वभावनया 'वसुधैव कुटुम्बकम्' इति पुनीतो भावः सर्वदा तिष्ठति। या हिन्दुजातिः प्रारम्भतोऽन्यासु जातिषु शासनं करोति स्म, सैव दैववशाद् अन्याधीना भूत्वा शासिता शोषिता चाभवत्। सर्वप्रथमं हिन्दुजातौ बौद्धानां शासनमजायत, ततो यवनानामाक्रमणमभूत्। अनयोः शासनाधीनयाऽपि हिन्दुजात्या शिक्षापद्धतिः स्वाधीनैव रक्षिता। एतत्परिणामस्वरूपेण कुमारिलभट्टस्वामिशङ्कराचार्यसदृशा अद्भुतप्रतिभाशालिनो मनीषिणोऽस्यां जातावुत्पद्य बौद्धसाम्राज्यं समूलमुन्मूल्य बौद्धान् भारताद् बहिः कृतवन्तः।

यवनशासनकालेऽपि शिक्षापद्धतिर्हिन्दुनामधीनैव सुरक्षिताऽवर्तत। येनानेके धर्मवीरा हिन्दवः स्वजातेर्धर्मस्य च संरक्षणे कृतसङ्कल्पा आसन्। महाराणाप्रताप-छत्रपतिशिवाजी-गुरुगोविन्दसिंह-हकीकतरायप्रभृतिभिर्महापुरुषैश्छिन्ना भिन्ना वा हिन्दुजातिः प्रणाशात् संरक्षिता, राजस्थानीयाभिः पद्मिनीप्रभृतिभिः सतीनारीभिश्च जौहरव्रतं स्वीकृत्य प्रज्वलितेऽग्नौ स्वानि शरीराणि भस्मसात्कृत्वा भारतीयकुलयोषितामादर्शभूतः पातिव्रत्यधर्मः परिरक्षितः। परिणामस्वरूपं यवनसाम्राज्यस्य सत्ता शिथिला जाता। अस्मिन्नेवासरे योरपनिवासिन्या आंग्लजातेर्भारतवर्षे प्रवेशोऽभवत्। शनैः शनैः शासनस्याधिकारस्तस्या हस्तगतो जातः। तत्प्रमुखेन शासकेन लार्डमेकालेमहोदयेन यदा दृष्टं यद् भारतीयाः पाश्चात्त्यानुपेक्षन्ते घृणा दृष्ट्या च तान् पश्यन्ति, तदा तेन शिक्षापद्धतिं स्वाधिकारे कृत्वा एवंविधानि पाठ्यपुस्तकानि निर्मापितानि, यान्यधीत्य हिन्दुजातिः स्वं वास्तविकमितिहासं विस्मृत्यांग्लजात्या सह सम्मिलिता स्यात्। तेषु पुस्तकेषु स्थले स्थलेऽङ्कितमासीद् यदार्या न सन्ति, भारतस्यादिनिवासिनः, किन्तु मध्येशियातस्तत्रत्यानां दलद्वयं प्रचलितम्। तत्रैकदलं यूरोपाभिमुखं प्रस्थितः, द्वितीयं च भारते आगत्य न्यवसत्। अतो योरपवासिनी आंग्लजातिस्तथा भारतनिवासिनी हिन्दुजातिश्च द्वे अपि एकस्य पितुः स्तः सन्तत्यावुभयत्र भेदभावोऽनुचितः। प्रथमं ये आर्या भारते आगतास्ते विद्याविहीना गुणहीना असभ्या आरण्यका इव महामूर्खाः कृषकाश्चासन्। ते कृषिं कर्तुं जानन्ति स्म, पशून् पालयन्ति स्म, गोचारणसमये यानि गीतानि गायन्ति स्म, तानि एकत्र सङ्गृह्य वेदनाम्ना व्यवहर्तुं प्रारभन्।

अतो न वेदः कस्यचन महत्त्वस्य पुस्तकमस्ति, आर्याणां संस्कृतभाषा मृतभाषाऽस्ति। हिन्दीचाल्पसङ्ख्यकानां भाषा वर्तते, हिन्दूनां वेषभूषादिकं घृणास्पदं तथा तेषां भोजनं बलहीनं विद्यते, एषां व्यवहारो लोकविरुद्ध आचार-विचाराश्चासभ्यानां चिह्नानि सन्ति।

पाश्चात्त्यैरनुभवः कृतो यत् भारतवर्षे यावद् विधिवद् वेदपाठो भविष्यति, तथा पुराणानां प्रवचनं प्रचलिष्यति, तावद् हिन्दुधर्मस्य, हिन्दुजातेः, हिन्दुसंस्कृतेश्च न कापि क्षतिर्भविष्यति। एनमनुभवं लक्ष्यीकृत्य तैर्लेखनी गृहीता, अनेकानि पुस्तकानि च रचितानि, येषु पुराणानामसत्यताम्, तत्कथासु परस्परं विरुद्धताम्, असम्भवताम्, अदूरदर्शितामश्लीलतां मूर्खतां च साधयितुं महती कुचेष्टा कृता। तानि पुस्तकानि पठित्वाऽभिनवशिक्षितवर्गः साधारणजनता

च व्यामोहिता सती पुराणान्युपेक्षितवती। एवंविधाया दूषितशिक्षापद्धतिदृष्टेः परिणामोऽभवद् यद् आंग्लशिक्षितसमुदायस्य मानसिकः स्तर एव परिवर्तितः। आंग्लशिक्षादीक्षिताः स्वान् भारतीयान् कथयितुं सङ्कोचं तथा आंग्लानामनुकरणे गौरवं चानुमन्वन्। एवंविधां शिक्षामनुभूय लार्डमेकालेमहोदय आत्मानं कृतकृत्यं मत्वा महत्या प्रसन्नतया स्वपितुः पार्श्वे एवमाशयकमेकं पत्रं व्यलिखत्—'तात ! ये हिन्दव आंग्लशिक्षां प्राप्नुवन्ति, ते स्वधर्मान्न सहानुभूतिं कुर्वन्ति। कियन्तस्तु नास्तिका भवन्ति, केचन च ख्रीष्टधर्मं मन्तुं प्रवर्तन्ते। अनया शिक्षया अहमेकं वर्गमेवंविधं निर्मातुमिच्छामि, योऽस्माकं तेषां च मध्येऽनुवादककार्यं कर्तुं शक्नुयात्। वर्गोऽयं रक्त-रङ्गयोर्भारतीयो भविष्यति, परन्तु विचारेषु नूनमांग्लवद् भविष्यति'[1] इति।

अनया लार्डमेकाले विषाक्तशिक्षया शिक्षितसमुदायो हिन्दुधर्म-हिन्दुसंस्कृति-हिन्दुजातीनां प्रबलः शत्रुरभवत्, तथा स्वमतीतं गौरवं विस्मृत्यावतारवाद-वर्णाश्रमव्यवस्था-मूर्तिपूजन-मृतश्राद्धादीन् वैदिकपौराणिकविषयान् खण्डयितुं प्रवृत्तः। अस्या अभिनवशिक्षाया भारतीयेषु विद्यार्थिषु महान् कुप्रभावो जातः। अवरङ्गजेबप्रभृतिभिर्यवनैर्यावती हानिर्नाजायत, तावती हानिरनया शिक्षया शिक्षितहिन्दुनामधारिभिर्जाता।

कस्या अपि जातेरुत्थानं पतनं च तज्जातीयसाहित्येऽवलम्बितं भवति। यस्या जातेः स्वधार्मिकसाहित्यतो घृणा जायते, तस्याः पतनमनिवार्यतया भवति। इयमेव दशाऽद्यत्वे हिन्दुजातेरुपस्थिताऽस्ति। साम्प्रतमस्या जातेर्विश्वासो निजधार्मिकग्रन्थेभ्यो विच्छिद्यते। आंग्लानां यवनानां च स्वधार्मिकग्रन्थेषु यावान् विश्वासो वर्द्धते, तावती एव हिन्दुजातिः स्वधार्मिकग्रन्थानामध्ययनाद् विमुखा भवति। एतस्य मुख्यं कारणमस्ति धार्मिकशिक्षायाः प्रचारप्रसारयोरभाव एव।

यस्यां शिक्षायां धर्मस्य न भवति स्पर्शः, तया शिक्षया युवकेषु युवतीषु च सद्गुणानां प्रादुर्भावस्य स्वप्नदर्शनमुपहासास्पदातिरिक्तं किमपि न सम्भवति। सुशिक्षाद्वारैव विवेकशीलाया बुद्धेर्विकासो भवति, ज्ञानस्य वृद्धिर्जायते, कर्तव्यपालनस्य रुचिरुत्पद्यते, ईश्वरीयालौकिकशक्तिषु विश्वासः सम्भवति, महत्सु सम्मानभावो जागर्ति, सद्गुणार्जन उत्साहो वर्द्धते, स्वधर्मपालने प्रवृत्तिर्भवति, मानवः सत्कर्मसु सदा प्रवर्तते तथा दुष्कर्मणो निवर्तते, स्वदेशगौरवरक्षणे च मनो लगति।

---

1. **Macauley's Letters to his father.**

   No Hindu who has received education ever remains sincerly attached to his religion. Some continue to profess it as a matter of policy, but others profess themselves pure atheist and some embrace christianity. We desire to form a class who may be interpretors between us and the millions we govern, a class of persons Indinn in blood and colour, but English in taste, in opinion, in morals and in intellect. (Puranavarma).

विश्वस्मिन् प्रत्येकदेशस्य कृते स्वसाहित्यस्यावश्यकता भवति, यतो हि साहित्यमेव सभ्यता-संस्कृत्योः परिचायकं भवति । यस्य देशस्य सभ्यतासंस्कृत्यौ यावत्यौ समुन्नतिशिखरारूढे भवतः, तस्य साहित्यं तावदेव समुन्नतिशीलं भवति । हिन्दूनां संस्कृतसाहित्येन समं समृद्धं विकासशीलं च साहित्यं नास्ति विश्वस्य कस्या अपि जातेः सविधे । यदि भाषा-भाव-दर्शन-आचार-विचार-रीति-नीति-शिल्प-कला-पुरावृत्त-विविधज्ञान-विज्ञानादीनि एकत्र द्रष्टुं समीहा स्यात्तर्हि संस्कृतसाहित्यस्य वेद-स्मृति-पुराणानि द्रष्टव्यानि, यतो हि सन्त्येतानि एषामागाराणि । समेषु तेषु चतुर्णां वर्णानामाश्रमाणाञ्च रीति-नीति-आचार-विचारादीनां विस्तृतस्तर्कपूर्णश्चोल्लेखो विद्यते । पुराणद्वारा प्राचीनेतिवृत्त-सृष्टि-प्रलय-वंश-वंशावली-युग मन्वन्तर-कल्पादीनां सम्यग् ज्ञानमुपजायते, तथा पुराणानामाख्यानोपाख्यानगाथाभिर्वेदानां वास्तविकोऽर्थोऽवगन्तुं शक्यते । पुराणैः स्वपूर्वजानां निर्मलो विचारो ज्ञायते, तथा पुराणानामनुशीलनेनैव विभिन्नजातीनामुत्पत्तिः, समस्तस्य विश्वस्य विभिन्नभागानां भिन्नभिन्ननियमाश्च ज्ञायन्ते ।

पुराणज्ञानं विना संसारोऽन्धकारमयो भवति । उपासनाया भाण्डारम्, मुक्तेर्द्वारम्, ज्ञानस्याकारः, भक्तेः साधनम्, कर्मणां प्रदीपश्च पुराणमेवास्ति । भगवदवतारवैशिष्ट्यं वर्णयन्त्यः पुराणानां गाथा जीवमीश्वरशरणे समुपस्थापयितुमत्यन्तमुपयोगिन्यः सन्ति । किमधिकं वक्तव्यम्, ये ये विषया अन्वेष्टुमिष्टाः स्युस्ते सर्वेऽपि पुराणेषु प्राप्तुं शक्यन्ते । महाभारतसम्बन्धे भगवता व्यासेन तु स्पष्टमुद्घोषितमस्ति, यद् ये हि विषया महाभारते वर्णिताः सन्ति, त एव सर्वत्र विवेचिता विद्यन्ते, यश्चात्र विषयो न विवेचितोऽस्ति स कुत्राप्यन्यत्र न दृश्यते[1] । तदनुसारं राजवंशानां गणतान्त्रिकप्रणालीतः सांविधानिक-सुव्यवस्थितसमुदार-कल्याणकारिशासन-व्यवस्थायाः सङ्केतोऽपि मिलति ।

ईशापूर्वं षष्ठशताब्दीतः प्रागपि भारते राजनीतिकविचारधारा प्राप्यते । बुद्धसमये गणतान्त्रिक-साम्राज्यवादिन्यौ राजनीतिकप्रवृती समानान्तरे प्रचलिते आस्ताम् । राजसंस्थायाः सम्बन्धे महाभारतस्य शान्तिपर्वणि प्रोक्तमस्ति यत् समस्तस्य जीवलोकस्याधारो राजधर्मोऽस्ति, यतो योग-क्षेम-सुवृष्टिव्याधि-मरण-भयानि राजन्येवावलम्बितानि भवन्ति[2] ।

तत्रैव पुनरुद्योगपर्वणि शान्तिप्रयासाय दूतभूतश्रीकृष्णद्वारा युधिष्ठिरं सन्दिशन्त्या देव्या कुन्त्या वचनं यथा वत्स ! कालो राज्ञः कारणं भवति, आहोस्वित् राजा कालस्य कारणं जायते; इत्यत्र त्वया सन्देहो न विधेयः, वस्तुतो राजैव कालस्य कारणमस्ति[3] ।

राजा हि सत्ययुग-त्रेता-द्वापर-कलियुगानां स्रष्टास्ति, तस्मात् सत्कर्मद्वारा त्वया सत्ययुगमुपस्थाय स्वर्गप्राप्तिर्विधेयेति मम निश्चिता मतिरस्ति ।

---

१. धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ !
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥ ( म० भा० स्व० प० ५।५० )

२. राजमूला महाभाग ! योग-क्षेम-सुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥

३. कालः वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ( ३२।१७ )

महान्तोऽपि वैज्ञानिका भूगर्भविद्याविशारदा विद्वांसः परिश्रमेण असङ्ख्यं द्रव्यराशिं व्ययीकृत्वाऽपि यदन्वेषणं कर्तुं न पारयन्ति, तानि पुराणानि अनायासेनोपदिशन्ति। पुराणानां विभिन्नेषु प्रसङ्गेषु यानि तीर्थ-पीठ-क्षेत्र-नद-नदी-सरोवराणां विवरणानि प्रदत्तानि सन्ति. तैरनुसन्धानकर्तॄणां महत् साहाय्यमवाप्यते।

न केवलं कविकुलकलाधरकालिदास-भास-माघ-भारवि-भवभूति-श्रीहर्ष-प्रभृतिभिर्भारतीयैरमरमहाकविभिरेव विभिन्नानि पुराणानि स्वस्वमहाकाव्याधरीकृतानि, प्रत्युत टालस्टाय-होमर-मिल्टन-शेक्शपीयरप्रभृतीनां पाश्चात्यलेखकानां ग्रन्थावलोकनेन स्पष्टं प्रतीयते यत्तैरपि यत्र तत्र पौराणिकैराख्यानकैः स्वग्रन्थानां सज्जीकरणे न सङ्कोचः कृतोऽस्ति। एवं निःशंसयं वक्तुं शक्यते यद् विश्ववाङ्मये पुराणानामप्रतिमं स्थानमस्ति। कालक्रमेणाद्यत्वे संस्कृत-वाङ्मयस्य पठन-पाठनयोर्ह्रासात् पुराणानुशीलन-श्रवण-मनन-प्रचार-प्रसाराणामुत्तरोत्तरं ह्रासो जायते।

यत्र 'विद्यावतां भागवते परीक्षा' इत्यनुसारं पुराणं विद्वत्ताया निकषा अभिमताऽऽसीत्, तत्र तदेव संस्कृतज्ञानशून्यानामल्पज्ञानामुपहासपात्रं जायते। अद्यत्वे विविधाभिः कुतर्कपूर्णाभिर्व्यर्थशङ्काभिः पुराणानि व्यर्थीक्रियन्ते, परं पुराणं हि एका विशिष्टा विद्या वर्तते। पुराणविद्या हि गुरुमन्तरा सम्यक् नावगन्तुं शक्या। सद्गुरुद्वारा एषां शङ्कायाः समाधानं कर्तुं शक्यते तथा तेषां वास्तविकोऽर्थस्तद्रहस्यं चावगन्तुं शक्यते, नान्यथा।

संस्कृतवाङ्मये पुराणानामेकं विशिष्टं स्थानमस्ति, तथा तेषां महन्महत्त्वमपि विद्यते। सर्वसाधारणजनेषु सभ्यता-संस्कृत्योः प्रचारः प्रसारश्च पुराणानां प्रधानं कार्यमस्ति। पाश्चात्त्या इतिहासवेत्तारोऽपि पुराणानि भारतीयानाममूल्यं निधिं मन्यते। यद्यपि भारतीय-साहित्ये पुराणैः सहेतिहासस्यापि नाम समागच्छति, तथापीतिहासे तासामेव घटनानां वर्णनं विद्यते, या भूतकाले व्यतीता, किन्तु पुराणानि भविष्यद् घटनानामपि सङ्केतं कुर्वन्ति। अतः पुराणानां विषय इतिहासादप्यधिको व्यापको विस्तृतश्च विद्यते। वास्तविक इतिहासो न काव्यवत् कल्पनामाश्रयते, न वा स धर्मशास्त्रवदादर्शोन्मुखो भवति, किन्तु स तात्कालिकं यथार्थं चित्रमुपस्थापयति। कस्या अपि मानवजातेरितिहासस्तदैव पूर्णो भवितुमर्हति, यदा तस्य कथानकं सृष्टेरारम्भतः क्रमबद्धरूपेण लिखितं स्यात्। इदं हि रूपं पुराणेषु पूर्णतया प्राप्यते। आधुनिकैरितिहासकारैरस्याः शैल्या उपेक्षा कृता, परन्तु इङ्गलैण्डस्य प्रसिद्धेन विचारशीलविदुषा एच्० जी० विल्सनेन स्वकीयायामितिहासस्य रूपरेखायां पौराणिकप्रणाल्या एवानुकरणं कृतमस्ति। तेन तत्र मानवसमाजस्येतिहासलेखनात् पूर्वं सृष्टिप्रारम्भतो मनुष्य-विकासस्येतिहासोऽपि लिखितः। मानवजन्मग्रहणात् पूर्वं जीवः किं किं रूपं धत्ते, तथा तस्य क्रमिको विकासः कथं जायते, इत्यादेरपि मनोरमं विवेचनं कृतमस्ति।

प्राचीनभारतस्यैतिह्यं पुराणेष्वेव निहितं सुरक्षितं चास्ते। सौभाग्येनास्माकमधुनातना अपि केचनैतिह्यविदो भारतस्येतिहासनिर्माणे साम्प्रतं पाश्चात्त्यानां मुखापेक्षितां विहाय पुराण-साहाय्यं गृह्णन्ति। पुराणेषु विविधानां विषयाणां साकल्येनैकत्र समवायात्—'श्रुतिस्मृत्युदिते

नेत्रे पुराणं हृदयं स्मृतम्' इत्यनुसारं पुराणं हृदयं निगद्यते। एवं नेत्रं विना मानवो जीवितुं शक्नोति, परं हृदयं विना न कोऽपि जीवितुं पारयति। अतः 'आत्मा पुराणं वेदानाम्' इति स्कन्दपुराणीयं वचनं सङ्गच्छते।

हिन्दुशास्त्रेषु वस्तुकथनस्य त्रयः प्रकारा उक्ताः सन्ति—

१—तथ्यकथनम्।

२—रूपकथनम्।

३—अतिशयोक्तिकथनं च।

तत्र यद् वस्तु यादृशं स्यात्तस्य तादृगेव वर्णनं तथ्यकथनमस्ति। प्रकारोऽयं वैज्ञानिकानां कृते उपयोगी वर्तते। यत्र रूपकालङ्कारमाश्रित्य किञ्चिदुच्यते तद् रूपककथनं विद्यते। प्रणालीयं प्रायो वेदेषूपलभ्यते। यथासूर्यकिरणेषलभ्यमानानि सप्तरङ्गानि अनुक्त्वाऽश्वानां रूपकं प्रदत्तमस्ति। पुराणेषु वस्तुवर्णनार्थमतिशयोक्त्यलङ्कारस्याश्रयो गृहीतोऽस्ति। यथा इन्द्र-वृत्रासुरयुद्धे इन्द्रवृत्रासुरौ राजरूपेणाङ्कितौ स्तः। एवं वर्षावर्णनं त्रिषु साहित्येषु विशेषदृष्ट्या कृतमस्ति। ज्यौतिषविज्ञानं हि कस्मिन् नक्षत्रे कीदृग्वायुर्वहति, कथं मेघ उत्पद्यते, कियती वृष्टिर्भविष्यति, वृष्टेरवरोधकः कोऽस्ति कथं च भवति तस्य विनाश इति तथ्येन विचारयति। वेदो वृत्रं वृष्टिनिरोधकं तत्त्वमिन्द्रं च वृष्टिकारकं मन्वानोऽनयोः तत्त्वयोरुत्पन्नं सङ्घर्षमिन्द्र-वृत्रयुद्धद्वारा निरूपयति। पुराणसाहित्यं चातिशयोक्त्या इन्द्रं देवानां राजानं वृत्रं चासुराणामधिपतिमुक्त्वा देवासुरसङ्ग्रामं वर्णयति। अतः पौराणिककथानां सम्बन्धे तदीयप्रणाल्यां ध्यानं दत्त्वैव तदध्ययनं विधेयम्।

मानवानां कल्याणार्थं स्वयं नारायणेन व्यासात्मना पृथिव्यामवतीर्य पुराणानि रचितानि। वेदविज्ञानस्य मनोरञ्जकोपाख्यानरूपेणोपस्थापनं पुराणानामस्ति अद्भुता विशेषता। पुराणानां पवित्रे प्राङ्गणे एकतो भक्तेर्भागीरथी प्रवहति, तर्हि अपरत्र विज्ञानस्य स्रोतो निःसरद्दृश्यते। वेदेषु यस्य सूचनामात्रमस्ति पुराणेषूपाख्यानादिद्वारा तस्यैव विस्तारोऽस्ति। वेदेषु यासामाभासमात्रमस्ति पुराणेषु ता एव कथा मनोरञ्जकरूपेण विस्तृताः सत्य एकं नवीनं रूपं धृतवत्यः। यथा—'विष्णुर्विचक्रमे त्रेधाऽनिदधे पदम्' इतीदमृग्वेदीयं वामनोपाख्यानं वामनादिपुराणेषु त्रिविक्रमनामकस्य वामनावतारस्य प्रसङ्गे विस्तृतरूपेण वर्णितमस्ति।

वस्तुतस्तु पुराणं विना वेदार्थोपबृंहणमेव न सम्भवति, यतो हि वेदेषु निर्दिष्टाना-माख्यानानां व्याख्या पुराणेष्वेवोपलभ्यते। यथा—'अहल्यायै जारः' इत्यस्य वेदप्रतीकस्य तात्पर्यं पुराणवर्णितमिन्द्रकृतमहल्याधर्षणं विना न स्फुटतां प्रयाति। अत एव वाल्मीकिरामायणे-ऽग्निप्रभृतीन् देवान् प्रति स्वयमिन्द्रेणाभिहितम्—

कुर्वता तपसो विघ्नं गौतमस्य महात्मनः।
क्रोधमुत्पाद्य तु मया सुरकार्यमिदं कृतम्॥

वेदा न सन्त्युपाख्यानमूलका ग्रन्थाः। तत्र तु स्थलविशेषे उदाहरणरूपेणोपाख्यानानि वर्णितानि सन्ति। परं पुराणेषूपाख्यानानामेकत्र समावेशोऽस्ति। अतः तत्रोपाख्यानबाहुल्यं विस्तारश्च दृश्यते। कस्याप्युपाख्यानस्य विस्तरतो वर्णनं वेदस्य नोद्देश्यम्, किन्तु तत्रत्यात्यन्त-

संक्षिप्ताः केनचिद् विशेषेणोद्देश्येन वर्णिता याः कथाः सन्ति, ता एव पुराणेऽवाख्यायिकारूपं धृतवत्यः। यतो हि साधारणेषु मनुष्येषु कौतूहलपूर्वकं भगवद्भक्त्युत्पादनमाख्यायिकानामस्ति मुख्यमुद्देश्यम्। वेदपुराणयोरिदमेवास्ति विशेषतोऽन्तरं यद् वेदस्यातिसंक्षिप्ताः प्रसङ्गाः पुराणेषु स्वतन्त्रतया समुपबृंहिताः सन्ति। अत एव वेदवत् पुराणानामपि प्रामाण्यमभिमतमस्ति, तथा तानि असामान्यदृष्ट्या दृश्यन्ते, श्रूयन्ते च। एतदतिरिक्तस्य वेदानुकूलस्य ज्ञानस्य कर्मण उपासनायाश्च विवेचनमपि पुराणेषु स्पष्टतयोपलभ्यते, येन समेषां भवति महानुपकारः, तथा तैः पुराणैर्धर्मसम्बन्धिनो विविधा उपदेशा अपि प्राप्यन्ते।

अत्र नास्ति कश्चन सन्देहलेशो यद् भारते भूयो भूय आक्रमणेन राज्यविप्लवैः, अनेकविधपरिवर्तनेन च पुराणानां वास्तविकस्थितावद्यत्वे महदन्तरमुपस्थितमस्ति, न कियन्त्यपि पुराणानि पूर्णानि मिलन्ति। कतिपयानि स्वसङ्ख्ययाऽधिकानि रूपाणि अधारयन्, प्रक्षिप्तैरंशैः कियतां कलेवरमपि परिवर्तितम्। एकस्य पुराणस्य विषयाः क्वचनान्यपुराणेषु प्रविष्टाः। विदुषामनुमानमस्ति यत् सम्प्रदायवादिनां पारस्परिकेन सङ्घर्षेण स्वसम्प्रदायेतरान् हीनतरान् बोधयितुं पश्चाद् यत्र कुत्रचित् पुराणेषु प्रक्षिप्ता अंशा मेलिताः।

अस्तु—यदि केनचित् कारणेन पुराणेषु कुत्रचित् प्रक्षिप्ता अंशाः समागतास्तर्हि पुराणमात्रमप्रामाणिकं मन्तुं न युक्तमस्ति। यदि बहुमूल्येषु रत्नेषु कश्चन काचं मेलयेत्तर्हि किं तानि हेयानि जायन्ते? न हि कथमपि न सम्भवति तेषां रत्नानां हेयता, किन्तु नीरक्षीरविवेकिनो हंसा इव विचारशीला विद्वांसः सदसती विचार्य हेयस्यांशस्य त्यागः, उपादेयस्यांशस्य च ग्रहणमेव बुद्धिमत्तां मन्यन्ते। यदि विवेकपूर्वकं मनोयोगेन पुराणानि पठ्येरन्, तर्हि प्रक्षिप्ता अंशा अवश्यं परिज्ञातुं शक्यन्ते। यत्र कुत्रापि भस्म-रुद्राक्ष-तिलक-तुलसीमालादीनां निन्दा, तथा देवतानां परस्परं विरोधमूलकानि वचनानि स्युस्तर्हि तानि सम्प्रदायवादिनां दुराग्रहिणां कुपुरुषाणां बुद्धेः परिणामस्वरूपाणि ज्ञेयानि। एतादृशा अंशाः समन्वयवादिनो महर्षेर्व्यासस्य लेखनीतो न प्रसूता भवितुमर्हन्ति। तेऽशास्तु सम्प्रदायवादस्य तरङ्गैः समुद्गता अवगन्तव्याः। भगवान् व्यासदेवस्तु समेषामैक्यप्रतिपादयितास्ति। पुराणेषु विभिन्ना भक्ता भिन्नभिन्नदेवतानामुपासका दृश्यन्ते, यतो हि हिन्दुशास्त्राणां विभिन्ना देवता एकस्यैव परब्रह्मणो रूपान्तराणि सन्ति। येषां केषामप्युपासनया स्वेष्टसिद्धिर्भवत्येवेति गीतायामपि भगवता श्रीकृष्णेन स्पष्टमुद्घोषितमस्ति[1]।

प्रायो लोके दृश्यते यद् यो मनुष्यो येन साकं प्रेम प्रकुरुते, स वाञ्छति, यद् मत्समः सर्वेऽपि अनेन सह प्रेम कुर्वन्तु नाम। एवं यो ऋषिर्यस्या देवताया आराधनेनात्मनोऽभीष्टसिद्धिमकामयत, तेन तस्या देवताया विशिष्टा भक्तिः कृता। तदनुगामिना शिष्यवर्गेणापि तस्या एव देवताया उपासनाप्रचारो विहितः। तदनुसारमेव तद्देवतोपासनाया फलप्रतिपादकानामुपाख्यानानामेकस्मिन्नेव पुराणे सङ्कलनं कर्तुं चेष्टाऽजायत। एवं यो मानवो यस्या देवताया भक्तोऽस्ति, स स्वेष्टदेवतामाहात्म्यप्रकाशकमेव पुराणमाद्रियते। एतेनैव कारणेन प्राचीनान्युपाख्यानानि नैकरूपाणि प्राप्यन्ते।

---

१. यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ (गीता ७।२१)

वेदमन्त्रेषु देवतानां स्तुतिमात्रं विद्यते। ब्राह्मणग्रन्थेषु यज्ञादीनां प्रसङ्गे यत्र तत्र कथानामपि संक्षेपत उल्लेखो विद्यते, किन्तु विस्तरत एकत्र कथाख्यानोपाख्यानानां सङ्ग्रह आवश्यक आसीत्। एतत्पूर्तये एव महर्षिणा व्यासेन पुराणानि प्रणीतानि। संस्कृतवाङ्मय-सिद्धान्तानुसारं मानवजीवनस्यास्ति प्रधानं लक्ष्यमाध्यात्मिकजीवनसमुन्नतिद्वारा मोक्षप्राप्तिः। ज्ञान-कर्मोपासनामाध्यमेन मानवमात्रस्य सुमार्गे नयनपूर्वकं मोक्षाधिकारित्वसम्पादनं पुराणानां रचनाया मुख्यमुद्देश्यमस्ति। विभिन्नेषु पुराणेषु भिन्नभिन्नकल्पानां कथाः सन्ति। पौराणिक-कथासु कुत्रचिदस्ति साम्यम्, क्वचन च वैषम्यमपि। तत्परिहारे विद्वांसः कल्पभेदमेवाश्रयन्ति[1]।

पुराण-रामायण-महाभारत-तन्त्रशास्त्राणि विश्वकोशकार्यं कुर्वन्ति। अद्यत्वेऽस्माकमुत्तरो-त्तरमवनतेः कारणं सुशिक्षाया अभावोऽस्ति। शिक्षाया उद्देश्यं न केवलमुदरपूर्तिरेव मन्यते। अतोऽस्माकं धार्मिक-आर्थिक-सामाजिक-नैतिक-शारीरिक-मानसिक-वाचनिकाध्यात्मिको ह्रासः शनैः शनैर्वर्द्धते। कस्यापि देशस्य धर्मस्य जातेश्चोन्नतिमूलकारणं तत्रत्या शिक्षैवास्ते। अत आलोचकानां मतमस्ति, यत् कस्यापि देशस्य जातेश्च धार्मिक-सामाजिक-आर्थिकसमुन्नतिर्द्रष्टुमिष्टा स्यात्तर्हि तदीयशिक्षाप्रणाल्या निरीक्षणं कर्तव्यम्। बालका एव देशस्य धर्मस्य जातेश्च सन्ति विभूतयः। तेषां यादृशं चरित्रं सञ्चितं भविष्यति, तादृशमेव देशस्य धर्मस्य जातेश्च भविष्यमपि सञ्चितं भविष्यपि। अतो बालकानां चरित्रसञ्चये विशेषतो ध्यानं प्रदाय तेभ्यो धार्मिकशिक्षा-प्रदानस्य महत्यावश्यकतास्ति।

यवनखीष्टीयबालकानां कृते तु तत्संस्थास्थापितेषु शिक्षालयेषु प्रवर्तते तदीयधार्मिक-शिक्षाप्रदानस्य व्यवस्था, किन्तु हिन्दुबालकानां कृते धर्मनिरपेक्षसर्वकारद्वारा सञ्चालितेषु शिक्षालयेषु धार्मिकशिक्षाप्रदानस्य वार्ता तु दूरे तिष्ठतु, धार्मिकग्रन्थानां नामापि न बालकै-र्ज्ञायते। परिणामेऽस्माकं बालका ध्रुव-प्रह्लाद-लव-कुश-भरत-अभिमन्युप्रभृतीनां वीरबालकानां स्वप्नमपि न पश्यन्ति। इदं हिन्दूजातेर्ह्रासस्य न कारणं तर्हि किं सम्भवेत्?

भारतीयशिक्षाया उद्देश्यं न केवलं धनोपार्जनमात्रमेवास्ति, प्रत्युत धर्मार्थकामानां समानतया सेवनमनिवार्यं विद्यते। अर्थात्—त्रयाणां धर्मार्थकामानां समानरूपेण समादरो विधेयः। यो हि त्रिष्वेतेषु कस्मिंश्चिदेकस्मिन् व्यासज्जते, स निकृष्टकोटिकः पुरुषो निगद्यते। यो द्वयोर्निरतो भवति, सोऽस्ति मध्यमकोटिको नरः। यश्च त्रिषु समानरूपेण प्रवर्तते, स उत्तमकोटिको मानवो गण्यते[2]।

एवं भारतीया धर्मदर्शनाभ्यां सहैव जीवनस्य भौतिकेष्वङ्गेष्वपि पर्याप्तां रुचिं दधते स्म। तेषां पुरुषार्थेषु धर्म-मोक्षातिरिक्तावर्थकामावप्यास्ताम्, याभ्यां जीवनस्य प्रवृत्तिमार्गे उचितं स्थानं प्राप्तमासीत्। या हि धर्मप्राणा हिन्दुजातिरन्यजातिषु शिरोमणिः, मानवमणिः,

---

१. क्वचित् क्वचित् पुराणेषु विरोधो यदि दृश्यते।
कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते॥

२. धर्मार्थकामाः सममेव सेव्या यो ह्येकसेव्यः स नरो जघन्यः।
द्वयोस्तु दाक्ष्यं प्रवदन्ति मध्यं स उत्तमो यो निरतस्त्रिवर्गे॥

आदिगुरुः, शिक्षिका, पथप्रदर्शिका चासीत्, अद्यत्वे तस्या एव बालका धर्मंहीना अन्यानुकरण-कुशला विस्मृतपूर्वजपुरुषार्था उच्छृङ्खलाचाराश्च भवन्ति निरन्तरमित्यहो दौर्भाग्यम् । यदि हिन्दुभिर्निजबालकेभ्यः पूर्ववर्तिनां स्वनिर्भीकवीरबालकानां कथानकमुपदिष्टं स्यात्तर्हि नैवं दशा सम्भवेत् ।

अद्यत्वे धार्मिकशिक्षाया अभावस्य परिणामो जायते, यदाधुनिकानां बालकानां हृदय-पटलेषु हिन्दुसंस्कृते रूपरेखा न विकसिता भवति, येन ते स्वपूर्वजानां गौरवमनुकरणीयमादर्शं च सर्वथा विस्मृत्यानेकानर्थकरणे प्रवृता भवन्ति, प्राचीनस्य भारतस्य नेषदपि अभिमानं तेषु भवति । न ते जानन्ति यदस्माकं धर्म-साहित्यपूर्वपुरुषाणां वास्तविकं स्वरूपं कीदृगासीत्, किञ्चास्ति कर्तव्यमस्माकम् ।

तात्पर्यमिदमस्ति यद् बाल्यावस्थायां धार्मिकशिक्षाया अभावादद्यतनीया अस्माकं बालका हिन्दुधर्म-साहित्य-सभ्यता-संस्कृति-सामाजिकविषयाणां किमपि न जानन्ति, किन्तु पाश्चात्यधर्म-रीति-नीति-व्यवहारादिविषयेऽत्यधिकाः प्रवीणा जायन्ते । यस्य परिणामेऽस्माकं वैदिकधर्म-सदाचार-भारतीयनीति-रीति-विचार-व्यवहारादयो बालकानां हृदयेभ्य उत्तरोत्तरं निःसरन्ति, प्रविशन्ति च वैदेशिका आचार-विचार-व्यवहारादयः । अद्यत्वेऽस्माकं बालकाः स्वकीयस्वरूप-भाषा-भावादिग्रहणे सङ्कुचन्ति, किन्तु विदेशीयभावना-भाषा-आचार-विचार-व्यवहारादीना-मनुकरणे स्वकीयं गौरवमनुभवन्ति । यत्रास्माकं शिक्षाया आदर्शः—'महाजनो येन गतः स पन्थाः' इत्यासीत्, तत्राद्यतनीया बालकाः स्वपूर्वजान् आरण्यकानसभ्यान् सङ्कीर्णविचाराननुदारां च मन्यन्ते ।

इतिहासनाम्नाऽस्माकं बालका यत् शिक्ष्यन्ते, किं तदेवास्ति वास्तविक इतिहासः ? अद्यतनीये इतिहासे तु बालकाः शिक्ष्यन्ते यद् हिन्दुसभ्यता साहित्यं चार्वाचीने स्तः । हिन्दुपूर्वजा मध्येशियातो भारतमाक्रम्यात्रत्यानामादिनिवासिनामार्याणां सर्वस्वं लुण्ठितवन्तस्तथा तांश्च दूरे दक्षिणेऽपसारयन् । हिन्दवो भारतस्यादिनिवासिनो न सन्ति, किन्तु तेऽपि आंग्ल-जातिवद् बाह्यप्रदेशादागताः । किं सर्वविधज्ञानभाण्डाराणां भारतीयेतिहासस्रोतसां वेदानां पुराणानामस्मत्पूर्वजानां च विषये निर्मूलभ्रमोत्पादकचर्चैवास्तीतिहासः ? नहि, कदापि नैतत् सम्भवति ।

कथनस्येदमस्ति तात्पर्यं यद् या जातिः स्वान् धर्मग्रन्थान् आत्मनः पूर्वजांश्च विस्मरति, तान् प्रति दोषदृष्टिं वा कुरुते, सा न स्थायिनीं समुन्नतिं कर्तुं प्रभवति । अद्यतनशिक्षायाः प्रभावेण भारतीयानामियमेवास्ति दशा । पाश्चात्त्येन विचारकेण विदुषा मैक्समूलरेण सत्यमुक्त-मस्ति—'या जातिः स्वकीयेन प्राचीनेन गौरवेण, इतिहासेन, साहित्येन च नात्मानं गौरवान्वितं मनुते, सा स्वजातीयजीवनस्य प्रधानमाश्रयं समुन्मूलयति ।

वस्तुतोऽद्यत्वे शिक्षापद्धतावनेके दोषाः समागताः सन्ति—अनुशासनहीनता दैनन्दिनं वर्द्धते । गुरुशिष्यसद्भावो दूरतरं गच्छति, कक्षाबहिस्कारोऽहरहः क्रियते, कलहाग्निर्देदीप्यते, सङ्घर्षस्फुलिङ्गाः सर्वतः प्रसरन्ति, अभिभावकानां गुरूणामन्तेवसतां चैकमात्रं ध्येयमुपस्थित-मस्ति यद् बालकाः परीक्षासु येन केनापि प्रकारेणावश्यमुत्तीर्णाः स्युः । परीक्षाकेन्द्रेषु अवैधा-

श्रयणम्, परीक्षकाणां भर्त्सनम्, अनुचितेन विधिनाऽङ्कप्राप्तिप्रयासः समेषां लक्ष्यं जातमस्ति। प्रश्नकाठिन्ये कोलाहलकरणम्, परीक्षामवनत्यागः कर्तव्यत्वेनोपस्थितः। केन्द्रव्यवस्थापकानां हत्याया निरीक्षकेष्वाघातस्य च कुचेष्टाः क्रियन्ते, कुलपतेर्विश्वविद्यालये प्रवेशः कठिनो जातः, कार्यालयस्य कार्यस्थगितीकरणमारब्धम्। तत्राग्निप्रज्वालनं वस्तूनां त्रोटनं भेदनञ्च प्रायः सर्वत्रैव बोभवीति। यत्रेदृशः शिक्षायाः कुपरिणामो दृश्यते, तत्र का सदाशा क्रियेत। अतो वर्तमानशिक्षापद्धतावामूलं परिवर्तनमनिवार्यतया नितान्तमावश्यकं प्रतीयते। भारतहितेच्छुभिः समस्तैः शिक्षाविद्भिः सम्भूय भाविन्याः सन्ततेर्वास्तविकविकासशीलप्रवृत्तये सुशिक्षायाः प्रयासोऽवश्यं विधेयः।

'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्'—इति हितोपदेशवचनानुसारं बाल्ये या शिक्षा दीयते, तस्या एव संस्कारो बालकेषु दृढतरो जायते, जीवन पर्यन्तं च तया लाभो भवति। अतो हि सुकोमलमतिभ्यो बालकेभ्यः किञ्चित् तदुपयोगिनीं भारतीयां पौराणिकीं शिक्षामवश्यं प्रदातुं प्रयतनीयम्। यथा सुशिक्षया ते धर्मदेशजातीनां समुन्नतये प्रयत्नशीलाः सन्तः सुखमयं-जीवनं निर्मातुं शक्नुयुः। अतस्तैः स्वप्राचीनेतिहासस्य परम्पराया वा ज्ञानमवश्यं कर्तव्यम्, येन भारतीयसभ्यतायाः संस्कृतेश्च पूर्णज्ञानवन्तोऽस्माकं बालका समाजस्य पथप्रदर्शकाः सन्तः स्वदेश-धर्म जातीनां सत्सेवका राष्ट्रहितेच्छवो वा भवेयुः, तथा स्वतन्त्रस्य भारतस्य गौरवरक्षणेन सह स्वं भविष्यं नूनं समुज्ज्वलमादर्शमयं च विदध्युः।

**उपसंहारः**

वस्तुतः पुराणेतिहासयोर्माध्यमेन प्राचीनभारतीयसांस्कृतिकजीवनस्य प्रत्यक्षं चित्रमुपतिष्ठते। महर्षिणा वेदव्यासेन तत्र मानवजीवनस्य समस्तानां व्यवहाराणामादर्शमयं चित्रमुपस्थापितमस्ति, येनैतिहासिक सांस्कृतिक-सामाजिक-नैतिकाध्ययने महत्साहाय्यमवाप्यते गवेषकैः। अतो भारतीयसंस्कृतेः पूर्णज्ञानाय पुराणानामनुशीलनं नितान्तमावश्यकमस्ति। पौराणिकसामग्री तथैव प्रामाणिकी ज्ञेया, यथा वेद-स्मृति-शिलालेख-मुद्रा-ताम्रपत्रादीनि प्रामाणिकानि मन्यन्ते। म० म० मिराशी महोदयद्वारा पठितमुद्रालेखैः पुराणवर्तिनां कियतां राजचरितानां सत्यता प्रमाणिता। एवं भूगर्भविद्याविशारदैः पुरातत्त्वविद्भिः मोहनजोदड़ो-हरप्पादिपूत्खनने समुपलब्धमूर्ति-मृत्पात्रादिद्वारा प्राचीनतया पुराणकालिकभारतीयसभ्यतां साधयितुं निरन्तरं प्रयत्यते।



# पुराणेषु मन्वन्तराणि

डॉ० रामाभिलाषत्रिपाठी
मलिकपुरा महाविद्यालयः, गाजीपुर

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ।।

इत्युक्तलक्षणेन पुराणेषु सृष्टिप्रलययोर्वर्णनम्, ऋषीणां राज्ञां च वंशविस्तारः, वंशानुचरितवर्णनं पुराणानां प्रतिपाद्यम् । ४,३२,००,००,००० वर्षं यावत् सर्गः प्रवर्तते । महत्तमेऽस्मिन् काले लोकेषु घटनाक्रमातिशय्यं भवत्येवेति तासां घटनानां कालबोधार्थमेव मन्वन्तरविज्ञानं पुराणलक्षणेषु निहितम् । अनयैव कालबोधपद्धत्या पुराणप्रोक्तानां सर्गप्रतिसर्गाणाम्, ऋषीणाम्, राज्ञां च वंशानाम्, अवताराणाम्, विविधानां देवासुरादियुद्धानां च समयः सूच्यते । विष्णुपुराणे, श्रीमद्भागवते तथा वायवीये पुराणे च मन्वन्तराणां विस्तरेण वर्णनमुपलभ्यते । मन्वन्तरबोधार्थं कालस्य सूक्ष्मतमविभागात् प्रारभ्य ब्रह्मायुः पर्यन्तं समयो निरूपितः । अधस्तात् तालिकायां विष्णुपुराणोक्तम्, श्रीमद्भागवतोक्तं च कालस्वरूपं प्रदर्श्यते ।

| विष्णुपुराणे— | कालस्वरूपम्— | श्रीमद्भागवते |
|---|---|---|
| | | २ परमाणू = १ अणुः |
| | | ३ अणवः = १ त्रसरेणुः |
| | | ३ त्रसरेणवः = १ [1]त्रुटिः |
| | | १०० त्रुटिः = १ वेधः |
| | | ३ वेधाः = १ लवः |
| | | ३ लवाः = १ निमेषः |
| | | ३ निमेषाः = १ क्षणम् |
| १५ निमेषाः = १ काष्ठा | | ५ क्षणानि = १ काष्ठा |
| | | १५ काष्ठाः = १ लघुः |
| | | १५ लघवः = १ नाडिका |
| ३० काष्ठाः = १ मुहूर्तम् | | २ नाडिके = १ मुहूर्तम् |
| | | ७½ नाडिकाः = १ यामः (प्रहरः) |
| ३० मुहूर्तानि = १ अहोरात्रम् | | ८ प्रहराः = १ अहोरात्रम् |
| | | १५ अहोरात्रम् = १ पक्षः |
| ३० दिनानि = १ मासः ( २ पक्षौ ) | | २ पक्षौ = १ मासः |
| | | १ मासः = १ पितृ-अहोरात्रम् |
| | | २ मासौ = १ ऋतुः |

---

१. तिसृणां त्रसरेणूनां भेदने सूर्यांशुजालानां यः समयो व्यत्येति स त्रुटिरित्युच्यते ।

| | |
|---|---|
| ६ मासाः = १ अयनम् | ३ ऋतवः = १ अयनम् |
| २ अयने = १ वर्षम् | २ अयने = १ वर्षं ( देवानामेक-महोरात्रम् ) |
| १ वर्षम् = १ दिव्याहोरात्रम् | १ वर्षम् = १ देवाहोरात्रम् |
| | ३० दिव्याहोरात्रम् = १ दिव्यमासः |
| | १२ दिव्यमासाः = १ दिव्यवर्षम् |
| १२ सहस्रदिव्यवर्षाणि = १ चतुर्युगम् | १२ सहस्रदिव्यवर्षाणि = १ चतुर्युगम् |
| | युगम्—समयः सन्ध्या सन्ध्यांशः |
| | कृतम्—४००० ४०० ४०० |
| | त्रेता—३००० ३०० ३०० |
| | द्वापरः—२००० २०० २०० |
| | कलिः—१००० १०० १०० |
| १ सहस्रं चतुर्युगानि = १ ब्राह्मदिवसः— | १ सहस्रं चतुर्युगानि = १ ब्राह्मदिवसः ( १ कल्पः ) |
| १ ब्राह्मदिवसः = १४ मन्वन्तराणि— | १ ब्राह्मदिवसः = १४ मन्वन्तराणि |
| साधिकं ७१ चतुर्युगम् = १ मन्वन्तरकालः— ( ७१ ६/१४ ) | १ मन्वन्तरकालः = ७१ चतुर्युगात् किञ्चिदधिकम् ( ७१ ६/१४ ) |
| ८ लक्षा ५२ सहस्रदिव्यवर्षाणि | |
| ३० कोटिः ६७ लक्षः २० सहस्रमानववर्षाणि | |
| दिव्यशतवर्षाणि = ब्रह्मायुर्भवति | ब्राह्मदिवसैर्ब्रह्मणः शतवर्षायुः |
| | १ ब्राह्मशतवार्षिकी = श्रीहरेरेको निमेषो भवति । |

उपर्युक्तायामस्यां सरण्यां विष्णुभागवतपुराणीयं कालस्वरूपं स्पष्टीकृतम् । द्वयोरपि वर्णनक्रम एक एव । किं च विष्णुपुराणे निमेषतः प्रारभ्य ब्रह्मायुः पर्यन्तं कालक्रमः प्रदर्शितः । भागवते वैशिष्ट्यं वर्तते । तत्र कालस्य यः सूक्ष्मतमोऽशः परमाणुः, ततः प्रारभ्य भगवतः श्रीहरेर्निमेषपर्यन्तं परिगणितम् । परमाणु-अणु-त्रसरेणु-त्रुटि-वेध-लव-इत्यादयः सूक्ष्मप्रभेदा निमेषात् पूर्वं निरूपिताः । अयं सूक्ष्मतमभेदस्तु विष्णुपुराणे न प्राप्यते । क्षण-लघु-नाडिका-याम-प्रहरादिभेदा अपि भागवते निमेषात् पश्चान्निरूपिताः । विष्णुपुराण एतेषां विवरणं नास्ति । ब्रह्मायुषोऽन्ते भगवतो हरेरेकः निमेषो भवतीति भागवते विवेचितम् । विष्णुपुराणीय एव विषयो भागवते विस्तारितः । तथा च विष्णुपुराणे मन्वन्तरकालपरिगणने उक्तम्—

चतुर्युगानां सङ्ख्याताः साधिका ह्येकसप्ततिः ।
मन्वन्तरं मनोः कालः सुरादीनां च [1]सत्तम ॥

---

१. वि० पु० १।३।१८ ।

भागवतेऽपि च—"स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम्[1]" इति ।

द्वयोरपि पुराणयोरिदं स्पष्टं नास्ति यत् 'साधिका' शब्देन कियत् परिमाणः कालः ग्राह्यो भविष्यति । अन्येष्वपि पुराणेष्वयं विषयश्चर्चित एव । वायुपुराणे च—

एवं चतुर्युगाख्या तु साधिका ह्येकसप्ततिः ।
कृतत्रेतादियुक्ता सा मनोरन्तरमुच्यते ॥
मन्वन्तरस्य सङ्ख्या तु वर्षाग्रेण निबोधत ।
त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण प्रकीर्तिताः ॥
सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि तु ।
विंशतिश्च सहस्राणि कालोऽयं सन्धिकं [2]विना ॥

विष्णुवायुपुराणयोरत्र साम्यं विद्यते । वर्षाणां त्रिंशत्कोटयः सप्तषष्टिनियुतानि विंशत्सहस्राणि भवन्त्येकस्मिन् मन्वन्तरकाले ।

परं च द्वयोर्मन्वन्तरयोर्मध्ये यः सन्धिरूपः समयः प्रोक्तः, तं त्यक्त्वेयं गणनाकृता । अतश्चतुर्दशमन्वन्तरकालेषु ९९४ चतुर्युगं सामान्यकालो भवति । अवशिष्टं षड्युगं सन्धिकालः । विष्णुपुराणस्योपर्युक्ते श्लोके श्रीधरीटीकायाम्—"चतुर्युगसहस्रप्रमाणस्य ब्रह्मदिनस्य चतुर्दशधा विभागे प्रतिविभागमेकसप्ततिश्चतुर्युगानि भवन्ति । अवशिष्यन्ते चतुर्युगषट्कान्तरस्य चतुर्दशांशो यथागणितः प्रतिमन्वन्तरमेकसप्ततेरधिक इत्यर्थः', 'साधिका ह्येकसप्ततिः' इति पाठस्येयं व्याख्या कृता । सूर्यसिद्धान्तमते प्रत्येकस्मिन् मन्वन्तरे एकः सन्धिकालः कृतयुगमानसमो ( ४८०० दिव्यवर्षाणि ) भवति । तथा प्रत्येकस्मिन् कल्पारम्भेऽपि तथैव सन्धिर्भवति । इत्थं चतुर्दशमन्वन्तरसन्धिकालस्तथैकः कल्पादिसन्धिकालः, द्वयोर्योगः पञ्चदशसन्धिकालः षण्महायुगसमो भवति । अयमेव साधिकाशब्दस्याभिप्रायः । तथा चोक्तं सूर्यसिद्धान्ते—

युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते ।
कृताब्दसङ्ख्या तस्यान्ते सन्धिः प्रोक्तो जलप्लवः ॥
ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश ।
कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशस्मृतः[3] ॥ इति ।

मन्वन्तरकालगणनायां पुराणैः सन्धिकालस्य पृथक्करणमुचितमेव । यतो मन्वन्तराणि चतुर्दश, सन्धयास्त्वाद्यन्तं गृहीत्वा पञ्चदश भवन्ति । ( कल्पारम्भेऽप्येकः सन्धिकालो भवति, स एव प्रथमः सन्धिकालः । मन्वन्तरकालेन सहैव सन्धिकालगणनायां दोषः समायाति ) । अत एव पुराणेषु 'साधिका ह्येकसप्ततिः' इत्युक्तेऽपि सन्धिकालं पृथक्कृत्वैव मन्वन्तरकालपरिगणना-कृता । पुराणोक्तं मन्वन्तरकालविवेचनं ज्योतिषसाक्ष्यादपि यथार्थं प्रतिभाति ।

---

१. भा० ३।११।२४ ।
२. वायु० ५७।३३–५५ ।
३. सूर्यसिद्धान्तः—१।१८-१९ ।

मन्वन्तराणि—चतुर्दशमन्वन्तराणां नामानि [1]विष्णुपुराणे एवं प्राप्यते—स्वायंभुवमनुः, स्वारोचिषमनुः उत्तमः, तामसः, रैवतः, चाक्षुषः, वैवस्वतः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, रुचिः, भौमः।

भागवतेऽपि एतान्येव मन्वन्तराणि प्राप्यन्ते, किन्तु त्रयोदशसङ्ख्यानं 'देवसावर्णिः' चतुर्दशं च 'इन्द्रसावर्णिः' इति [2]प्रोक्तम्। अन्येष्वपिपुराणेषु विष्णुपुराणोक्तान्येव मन्वन्तराणि प्रोक्तानि, किन्त्वन्तिमं नामद्वयं सर्वत्र वैभिन्येन दृश्यते। यथा वायु-मत्स्य-मार्कण्डेयादिषु रौच्य-भौत्येति नाम्नोल्लेखः [3]कृतः। देवीभागवते तु दशमो मेरुसावर्णिः, एकादशसूर्यसावर्णिः, द्वादशचन्द्र-सावर्णिः, त्रयोदशरुद्रसावर्णिः, चतुर्दश [4]विष्णुसावर्णिरिति प्रोक्तः।

मन्वन्तरविवेचनं विष्णुपुराणे श्रीमद्भागवतेऽपि च विस्तरेण विद्यते, किन्तु विष्णु-पुराणोक्तं भागवतापेक्षयाऽपि विस्तृतम्। विष्णुपुराणमते प्रत्येकस्मिन् मन्वन्तरे पञ्च, भागवते तु षडधिकारिणो भवन्ति। ये तु भूतले विशिष्टकार्यसम्पादनार्थमागच्छन्ति, कृतकार्या निवर्तन्ते च। पुनर्द्वितीयस्य मन्वन्तरस्याधिकारिण आगच्छन्ति। एष्वधिकारिरूपेषु श्रीभगवतो वैष्णवी-शक्तिरेव समर्था क्रियाशीला च भवति। विष्णुपुराणम् एतानधिकारिणः विष्णुविभूतिमेव स्वीकरोति[5]। विष्णुपुराणे एषामधिकारिणां नामानि च—मनुः, सप्तर्षयः, देवाः, इन्द्रः, मनुपुत्रा[6] इति। श्रीमद्भागवते तु षडधिकारिणां गणना कृता—

मन्वन्तरं मनुर्देवा मनुपुत्राः [7]सुरेश्वरः।
ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते॥

एषामधिकारिणां कार्याणि अतीव विशिष्टानि महत्त्वपूर्णानि च सन्ति। विष्णुपुराणानुसारं चतुर्युगसमाप्तौ वेदविप्लवे सति वेदानां प्रवर्तनं नितान्तमावश्यकं भवति। अत एव सप्तर्षयो भूतलमागत्य वेदप्रवर्तनं कुर्वन्ति। सप्तर्षय एव प्रत्येकस्मिन् मन्वन्तरे वेदप्रवर्तकाधिकारिणो [8]भवन्ति। चतुर्युगान्ते जलप्लवनान्ते च पुनः कृतयुगादौ धर्ममर्यादास्थापनार्थं मनोर्जन्म भवति।

भागवतेऽपि मनोर्जन्मप्रयोजनमीदृशमेव प्रोक्तम्—चतुर्युगान्ते नष्टायां श्रुतौ सप्तर्षयः तपोभिः साक्षात्कुर्वन्ति, प्रजापालनादिकार्यं सम्पादयन्ति [9]च। एवं च विष्णुभागवतयोर्मनूना-मेकमेव कार्यं प्रतिपादितम्। मनुपुत्रैः क्षत्रियराजभिस्तात्पर्यम्। मनुपुत्रान्वर्थताऽनेन यदेते राजानः परम्परया मनुपुत्राः, अथवा मनुप्रणीतव्यवस्थापद्धतेः समाश्रयणं कुर्वन्ति। एवं च दण्डनीति-

---

१. वि० पु० ३।२।३६-४०।
२. भा० ८।१।१३ अध्यायः।
३. वायु० पूर्वार्ध ६२।३–४, मत्स्य० ९।१५, मार्क० अध्यायः ९४ तथा ९९।
४. देवीभा० १०।१३।२५–३०।
५. वि० पु० ३।१४।६।
६. वि० पु० ३।२।४९।
७. भा० १२–७।१५।
८. वि० पु० ३।२।४५–४६।
९. भा० ८।१४। ४–६।

विधाने प्रजासंरक्षणकार्ये च सर्वथाकृतकृत्या भवन्ति। भागवतानुसारं प्रतिमन्वन्तरे हरेरंशावतारस्याप्युदयो धर्मसंरक्षणायाधर्मविनाशाय च भवति। प्रत्येकस्मिन् काले विषमपरिस्थितावेव भक्तवत्सलो भगवान् स्वप्रतिज्ञानुसारमवतरति[1]।

अत एव भागवतेऽशावतारस्य षष्ठाधिकारिस्वीकारस्यौचित्यं प्रतिभात्येव। निष्कर्षतस्तु द्वे अपि पुराणे विशिष्टसम्राड्रूपेण मनुं स्वीकुरुतः। मन्वादिपञ्चाधिकारिणो विष्णोः सात्त्विकांशाः सन्ति जगत्स्थितिकराः—

मनवो भूभुजः सेन्द्राः देवाः सप्तर्षयस्तथा।
सात्त्विकोंऽशः स्थितिकरो जगतो [2]द्विजसत्तम॥

फलतो जगत्संरक्षणकार्ये सहायकाः सर्वेऽधिकारिणो मनुना सहैवाविर्भवन्ति, स्वस्वकार्यं च सम्पादयन्ति। इत्थं मन्वन्तरविधानं लोकमङ्गलभावनाया विशिष्टं प्रतीकमस्ति। सुव्यवस्थितिं विना लोककल्याणसमभावनैव नास्ति। मन्वन्तरं सुचारुलोकव्यवस्थानिर्धारणस्यैकः सुचारुसाधनः। विष्णुपुराणोक्तिर्भागवतेनापि [3]समर्थितास्ति।

आदितः पञ्चममनुपर्यन्तं सर्वेषां सम्बन्ध एकेनैव व्यक्तिना स्वीकृतः, स च मानवानामादिपुरुषः स्वायम्भुवो मनुः। अस्यैव ज्येष्ठः पुत्रः प्रियव्रत आसीत्। प्रियव्रतवंश एव विष्णुपुराणे स्वारोचिष-उत्तम-तामस-रैवतादयः परिगणिताः। तद्यथा—

स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा।
प्रियव्रतान्वया ह्येते चत्वारो मनवः [4]स्मृताः॥

विष्णुपुराण एतदेव संक्षिप्तं विवरणम्, किन्तु भागवते तु वैशिष्ट्यं प्रतीयते। तथा च—"अन्यस्यामपि जायायां त्रयः पुत्राः आसन्—उत्तमस्तामसो रैवत इति [5]मन्वन्तराधिपतयः"। एतद् विशदं स्पष्टीकृतं यत् प्रियव्रतस्यापरायां जायायाम् एते त्रयः उत्पन्नाः। तात्पर्यमिदं यद् मन्वन्तरपरम्पराप्रवर्तकः स्वायम्भुवमनुरेव। तथा तेषामेव वंशधरा महनीयगरिमामयमनूपाधिधारणयोग्यताक्षमा आसन्। अत एवेदं पदमस्मिन् वंशे पञ्चममन्वन्तरपर्यन्तमवश्यमेव स्थिरमासीत्।

प्रत्येकमन्वन्तराधिपतीनां नामनिर्देशो विष्णुभागवतपुराणयोरुपलभ्यते। तत्र विष्णुपुराणोक्तं विवरणमतिविशदं सुव्यवस्थितं [6]चास्ति। भागवतेऽप्येतद् विवरणं विष्णुपुराणानुसार्येव[7]। किन्तु मन्वन्तरातिरिक्तानामधिकारिणां परस्परं नामभेदोऽपि प्राप्यते। भागवते च प्रत्येकस्मिन् मन्वन्तरे हरेरंशावतारस्यापि निर्देशः कृतः। भगवान् स्वयमाविर्भूय तात्कालिकीं धार्मिकीमव्यवस्थां दूरीकरोति, जगन्मङ्गलं च साधयति, येन प्राणिनां कल्याणं भवति। निष्कर्षतस्तु सर्वेषु मन्वन्तरेषु देवरूपेण स्थिता भगवतो विष्णोरनुपमसत्त्वप्रधाना शक्तिरेव संसारस्थितौ तस्याधिष्ठात्री भवति। तथा हि—

१. भा० १२।७।१५।
२. वि० पु० ३।२।५३।
३. भा० ८।१३।
४. वि० पु० ३।१।२४।
५. भा० ५।१।१८।
६. वि० पु० ३।१–२।
७. भा० ८।५–१३।

विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थितौ स्थिता ।
मन्वन्तरेष्वशेषेषु [1]देवत्वेनाधितिष्ठति ।।

प्रतिमन्वन्तरे विष्ण्वंशानां विवरणं विष्णुपुराणे विस्तारितम्[2] । वर्तमानस्य मन्वन्तरस्याराध्यो देवो वामन अदित्यां कश्यपादभूदिति विष्णुभागवतयोः साम्यं दृश्यते ।

मन्वन्तरेऽत्र सम्प्राप्ते तथा वैवस्वते द्विज ।
वामनः कश्यपाद् विष्णुरदित्यां [3]सम्बभूव ह ।।

भागवते च—

अत्रापि भगवज्जन्म कश्यपाददितेरभूत् ।
आदित्यानामवरजो [4]विष्णुर्वामनरूपधृक् ।।

## मन्वन्तराधिकारिणः

| विष्णुपुराणे | श्रीमद्भागवते |
|---|---|
| १. स्वायंभुवमनुः | १. स्वायंभुवमनुः, |
| | तोषः, प्रतोषः, सन्तोषादयः, तुषितनामा देवाः । |
| मरीच्यादयः सप्तर्षयः, | मरीच्यादयः, सप्तर्षयः, |
| प्रियव्रतोत्तानपादौ पुत्रौ | प्रियव्रतोत्तानपादौ पुत्रौ |
| २. स्वारोचिषमनुः— | २. स्वारोचिषमनुः— |
| पारावततुषितगणो देवता, | तुषितादिदेवगणः, |
| विपश्चिदिन्द्रः, | रोचननामेन्द्रः, |
| ऊर्जस्तम्भः, प्राणः, वातः, पृषभः, | ऊर्जस्तम्भादयःसप्तर्षयः, |
| निरयः, परीवान्, सप्तर्षयः, | |
| चैत्रः, किंपुरुषादयः पुत्राः, | द्युमान्, सुषेणः, रोचिष्मान् इत्यादयः पुत्राः । |
| ३. उत्तममनुः— | ३. उत्तममनुः— |
| सुधामः, सत्यः, जपः[5], प्रवर्तनः, | सत्यः, वेदश्रुतः, भद्रादयो देवगणाः, |
| वशवर्तिनो देवाः | |
| सुशान्तिर्नाम देवेन्द्रः, | सत्यजिदिन्द्रः |
| वशिष्ठसप्तपुत्राः, सप्तर्षयः, | प्रमदादिसप्तवसिष्ठपुत्राः सप्तर्षयः |
| अजः, परशुः, दीप्तादयः पुत्राः, | पवनः, सञ्जयः, यज्ञहोत्रादयः पुत्राः |

---

१. वि० पु० ३।१।३५ ।　　२. वि० पु० ३।१।३६–४५ ।
३. वि० पु० ३।१।४२ ।　　४. भा० ८।१३।६ ।
५. भा० ४।१।६–९ ।

४. तामसमनुः—

सुपारः, हरिः, सत्यः, सुधीतिः,
देववर्गः, शिविरिन्द्रः
ज्योतिर्धाम, पृथुः, काव्यः, चैत्रः,
अग्निः, वनकः, पीवरः, सप्तर्षयः,
नरः, ख्यातिः, केतुरूपः, जानुजङ्घादयः
पुत्राः ।

४. तामसमनुः—

सत्यः, हरिः, वीरनामाः, देवगणाः
वैधृतिनामापि देवगणः, त्रिशिरेन्द्रः
ज्योतिर्धामादयः सप्तर्षयः
नरः, ख्यातिः, केत्वादयो
दशपुत्राः ।

५. रैवतमनुः—

अमिताभः, भूतरयः, वैकुण्ठः,
सुमेधादयो देवगणः
विभुरिन्द्रः,
हिरण्यरोमा, वेदश्रीः, ऊर्ध्वबाहुः,
वेदबाहुः, सुधामा, पर्जन्यः,
महामुनिः—एते सप्तर्षयः
बलबन्धुः, सम्भाव्यः, सत्यकादयः पुत्राः,

५. रैवतमनुः—

भूतरयादिदेवगणः,
विभुरिन्द्रः,
हिरण्यरोमा, वेदशिरा, ऊर्ध्वबाह्वादयः
सप्तर्षयः,
अर्जुनः, बलिः, विन्ध्यादयः पुत्राः ।

६. चाक्षुषमनुः—

आप्यः, प्रसूतः, भव्यः,
पृथुकः, लेख इत्यादयो देवगणाः,
मनोजवः, नामेन्द्रः,
सुमेधा, विरजा, हविष्मान्,
उत्तमः, मधुः, अतिनामा, सहिष्णुः
एते सप्तर्षयः
अरुः, पुरुः, शतद्युम्नादयः पुत्राः ।

६. चाक्षुषमनुः—

आप्यादयो देवगणाः
मन्त्रद्रुमेन्द्रः,
हविष्मान्, वीरकादयः
सप्तर्षयः ।
पुरुः, पुरुषः, सुद्युम्नादयः पुत्राः ।

७. वैवस्वतमनुः ( श्राद्धदेवः )—

आदित्यः, वसुः, रुद्रादयो देवगणाः
पुरन्दरेन्द्रः
वसिष्ठः, काश्यपः, अत्रिः, जमदग्निः
गौतमः, विश्वामित्रः, भरद्वाजः
सप्तर्षयः,
इक्ष्वाकुः, नृगः, धृष्टः, शर्यातिः,
नरिष्यन्तः, नाभागः, अरिष्टः,
करुषः, पृषध्नः, पुत्राः ।

७. वैवस्वत( श्राद्धदेवः )मनुः—

आदित्यः, वसुः, रुद्रः, विश्वेदेवः, मरुद्गणः,
अश्विनीकुमारः, ऋभ्वादयो देवगणाः
पुरन्दरेन्द्रः
वसिष्ठः, कश्यपः, अत्रिः, जमदग्निः,
गौतमः, विश्वामित्रः, भरद्वाजः,
सप्तर्षयः,
इक्ष्वाकुः, नभगः, धृष्टः, शर्यातिः,
नरिष्यन्तः, नाभागः, दिष्टः, करुषः,
पृषध्नः, वसुमान् पुत्राः ।

| | |
|---|---|
| ८. सार्वणिर्मनुः— | ८. सार्वणिर्मनुः— |
| सुतपः, अमिताभः, मुख्यगणो देवाः, | सुतपा, विरजः, अमृतप्रमेत्यादयो |
| दीप्तिमान्, गालवः, रामः, कृपः, | देवगणाः, |
| | गालवः, दीप्तिमान्, |
| अश्वत्थामा, व्यासः, ऋष्यश्रृङ्गादयः | परशुरामः, अश्वत्थामा, कृपाचार्यः, |
| सप्तर्षयः । | ऋष्यश्रृङ्गः, व्यास एते सप्तर्षयः । |
| बलिरिन्द्रः, | बलिरिन्द्रः, |
| विरजा, उर्वरीवान्, निर्मोकादयः | निर्मोकः, विरजस्कादयः |
| पुत्राः । | पुत्राः । |
| ९. दक्षसार्वणिर्मनुः— | ९. दक्षसार्वणिर्मनुः— |
| पारः, मरीचिगर्भः, सुधर्मादयो | पारः, मरीचिगर्भादयो देवगणाः । |
| देवगणाः । | |
| अद्भुतनामेन्द्रः, | अद्भुतनामेन्द्रः, |
| सवनः, द्युतिमान्, भाव्यः, वसुः, | द्युतिमानादयः सप्तर्षयः । |
| मेधातिथिः, ज्योतिष्मान्, सत्य | |
| एते सप्तर्षयः । | |
| धृतिकेतुः, द्युतिकेतुः, पञ्चहस्तः, | भूतकेतुः, दीप्तिकेत्वादयः पुत्राः । |
| निरामयः, पृथुश्रवादयः पुत्राः । | |
| सुक्षेत्रः, उत्तजाः, भूरिषेणादयः | भूरिषेणादयः पुत्राः |
| पुत्राः | |
| १०. ब्रह्मसार्वणिर्मनुः— | १०. ब्रह्मसार्वणिर्मनुः— |
| सुधामा, विशुद्धनायकौ देवगणौ, | सुवासनः, विरुद्धादयो देवगणाः, |
| शान्तिरिन्द्रः, | शम्भुरिन्द्रः, |
| हविष्मान्, सुकृतः, सत्यः, | हविष्मान्, सुकृतिः, सत्यः, जयः, मूर्तिः, |
| तपोमूर्तिः, नाभागः, अप्रतिमौजाः, | आदयस्सप्तर्षयः । |
| सत्यकेतुः, इति सप्तर्षयः । | |
| ११. धर्मसार्वणिर्मनुः— | ११. धर्मसार्वणिर्मनुः— |
| विहङ्गमः, कामगमः, निर्वाणरतिः, | विहङ्गमः, कामगमः, निर्वाणरुचिः, |
| देवगणाः | इत्यादयो देवगणाः । |
| वृषनामेन्द्रः, | वैधृतिर्नामेन्द्रः, |
| निःस्वरः, अग्नितेजाः, वपुष्मान्, | अरुणादयः सप्तर्षयः |
| घृणिः, आरुणिः, हविष्मान्, अनघः, | |
| सप्तर्षयः । | |
| सर्वत्रगः, सुधर्मा, देवानीकपुत्राः, | सत्यधर्मादयो दशपुत्राः |

| | |
|---|---|
| **१२. रुद्रसावर्णिर्मनुः—** | **१२. रुद्रसावर्णिर्मनुः—** |
| हरितः, रोहितः, सुमना, सुकर्मा, सुराप इति देवगणाः । | हरितादिदेवगणाः । |
| ऋतधामा नामेन्द्रः, | ऋतधामा नामेन्द्रः, |
| तपस्वी, सुतपा, तपोमूर्तिः, तपोरतिः, तपोधृतिः, तपोद्युतिः, तपोधनादयः सप्तर्षयः : | तपोमूर्तिः, तपस्वी, आग्नीध्रकादि सप्तर्षयः । |
| देववानुपदेवश्रेष्ठाः पुत्राः | देववानुपदेवश्रेष्ठाः पुत्राः |
| **१३. रुचिर्मनुः—** | **१३. देवसावर्णिर्मनुः—** |
| सुत्रामा, सुकर्मा, सुधर्मादिदेवगणाः, | सुकर्मः, सुत्रामादयो देवगणाः, |
| दिवस्पतिरिन्द्रः, | दिवस्पतिरिन्द्रः, |
| निर्मोहः, तत्त्वदर्शी, निष्प्रकम्पः, निरुत्सुकः, धृतिमान्, अव्ययः, सुतपः, सप्तर्षयः, | निर्मोकः, तत्त्वदर्शादयः सप्तर्षयः । |
| चित्रसेनः, विचित्रादयः पुत्राः । | चित्रसेनः, विचित्रसेनादयः पुत्राः । |
| **१४. भौममनुः** | **१४. इन्द्रसावर्णिर्मनुः** |
| चाक्षुषः, कनिष्ठः, पवित्रः, भ्राजिकः, वाचावृद्धादिदेवगणाः, | पवित्रः, चाक्षुषादिदेवगणाः । |
| शुचिरिन्द्रः, | शुचिरिन्द्रः, |
| अग्निबाहुः, शुचिशुक्रः, मागधः, अग्नीध्रः, युक्तः, जितः, एते सप्तर्षयः । | अग्निबाहुः, शुचिः, शुद्धः, मागधादयः सप्तर्षयः । |
| ऊरुः, गम्भीरबुद्ध्यादयः पुत्राः । | ऊरुः गम्भीरबुद्ध्यादयः पुत्राः । |

श्रीमद्भागवते प्रतिमन्वन्तराधिकारिप्रसङ्गे भगवदंशस्याविर्भावोऽपि वर्णितः[1] । विष्णुपुराणे तु स्वायंभुवं प्रारभ्य वैवस्वतमन्वन्तरपर्यन्तस्यांशावतारस्यैवोल्लेखः कृतः[2] ।

उपर्युक्तं नामसादृश्यं विलोक्येदं स्पष्टं प्रतीयते, यत् प्रायो द्वयोः पुराणयोर्वर्णने सादृश्यमेव । वैभिन्यं तु यथा विष्णुपुराणे प्रथमे मन्वन्तरे देवर्षीन्द्राणां वर्णनं स्पष्टतया न न प्राप्यते । एतदुक्तं विष्णुपुराणे—

'कल्पादावेव स्वायंभुवमन्वन्तरस्य देवर्षयस्सम्यक् [3]प्रोक्ताः' इति ।

तृतीये मन्वन्तरे इन्द्रनामभेदो मनुपुत्रनामभेदश्च । तृतीये देव-इन्द्र-मनुपुत्राणां वैभिन्यम् । चतुर्थे देवेन्द्रयोर्भेदः । पञ्चमे मनुपुत्रनामभेदः, षष्ठे इन्द्रनामभेदः । दशमे देवगणनामभेदः, इन्द्रनामभेदश्च । एकादशे इन्द्रनामभेदः । शेषाणि सर्वाणि सदृशान्येव । विष्णुपुराणे मन्वन्तर-

१. भा० ८।१३ ।
२. वि० पु० ३।१।३५–४३ ।
३. वि० पु० ३।१।८ ।

वर्णनं मुख्यरूपेण कृतम् । भागवते तु मनूनां जीवनचरितप्रसङ्गे कथाविस्तारः कृतः । मार्कण्डेयपुराणे मन्वन्तरकथा विस्तारिताऽस्ति, तत्रापि विष्णुपुराणोक्तानामधिकारिणामेवोल्लेखः कृतः। द्वितीये मन्वन्तरे विपश्चिन्नामेन्द्रस्योल्लेखः[२] । तृतीये मन्वन्तरे सुशान्तिनामेन्द्रः प्रोक्तः[३] । षष्ठे मन्वन्तरे मनोजवनामेन्द्रोऽत्रापि प्रोक्तः[४] । दशमे मन्वन्तरे शान्तिः[५], एकादशे च वृषनामेन्द्रः प्रोक्तः[६] । एवं च विष्णुपुराणोक्तमन्वन्तराधिकारिणां वर्णनं मार्कण्डेयेऽपि समुपलभ्यते ।

इत्थम्, अमुकस्य राज्ञ ऋषेश्च प्रादुर्भावः कदा जातः, भगवदवताराणां विभिन्नः समयः क आसीत्—इत्यादिविषयपरिज्ञानार्थं तत्तद् देवर्षिराजर्षीणां कालनिर्धारणार्थं विभिन्नानां घटनानां विचारणार्थं पौराणिकैतिह्यविषयाणां विवेचनार्थं च मन्वन्तरपद्धतिरतीव सरला महत्त्वपूर्णा चास्ति, किन्तु आधुनिकभौगोलिकैतिहासिकसमीक्षणेन तासां पुराणोक्तानां घटनानां समयनिर्धारणं सम्प्रति किलायुक्तं प्रतिभाति । यत आधुनिकवैज्ञानिकविचारपद्धत्या तासां सम्यक् समन्वयो न भवति ।

---

१. मार्कं० ६७।३ ।
२. मार्कं० ७३।७ ।
३. मार्कं० ७६।५३ ।
४. मार्कं० ९४।१३ ।
५. मार्कं० ९४।१९ ।



# पुराणेषु तीर्थभावनाविकासः

डॉ० सरयूप्रसादगुप्तः
एम्० ए०, साहित्यरत्नम्, पी–एच्० डी०

**राष्ट्रीयसङ्घटनं देवेषु विकासश्च—**

यथाऽस्याः[1] पत्रिकायाः 'वैदिकसाहित्ये तीर्थभावनाविकासः' इति निबन्ध इदं साधितं यत् तीर्थभावनाऽऽरम्भो जलादेवाभवत् । ततः पश्चाद् नद्यः, नदीतटस्थानानि नदीसङ्गमाः, वनानि च 'तीर्थम्' इति कथ्यते स्म । तथा 'अस्याः' पत्रिकायाः[2] 'महाभारते तीर्थभावनाविकासः' इति निबन्धे साधितम्—यद् महाभारते नद्युद्गमाः ( पर्वतप्रपातस्रोतादयः ), नदीलोपस्थानम् ( विनशनम् ), पुनः प्रकटनस्थानम् ( उद्भेदः ), समुद्रसङ्गमः, समुद्रतटमपि 'तीर्थम्' इत्युच्यते स्म ।

महात्मभिस्सेवितान्युपर्युक्तस्थानानि, तैः सेविता आश्रमाः, कुण्डानि, पाठशालाः, यज्ञस्थलानि, कूपाः, सरोवराः, तपोभूमयोऽपि तीर्थशब्देन व्यपदिश्यन्ते स्म । यथा यथा सरस्वतीकुरुक्षेत्रयोः संस्कृत्योः पतनं भवन्नासीत्, तथा तथा गङ्गावाराणस्योः प्रसिद्धिर्वर्धमानाऽऽसीत् । श्रीमद्भागवतपुराणानुसारम्—'नारद उवाच—कुत्र कार्यो मया यज्ञः स्थलं तद्वाच्यतामिह' कुमारा ऊचुः—

गङ्गायास्सरितस्तत्र पुष्पकरादिसरांसि च ।
क्षेत्राणि च दिशः सर्वा दण्डकादिवनानि च[3] ॥
× × ×
क्षेत्राणाञ्चैव सर्वेषां यथा काशी ह्यनुत्तमा ॥

अन्येष्वपि पुराणेषु गङ्गाकाशीमाहात्म्यं प्राचुर्येण प्राप्यते, किन्तु स्कन्दपुराणस्य काशीखण्डं केवलाभ्यामाभ्यामेव हि परिपूर्णमस्ति ।

किञ्च, ईदृशमपि ज्ञायते यद् यथा यथा हिंसात्मका यज्ञाः समाप्ता आसन्, तथा तथाऽऽर्यसंस्कृतौ विधर्मिणां पाचनशक्तेरपि ह्रासो भवन्नासीत् ।

आर्यावर्तस्य पश्चिमोत्तरसीमा विधर्मिभिराक्रान्ता भवन्त्यासीत् । तत्रत्यानि यज्ञस्थलानि तीर्थस्थलानि च शनैः-शनैः विनष्टान्यभवन् । अतः पुराणेषु तत्रत्यतीर्थस्थलानां वर्णनं न प्राप्यते । यज्ञस्य सभ्यता प्रतिमापूजनोत्साहे विलीनाऽभवत् । देवायतनानां निर्माणस्य वृद्धिश्चाभवत् । बौद्धधर्मस्य प्रबलताया विरोधे भारतीयाया एकताया विचारधारा 'आर्येषु' व्याप्तासीत् । पुष्यमित्रशुङ्गेन ब्राह्मणमन्त्रिणा बौद्धसम्राड् बृहद्रथस्य हत्या साधारणी घटना नासीत् ।

---

१. अयं निबन्धः सारस्वत्याः सुषमायाः २८ वर्षे ३-४ अङ्कयोः प्रकाशितः ।
२. सारस्वत्याः सुषमायाः २९ वर्षे ३ अङ्के प्रकाशितः ।
३. भागवतम्—माहात्म्यम्—अ० ३ ।

पुष्यमित्रशुङ्गकालाद् ( ईशवीयद्वितीयशताब्द्याः पूर्वात् ) विक्रमादित्यकाल-( ईशवीयचतुर्थ-शताब्दी ) पर्यन्तं वैदिकसंस्कृतेः पुनरुत्थानयुगं कथ्यते । तत्कालीनाः शिवोपासका वैष्णवाश्च स्वस्वसङ्घटनमादिवासिनामाक्रामकाणां चानेकसम्प्रदायान् गृहीत्वा कुर्वन्त आसन् । येनास्मात् कालादेव वर्णव्यवस्थायां दुर्व्यवस्थोपस्थिता ।

कर्मप्रधानता लुप्ताऽभवत् । आर्यशासकानामध्यक्षतायां पुराणानां धर्मशास्त्राणां च नवीनानि संस्करणानि समुपगतानि । तेषु तीर्थाध्याया अपि योजिता अभवन् । पद्मपुराणेन 'ब्रह्मा' इति नाम्ना देवस्य अष्टाधिकशतं देवालयानां 'सूची' उपस्थापिता । शैवपुराणानि लिङ्गपूजायाः प्रधानतामवर्णयन् । नैतदेव, किन्तु तानि सम्पूर्णभारतवर्षे प्रधानलिङ्गानां सङ्ख्यां द्वादशज्योतिर्लिङ्गानि द्वादशोपज्योतिर्लिङ्गानि चेति निश्चितां चक्रुः । एषु वाराणस्या विश्वेश्वरः प्रधानो मन्यते स्म ।

सम्भवत आक्रान्तपश्चिमोत्तरसीम्नः पलायिताः पण्डिता वाराणस्यामेव शरणं ग्रहीतुं काले काले आगच्छन्ति स्म । वाराणस्या विद्याकेन्द्रनिर्माणेऽपीदमेव कारणं प्रतीयते । वाराणस्या आकर्षणकारणेषूत्तरवाहिन्या गङ्गातटं प्राचीनराजधानीस्थानञ्च व्यापारस्य प्राचीन-केन्द्रताऽपि मुख्यानि सन्ति । वाराणस्यां प्रधानज्योतिर्लिङ्गस्थापनस्य निदानं पूर्वस्थितं बौद्ध-जैनयोर्ज्योतिकेन्द्रत्वमस्ति । गयास्थानेऽपि बौद्धधर्मरूपिणो गयासुरस्य समाप्तिरपि विष्णु-स्थापनादेव जाता । वैष्णवपुराणेषु शैवपुराणेषु चाष्टाधिकशतं सङ्ख्यानां तत्तत्तीर्थानां तालिका उपस्थापिताः । अस्मिन् कालेऽवताराणां सूची निर्मिता । बुद्धस्य चरित्रस्थलप्रभावेण राम-कृष्णपाण्डवानाञ्च शतशश्चरित्रस्थलानि स्थापितानि । एकक्षत्रियराजकुमारपूजाया उदाहरणं तेषां सम्मुख आसीत् । एवं महापुरुषपूजाया एका नवीना पद्धतिः प्रचलिता ।

महाभारतस्य काले योगसाङ्ख्यवेदान्तपाञ्चरात्रपाशुपताश्च पञ्चधर्माः प्रचलिता आसन् । सौतिः तेषां समन्वयं चकार महाभारते । लिङ्गरूपः शिवः ( ईश्वरः ) सृष्टिकर्त्ता, भर्त्ता, हर्त्ता चेति मन्यते स्म । अस्मिन्नेव स्वीकृते शैवधर्मो रुद्रपर्वतीयशिवपाशुपताश्च विलीनाः । ईश्वरस्य शक्तेस्त्रयो भेदा बभूवुः—ब्रह्मा–विष्णु–महेशश्च । इमेऽपि क्रमशः कर्त्ता–भर्त्ता–हर्त्ता-चेति मन्यन्ते स्म । आकाशदेवता विष्णुः ( सूर्यः ) अधुना पृथिव्याः पालनकर्त्ता इव मन्यते । अस्मिन्नेव वैष्णवधर्मे पाञ्चरात्रवासुदेवनारायणभागवतेत्यादयः प्राचीनतरधर्मा विलीनाः । ब्रह्मा केवलः सृष्टिकर्त्तेति भावनया जनैः त्यक्तः । फलतः शनैः-शनैः ब्रह्मतीर्थानां लोपोऽभवत् । सम्भवतः कृष्णेन इन्द्रदमनाद् गोवर्धनपूजाकारणाद् इन्द्रपूजायामुत्साहहानिर्बभूव । तथा चाह रुद्रो विष्णुं प्रति—

> इन्द्रादिभिर्न मे कार्यं ब्रह्मा मे किं करिष्यति ।
>
> येन केन प्रकारेण प्रजाः पाल्यास्त्वयाऽधुना[1] ॥

कालान्तर इन्द्रतीर्थानि यान्यासन्, तेषामपि लोपोऽभवत् । तानि केवलमितिहास-पुराणयोः सामग्रीनिर्विशेषाणि बभूवुः । वैदिककालादेव वरुणो जलदेवताऽऽसीत्, अद्यापि स जलदेवतैव च वर्तते ।

---

१. स्कन्दपुराणम्—९।१९७ ।

देवानां देवीनाञ्चानेके समानार्थाः शब्दा वेदेष्वेव प्राप्नुवन्ति । यथा—रुद्रः, शिवः, शङ्करः, भवः, सर्वश्च । देव्याः पर्यायवाचिनः—रुद्राणिः, भवानी, सर्वाणीत्यादयः । धर्मशास्त्रेषु देवानां समानार्थिनां नामभिस्तर्पणमपि दृश्यते ।

महाभारतीयतीर्थानां विकासे कथितं यद् देव्या एकमेव स्वरूपं 'रुद्रपत्नी' प्राप्यते । कालान्तरे सत्त्वरजस्तमोगुणैः सरस्वती-लक्ष्मी-कालीनां कल्पनाऽभवत् । पुराणेषु देवीदेवानां च सहस्राणि पर्यायवाचीनि नामानि लभ्यन्ते । तथैव तीर्थेष्वनेकनामभिर्देवता अपि प्रतिष्ठापिताः । शिवस्य गणानां शतानि नामानि पुराणेषु प्राप्यन्ते—कर्णघण्टः, शङ्कुकर्णः, वीरभद्रः, भैरवा इत्यादयः । गणेशानामपि शतानि वर्णितानि—साक्षीविनायकः, ढुण्डराजादयः । देव्याऽसङ्ख्यानि नामानि रूपाणि च पुराणेषु वर्णितानि सन्ति । तान्त्रिकदेवीनां ताराललितात्रिपुरेश्वरीणां तीर्थान्यपि सन्ति । सप्तपुरी, सप्तबदरी, पञ्चकेदारः, पञ्चकाशी, पञ्चतीर्थी च सामूहिकयात्राणां वर्णिताः । तीर्थक्षेत्रपरिक्रमायाः प्रथाऽपि प्रचलिताऽऽसीत् । यथा वाराणस्यां पञ्चक्रोशी मथुरा-अयोध्ययोरपि परिक्रमा ।

**तीर्थेषु लिङ्गपूजाया अतिवृद्धिः**

लिङ्गपूजाग्रहणपूर्वं महाभारतीयप्राचीनतीर्थतालिकासु रुद्रशिवस्थलानि हि शैवतीर्थान्यासन्; किन्तु अधिकसङ्ख्यायां लिङ्गानि स्थापितान्यासन् । आरम्भे देवर्षिमहापुरुषनक्षत्रपञ्चतत्त्वनदीनां नामसु 'ईश्वरः' शब्दं योजयित्वा तेषां नामकरणमभवत् । यथा गङ्गेश्वरनर्मदेश्वरेन्द्रेश्वरब्रह्मेश्वरात्रीश्वरबुधेश्वरादयः । पुनः कालान्तरेण वस्तुव्यक्तिगतनामगुणादिषु ईश्वरशब्दं योजयित्वा लिङ्गानां स्थापनं भवितुमारभत, यथा—रत्नेश्वरः, माणिक्येश्वरः, ज्ञानेश्वरः, आनन्देश्वरः, मृत्युञ्जयेश्वरः, शिवशरणेश्वरादयः ।

**हनुमतः पूजा**

पार्जिटरमहोदयो हनुमत्पूजायाः सम्बन्धं द्रविड़संस्कृत्या सह स्थापितवान् । रामायणाध्ययनेन ज्ञायते यत् सुग्रीवस्य राज्यं किष्किन्धावनं ( ऋष्यमूकपर्वतः ) द्रविडक्षेत्र एव वर्णितमस्ति । तस्य मते हनुमच्छब्दस्य मूलं 'अणमन्ति' शब्दो भवितुमर्हति, यतस्तामिलभाषायाः शब्दोऽस्ति, यस्यार्थः 'नरवानरः' इति वर्तते । सर्वप्रथमं ब्रह्मपुराणे गोदावरी तटे अणिमन्ततीर्थमपि प्राप्यते । अनेनापि द्राविडसंस्कृत्याः पुष्टिर्भवति । हनुमतः पूजाऽपि रामस्य मूर्त्तेः पूजायाः पूर्वं हि आर्येतरसंस्कृती प्राप्यते । आधुनिकसभ्यतायां 'हनूमान्' कलियुगस्य प्रत्यक्षदेवतेव पूज्यते । सम्पूर्णभारतेऽस्य पूजाप्रचलनं दृश्यते ।

**तीर्थपुरोहितः**

यज्ञपुरोहितानां जीविकायाः साधनानि जनसेवा, शिल्पकला, व्यापरश्चासन् । किन्तु कालान्तरेण तीर्थक्षेत्रेषु तेषां निवासेन ते तीर्थदानद्रव्याणां लेखा यजमानानां नामभिः दधाना आसन् । ईशवीयचतुर्थशताब्द्यां 'फाह्यान' नामा चीनयात्री गयनगरं जनहीनमपश्यत्, किन्तु सप्तमशताब्द्यां 'ह्वेनसाङ्ग' इति चीनयात्री गयनगरं 'पण्डैः' उषितं प्राप्तवान् ।

**एकनाम्नाऽनेक तीर्थानि**

तीर्थानामनियमितस्थापनेन तेषां परिचये बाधा उपस्थिता । यथा कपालमोचनं तीर्थमुत्तरदिशि कश्मीरे हिमालये च, दक्षिणभारते रामेश्वरे, पूर्वदिशि वाराणस्यां जगन्नाथपुर्याञ्च, पश्चिमे नर्मदायां प्राप्यते ।

**तीर्थानामामन्त्रणम्**

एकस्य प्राचीनतीर्थलाभस्य सौविध्येनान्याल्पप्रसिद्धिस्थान आमन्त्रणं दृश्यते । यथा—हिमालयस्य तीर्थानि बदरीनारायणकेदारमन्दाकिनीगङ्गादीनि अनेकेषु नगरेषु स्थितानि सन्ति, वाराणस्यामपि विद्यन्ते । एकनगरस्य तीर्थानि अन्यनगरेषु स्थापितानि भवन्ति, यथा—अवन्तिकापुरे स्थितानि महाकाल-वृद्धकाल आदीनि वाराणस्यामपि विराजन्ते । प्रयाग-मथुरा-रामेश्वरादीन्यपि वाराणस्यामन्यनगरेष्वपि वर्तमानानि सन्ति । इत्थमेव समतलक्षेत्रस्थितानि रामकृष्णयोर्महाभारतीयतीर्थानि च हिमालयाधिरूढानि ।

**तीर्थेष्ववान्तरतीर्थानि**

तीर्थेषु सम्प्रदायतीर्थानां स्थापनाऽऽरब्धा । शैववैष्णवशाक्तगाणपत्यसौरादीनां तीर्थ-स्थापनं क्षेत्रेति शब्देन व्यपदिश्यते । पराजितसम्प्रदायस्य भग्नावशेषेषु सम्प्रदायेतराणां देवा-यतनानि निर्मितानि । देवप्रतिमास्थापनेनैव तेषां प्रतीकानामाधारेण तीर्थपरिचयोऽभवत् । तपोयज्ञस्नानश्राद्धतर्पणस्थानेषु, नदीतटेषु, गौतमादीनामृषीणां महापुरुषाणां च कल्पितेषु चरित्र-स्थलेषु साम्प्रदायिकप्रतीकानां स्थापनाऽभवत् ।

इत्थं वैदिकसाहित्ये यज्ञं कल्मषमोचनस्य सर्वश्रेष्ठसाधनं कथितम् । पापमोचनस्य तत्त्वमेकया सुन्दरोपमया दर्शितम्—यथा सर्पः निर्मोकात्, इषीकः मुञ्जाच्च विमुच्येते, तथैव हवनेन समस्तपापैर्मुच्यते जनः ।

महाभारते तीर्थसूचिषु तीर्थयात्राफलमश्वमेधादियज्ञानां फलमिवोक्तम् । स्वर्गविष्णु-रुद्रर्षिलोकानां प्राप्तिरप्युक्ता ।

पुराणेष्वपि तेषां फलानामुल्लेखास्तु प्राप्यत एव । ततोऽपि अधिकतरं वामनवाराहे-त्यादिषु पुराणेषु विभिन्नद्वीपेषु जन्मग्रहणं धनपुत्रविद्यासुवर्णादीनां लौकिकपदार्थानां वासनानां च प्राप्तिः फलं वर्णितं प्राप्यते । केषुचित् पुराणेष्वेकं लोकं गत्वा ततः साम्प्रदायिकदेवलोक-गमनमपि कथितम् ।

**तीर्थेषु कल्पवासो मृत्युश्च**

तीर्थेषु संयमेनानुष्ठानं तत्र उषित्वा मृत्युलाभः स्वर्गसाधनं कथितम् । तैत्तिरीयब्राह्मणे ( २।४।३।१ ) सरस्वतीनदी मृत्युक्षेत्रं कथितास्ति । तीर्थेषु पर्वतश्रेणीभ्यः शिलासु कूर्द-नेनाग्नौ जले च स्वेच्छया प्रवेशनेन च जातेन मृत्युना स्वर्गप्राप्तिफलम् उक्तमस्ति । धर्मशास्त्रे-ष्वपीदृशं विधानं प्राप्यते ।

**उपसम्प्रदायानां तीर्थानि**

सम्प्रदायानामनेकस्कन्धा आचार्याणां मतभेदैः स्थापिताः । शङ्कररामानुजवल्लभ-चैतन्यकबीरनानकराधास्वामीत्यादीनामनेक उपसम्प्रदाया वर्धमानाः सन्ति । इत्थं नवानि नवानि तीर्थानि वर्धमानानि सन्ति ।



# न्यायशास्त्रे प्रत्यक्षं प्रमाणम्

डा० नलिनी शुक्ला
ए० ए० डी० एम० एम० कालेज, कानपुर

न्यायशास्त्रे चत्वारि प्रमाणानि स्वीकृतानि। यथोक्तं न्यायसूत्रे—"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" (न्या० सू० १।१।३)। तत्र 'साक्षात्कारिप्रमाकरणम्' प्रमाणं प्रत्यक्षमित्यभिधीयते। तद्विग्रहस्तु, अक्षमक्षं प्रति इति प्रत्यक्षम्। अक्षशब्दोऽत्र ज्ञानेन्द्रियपरः। अतः तत्तज्ज्ञानेन्द्रियं प्रति नियतं तत्तत् प्रत्यक्षं भवति। ततश्च चाक्षुषत्वादिभेदेन अनेकविधम्। साक्षात्कारश्च इद्रियार्थसंयोगः, तत एव प्रमोत्पद्यते। ततश्च पदार्थः प्रमीयते इति। प्रत्यक्षमपि द्विविधं भवति। एकं सविकल्पकम्, अपरं निर्विकल्पकमिति। तस्याः साक्षात्कारिण्याः प्रमायाः करणं त्रिविधं भवति—कदाचिदिन्द्रियम्, कदाचिदिन्द्रियार्थसम्बन्धः, कदाचिच्च ज्ञानम्।

अत्रोक्तभेदत्रये यदानिर्विकल्पकं ज्ञानं फलं तदेन्द्रियमेव केवलं करणं भवति। ज्ञानस्यायमस्ति नियमः। प्रत्यक्षेच्छया प्रथममात्मा मनसा युज्यते, मनस्तदिन्द्रियेण, इन्द्रियं च पदार्थेन, ततश्च प्रथमं निर्विकल्पकं ज्ञानं जन्यते। तच्चेदं किञ्चिदित्याकारकं नामजात्यादियोजनारहितं भवति। तस्य निर्विकल्पकस्य ज्ञानस्येन्द्रियमेव करणं छिदायाः परशुरिव।

पूर्वमुक्तमादाविन्द्रियेण पदार्थग्रहे निर्विकल्पकम् अर्थात् विशेषणविशेष्याद्यनवगाहि, इदं किञ्चिद् इत्याकारकमेव ज्ञानं जायते। तदा केवलमिन्द्रियमेव करणं भवति, इत्यपि प्रागुक्तम्। अनन्तरं च यदा विशिष्यं ज्ञातुमुपक्रमते तदा इन्द्रियस्यार्थेन विशेषसम्बन्धे सति विशेषणविशेष्यादिरूपं यज्ज्ञानमुत्पद्यते 'अयं घटोऽयं पटः' इत्याकारकम्, तदेन्द्रियार्थसन्निकर्षः करणं भवति। इन्द्रियेणार्थसम्बन्धे पूर्वमुक्तं निर्विकल्पकज्ञानमिन्द्रियव्यापाररूपतामावहति, तच्च सविकल्पकज्ञानस्य, अवान्तरव्यापाररूपम् अर्थादाभ्यन्तरव्यापाररूपमस्ति। सविकल्पकज्ञानं तस्य फलं भवति।

इन्द्रियमिन्द्रियार्थसन्निकर्षं च करणमुक्त्वा ज्ञानस्यार्थाद् निर्विकल्पकज्ञानस्य करणत्वमुच्यते। तथा हि—इन्द्रियार्थसन्निकर्षजन्यपदार्थबोधे तात्त्विकविचार उत्पद्यते। अर्थाद इन्द्रियगोचरे पदार्थे किं वास्तविकं किमवास्तविकमिति। यद्वास्तविकं तदेवात्र ग्राह्यम्, यच्चावास्तविकं तदुपेक्षणीयम्, त्याज्यं वेत्यादिरूपेण पूर्वज्ञातपदार्थे हानोपादानादिबुद्धयो जायन्ते, तदा ज्ञानमेव करणं भवति। तत्र च सविकल्पकज्ञानमवान्तरव्यापारो भवति। सविकल्पकज्ञानस्य च फलं तदा हानादिबुद्धय एव भवन्ति।

अवान्तरव्यापारस्य लक्षणम्—"तज्जन्यः, तज्जन्यजनकोऽवान्तरव्यापारः" इति। यथा कुठारदारुसंयोग आदौ कुठारजन्यो भवति। अर्थात् कुठारः प्रथमं दारुणि स्वं संयुनक्ति। ततश्च छिदा जायते अर्थात् दारुभेदनं भवति। यच्च कुठारदारुसंयोगस्य फलम्। तस्मिन् फले प्राथमिकः कुठारदारुसंयोगादिवान्तरव्यापारो भवति। स चावान्तरव्यापारतज्जन्यः (=कुठारजन्यः), तेन जन्या या छिदा तस्या जनको भवति।

अस्मिन्विषये मतभेदोप्याचार्याणां दृश्यते, यथा तर्कभाषाया अस्मित् वाक्ये लक्ष्यते—"सविकल्पकादीनामपीन्द्रियमेव करणम्"। अथ च—"यावन्ति त्वान्तरालिकानि सन्निकर्षादीनि तानि सर्वाणि, अवान्तरव्यापार इति", अर्थाद् वस्तुसाक्षात्काराय प्रसृतमिन्द्रियम्—यावत्पूर्णं-वस्तुसाक्षात्कारं यद्यदनुभवति यद्यत्करोति, यद्यद्ज्ञानमुपपादयति तत्तत्सर्वमेवावान्तरव्यापार-पदेन व्यपदेष्टुं शक्यत इति।

अत एतेन सिद्धचति यत् प्रत्यक्षविषये द्विविधं मतं प्रचलितमासीत्। आद्यं सारं प्रत्यक्षं त्रिविधकरणान्वितम्। द्वितीयम् एकविधमेव। संक्षेपेण त्रिविधकरणव्यापारादीनां वक्ष्य-माणं स्वरूपम् :—

| करणम् | अवान्तरव्यापारः | फलम् |
|---|---|---|
| (क) इन्द्रियम् | इन्द्रियार्थसन्निकर्षः | निर्विकल्पकप्रमा |
| (ख) इन्द्रियार्थसन्निकर्षः | निर्विकल्पकज्ञानम् | सविकल्पकप्रमा |
| (ग) निर्विकल्पकज्ञानम् | सविकल्पकज्ञानम् | हानोपादानोपेक्षाबुद्धिः |

उपर्युक्तदिशा त्रिविधकरणस्वीकरणं विहाय केचन विद्वांसः त्रिविधां प्रत्यक्षप्रमां मन्वाना अपि न तस्य त्रिविधकरणत्वं मन्वते। स्यान्मतभेदस्याधारः कारणस्य स्वरूपविषयकमतभेद एव। प्रथममतानुसारेण यस्य व्यापारस्यानन्तरमविलम्बेन फलोत्पत्तिर्जायते, तदेव करणम्। यथोक्तम्—'फलायोगव्यवच्छिन्नं करणम्' तदनुसारं निर्विकल्पकप्रमाया उत्पत्तौ त्विन्द्रियं करणतामर्हति, न पुनः सविकल्पकप्रमोत्पत्तौ हानोपादानोपेक्षाबुद्धेरुत्पत्तौ वा। तद्यथा सविकल्पकप्रमाफले स्वीकृते इन्द्रियेणेन्द्रियार्थसन्निकर्षो निर्विकल्पकज्ञानं चेति कार्यद्वयसम्पादना-नन्तरमेव सविकल्पकज्ञानोत्पत्तिर्जायते। इन्द्रियसद्भावे तद्व्यापारसद्भावे वा नोत्पद्यतेफल-मचिरेणैव। अत इन्द्रियं न सविकल्पकप्रमायाः कारणतामर्हति। ततश्चेन्द्रियार्थसन्निकर्षमेवास्य करणमित्यवधेयम्। एवमेव हानोपादानादिबुद्धिविषयेऽपि ज्ञेयम्। तदित्थमुपर्युक्तं त्रिविधं करणं प्रत्यक्षप्रमायाः।

अपरस्मिन्मते—'प्रतिगतम् अक्षं प्रत्यक्षम्' इति व्युत्पत्तिनयेनेन्द्रियमेव प्रत्यक्षस्यार्थः प्रधानतया। यथोक्तं वात्स्यायनभाष्ये—"अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षः, ज्ञानं वा" (न्या० भा०—१।१।३)।

अत इन्द्रियमेव त्रिविधायाः प्रत्यक्षप्रमायाः करणं मान्यम्। अस्मिन्मते—"व्यापार-वत्कारणं करणम्" इति करणलक्षणमभिहितम्। करणफलयोर्मध्यवर्ति यत् किञ्चित् तत्सर्वमेवावान्तरव्यापारत्वेन स्वीकृतं चास्ति। एतेनेन्द्रियसत्तायामविलम्बेन सविकल्पक-प्रमाद्यनुत्पत्तिकारणात्, इन्द्रियकरणत्वविषयिणी शङ्काऽप्यपास्ता। अतस्त्रिविधायां प्रत्यक्ष-प्रमायामिन्द्रियमेव करणम्, सर्वमन्यदवान्तरव्यापाररूपमेव। तद्यथा—

| फलम् (प्रमा) | अवान्तरो व्यापारः | करणम् |
|---|---|---|
| (१) निर्विकल्पकप्रमा | इन्द्रियार्थसन्निकर्षः | इन्द्रियम् |
| (२) सविकल्पकप्रमा | (क) इन्द्रियार्थसन्निकर्षः (ख) निर्विकल्पकज्ञानम् | इन्द्रियम् |
| (३) हानोपादानोपेक्षाबुद्धिः | (क) ,, (ख) ,, (ग) सविकल्पकज्ञानम् | इन्द्रियम् |

यद्व्यापारलक्षणं तु—"तज्जन्यस्तज्जन्यजनको व्यापारः" इति तत्कथं सविकल्पक-प्रमाकरणमिन्द्रियम् ? तत्सत्त्वे इन्द्रियार्थसन्निकर्षे निर्विकल्पकज्ञानेऽप्युभयत्र एव व्यापारलक्षणमेव न घटिष्यति, इति चेत्, मैवम्—अत्र सन्निकर्षस्यापीन्द्रियाङ्गीभूतत्वात्, स्वाङ्गस्य चाव्यवधायकत्वादिति न दोषलेशः। एवमेव हानोपादानोपेक्षाबुद्धिविषयेऽपीन्द्रियस्य करणत्वेऽपि न कदाचिद्धानिः। 'फलायोगव्यवच्छिन्नं करणम्' इति करणलक्षणे स्वीकृतेऽपि—'स्वाङ्गमव्यवधायकम्' इति नयेनेन्द्रियस्य करणत्वं मन्तुं शक्यते।

**षड्विधः सन्निकर्षः**

प्रत्यक्षे इन्द्रियार्थयोर्यः सन्निकर्षं उक्तः स षड्विध एव। तेषां नामानि यथा—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेष्य-विशेषणभावश्चेति।

**संयोगः**

तत्र प्रथमोद्दिष्टस्य स्पष्टीकरणं यथा—इन्द्रियेण द्रव्यग्रहे इन्द्रियद्रव्ययोः प्रथमं संयोगः सम्बन्धो भवति, इन्द्रियद्रव्ययोरयुतसिद्धसम्बन्धाभावात्। अयुतसिद्धलक्षणं तु—'ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेव तिष्ठति तावयुतसिद्धौ'। यथा—गुणगुणिनौ क्रियाक्रियावन्तौ। उदाहणार्थं—घटज्ञानकाले चक्षुरिन्द्रियं घटोऽर्थो भवति, एवमेव सर्वत्रेन्द्रियविषये ज्ञेयम्। उपलक्षणं घटचक्षुषोरिदमुदाहरणम्, बाह्येन्द्रियविषयकमेव चैतत् सकलबाह्येन्द्रियाणाम्। अन्तरिन्द्रियेण मनसा द्रव्यग्रहे मन इन्द्रियमात्मा च द्रव्यं भवति। अनयोः सन्निकर्षोऽपि संयोग एव भवति।

**संयुक्तसमवायः सन्निकर्षः**

यदा च पूर्वोक्तेनैव चक्षुरिन्द्रियेण घटरूपं गृह्यते, तदा संयुक्तसमवायसन्निकर्षो भवति। यतश्चक्षुषा घटसंयोगे, घटे च रूपस्य समवायात्। अतः प्रथमं चक्षुषा घटे च घटरूपं समवेतं वर्तते गुणगुणिनोस्समवायात्। अतोऽत्र घटरूपग्रहे संयुक्तसमवायसन्निकर्षो भवति। एवमात्मनि विद्यमानानां सुखादीनां ग्रहे प्रथमं मन आत्मानं संयुनक्ति, आत्मनि च सुखादीनि समवेतानि भवन्ति। अतस्तत्रापि संयुक्तसमवाय एव सन्निकर्षो भवति। केषुचिन्मते घटादिगतपरिमाणादिग्रहे चतुष्टयसन्निकर्षोऽप्यधिकं कारणमिष्यते। यतो दूरस्थद्रव्ये इन्द्रियेन यथार्थपरिमाणग्रहो न भवति। सन्निकर्षचतुष्टयी यथा—

(१) इन्द्रियावयवैरर्थावयविनाम्।
(२) इन्द्रियावयविनामर्थावयवानाम्।
(३) इन्द्रियावयवैरर्थावयवानाम्।
(४) अर्थावयविनामिन्द्रियावयविनां सन्निकर्षश्चेति।

षड्ज्ञानेन्द्रियाणि भवन्ति। मनस्तत्राभ्यन्तरमिन्द्रियम्। तस्य लक्षणं शास्त्रे—'अणुपरिमाणं मनः' इति। अणुलक्षणं तु—"अणुर्द्वौ परमाणू स्यात्" इतीत्थं मनसोऽपि परमाणद्वयजन्यत्वेन, अवयवद्वयं सिद्ध्यति। इत्थमन्यज्ञानेन्द्रियेष्वपि तु अनेके अवयवा भवन्ति। एकस्मिन्नेकस्मिन्करे चानेकेऽवयवा जायन्ते। अतः सहस्ररश्मौ सहस्रपदमप्यसङ्ख्यातपरमेव।

तथा च तज्जन्यत्वेन चक्षुषोऽप्यसङ्ख्याताः करा भवन्ति । तेषु करेष्वपि असङ्ख्याता अवयवा भवन्ति । अतः स्वावयवानां चक्षुर्यथाऽवयवि तथैव तदवयवा अप्यवयविनो भवन्ति । मनस्तु सर्वज्ञानेन्द्रियेभ्यो दूरगामि दूरग्राहि च । तदपेक्षया न्यूनदूरग्राहि श्रोत्रम् । तदपेक्षया च न्यूनदूरग्राहि च घ्राणम् । यथा चक्षुषि अवयवा उक्ताः, अवयविनश्चोक्ताः, तथैवान्यज्ञानेन्द्रियेष्ववयवावयविनो ज्ञेयाः । यथा कर्मेन्द्रियेषु हस्तादिषु अवयविनः शरीरस्यावयवा हस्तादयः । हस्तसंज्ञा च प्रगण्डादङ्गुलिपर्यन्तभागस्य भवति । एवंभूते हस्ते, प्रगण्डः, मणिबन्धः, कर्पूरः, अङ्गुल्यादयश्चावयवा भवन्ति । तेष्ववयवेष्वप्यवयवा भवन्त्येव । एकस्यामेव अङ्गुल्यामनेकानि पर्वाणि अवयवा भवन्ति । इत्थं कर्मेन्द्रियेष्विव, उक्तज्ञानेन्द्रियेष्वपि, अवयवावयविभाव उक्तः ।

तत्र यदिन्द्रियं पूर्णं पूर्वपदार्थमनुभवति, तदा तेनेन्द्रियेण तस्य पदार्थस्य पूर्वसाक्षात्कारो भवति । अवयवैरवयवावयवैर्वा साक्षात्कृते पदार्थे तावत्येव प्रत्यक्षस्य न्यूनता जायते तदेव स्पष्टयितुं सन्निकर्षचतुष्टये चत्वारो भेदा भाषिताः । यथा—चक्षुषा पूर्णो घटो दृष्टश्चेत् तदा पूर्णघटस्य साक्षात्कारः, चक्षुरेकदेशेन दृष्टश्चेत्तदा एकदेशस्यैव साक्षात्कारः । अवयविनश्चक्षुषो योऽवयवः, तस्याप्यवयवानां सत्वादवयवोऽप्यवयवी भवति । ततश्च यदा अवयव्यवयव्यवयवेन दृष्टश्चेत् तदा ततोऽपि न्यूनसाक्षात्कारो भवति । एवं श्रोत्रेण शब्दादिग्रहे घ्राणेन गन्धादिग्रहे त्वचा स्पर्शादिग्रहे च पूर्णात्पूर्णतदंशांशादिरूपेण तत्तद्विषयाणां तत्तदर्थानाञ्च साक्षात्कारो भवति ज्ञेयम् ।

**संयुक्तसमवेतसमवायः सन्निकर्षः**

इन्द्रियेण द्रव्यग्रहे संयोगः सन्निकर्षो भवति । द्रव्यगतगुणग्रहे संयुक्तसमवायः सन्निकर्षो भवति । गुणगतगुणत्वादिग्रहे संयुक्तसमवेतसमवायः सन्निकर्षो भवति । इत्येव सार्वत्रक्रमः । तथा चात्र चक्षुषा घटग्रहे संयोगः सन्निकर्षः । घटरूपग्रहे संयुक्तसमवायः सन्निकर्षः । रूपगतरूपत्वग्रहे च संयुक्तसमवेतसमवायः सन्निकर्षो भवति । घटसमवेते रूपे रूपत्वस्य समवायात् ।

**समवायः सन्निकर्षः**

यत्र चेन्द्रियग्राह्यो विषयः प्रथमत एव स्वाश्रये समवेतो भवति, तत्र प्रथममेव समवायसम्बन्धो जायते । यथा शब्द आकाशे समवेतो भवति । तस्य श्रोत्रेन्द्रियेण ग्रहे प्रथमत एव समवायः सम्बन्धो भवति । तद्गतशब्दत्वग्रहे तु समवेतसमवायः सन्निकर्षो भवति, अर्थात् गुणगुणिनोः; क्रियाक्रियावतोः, नित्यद्रव्यविशेषयोश्च प्रथमतः समवाय एव सम्बन्धो भवतीति ज्ञेयम् । समवेतसमवेतग्रहे तु समवेतसमवायः सन्निकर्षो भवति ।

**समवेतसमवायः सन्निकर्षः**

पूर्वोक्तरूपेण श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षो भवति । इदानीं शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्ष उच्यते । यतः श्रोत्रेन्द्रियेण शब्दः समवायसम्बन्धेन तिष्ठति । तत्र शब्दे शब्दत्वं समवायसम्बन्धेन तिष्ठति । अतः श्रोत्रेण तद्ग्रहे समवेतसमवायो भवति ।

**विशेष्यविशेषणभावः**

चक्षुषा घटाभावादिग्रहणे विशेष्यविशेषणभावः सन्निकर्षो भवति । चक्षुस्संयुक्तस्य भूतलस्य घटाभावो विशेषणं भवति, भूतलं च विशेष्यम्, अर्थात् घटाभाववद्भूतलमिति ज्ञानं

जायते। अस्मिन् ज्ञाने घटाभावस्य विशेषणत्वं भूतलस्य च विशेष्यत्वं स्पष्टमेवास्ति। एवमेव मनसा आत्मनि सुखाद्यभावे गृहीतव्ये। सुखाद्यभाववानात्मा इत्याकारके ज्ञाने सुखाद्यभावो विशेषणमात्मा विशेष्यमिति तत्रापि विशेष्यविशेषणभावयोस्सन्निकर्षः। यद्वस्तु येनेन्द्रियेण गृह्यते, तन्निष्ठो गुणः तन्निष्ठा जातिः, तन्निष्ठा क्रिया, तद्भावश्च तेनैवेन्द्रियेण गृह्यते, इति न्यायराद्धान्तात्।

एवं समवायोऽपि विशेष्यविशेषणभावेन सन्निकर्षेण गृह्यते। न्यायनयेनेदमुच्यते, तत्र समवायस्यापि प्रत्यक्षत्वात्। वैशेषिकास्तु—समवायमनुमिन्वन्ति। परं न्यायशास्त्रे समवाय-प्रत्यक्षतास्वीकृता। यथोदाहृतं तर्कभाषायाम्—"चक्षुः सम्बद्धस्य तन्तोर्विशेषणभूतः पटसमवायो गृह्यते, इह तन्तुषु पटसमवाय इति"। अर्थाद् यदा तन्तुभिः पटो निर्मीयते तदा तन्तुसंयोग एव जायमानः पटरूपतां प्रतिपद्यते। स च तन्तुसंयोगः तन्तुषु समवायसम्बन्धेनैव तिष्ठति। समवायश्च नित्यसम्बन्धः। अत एव तन्तुसंयोगनाशे पटनाशो दृष्यते। स च तन्तुसंयोगश्चक्षुषा प्रत्यक्षेण गृह्यते। अतस्तत्र तिष्ठन् संयोगस्य समवायोऽपि तन्तुषु प्रत्यक्षेणैव गृह्यते इति सिद्धम्। एष संयोगगतस्समवाय उक्तः। एवमेव संयुक्तसमवायस्थलेऽपि समवायः समवायेनेति तिष्ठति, तथैव समवायेऽपि विशेष्यविशेषणभावद्वारैव स सन्निकर्षो गृह्यते। अभावग्रहस्तु पञ्चसु सन्निकर्षेषु अन्यतमेन केनापि क्वचित् भवतीति विशेषः।

तर्कभाषायां षट्सन्निकर्षानुपसंहरन् वक्ष्यमाणौ संग्रहश्लोकौवुपन्यस्तौ—

अक्षजा प्रमितिर्द्वेधा सविकल्पाऽविकल्पिका।
करणं त्रिविधं तस्याः सन्निकर्षश्च षड्विधः॥
घट-तन्नील-नीलत्व-शब्द-शब्दत्व-जातयः।
अभावसमवायौ च ग्राह्याः सम्बन्धषट्कतः॥

अर्थाद् इन्द्रियार्थसन्निकर्षजन्या प्रमितिः (=प्रामाण्यम्) द्विप्रकारा। एका सविकल्पिका, अपरा अविकल्पका अर्थाद् निर्विकल्पका। तस्याः प्रमितेः करणं (साधनम्) त्रिप्रकारकम्, सन्निकर्षश्च तस्याः षड्विधो भवति। सम्बन्धषट्कतः, घटः तद्गतनीलादिरूपम्, तद्गता नीलत्वादिजातयः। एवं शब्दः, शब्दत्वं च, अभावः, समवायश्चैते सर्वे पूर्वोक्तषड्विध-सन्निकर्षैरेव ग्राह्याः।

न्यायमते निर्विकल्पकसविकल्पकभेदेन द्विविधा साक्षात्कारिणी प्रमा स्वीकृता। तत्र बौद्धाः सविकल्पकं प्रत्यक्षमेव न स्वीकुर्वन्ति। तेषां मते निर्विकल्पकज्ञानमेव प्रत्यक्षविषयम्, यतो निर्विकल्पकज्ञानमेव स्वलक्षणं ज्ञानं भवति। एवं सद्वस्तुनिश्चितं यथार्थमित्यर्थः। तस्य ज्ञानं स्वलक्षणं ज्ञानं तदेव सत्यं प्रत्यक्षम्। यथा जगति स्वलक्षणं केवलमात्मा तदेव सत्यं वस्तु, तस्य प्रत्यक्षमपि सत्यम्, सत्यस्य प्रत्यक्षे तत्प्रत्यक्षस्यापि सत्यत्वात्। सविकल्पकं तु विशेषणविशेषाद्यवगाहिज्ञानं वस्तुतः सत्पदार्थं न प्रकाशयति, अपितु सामान्यमेव पदार्थं प्रकाशयति। सामान्यस्य च कार्यकारित्वाभावात् तत्प्रत्यक्षस्य न सत्यप्रत्यक्षत्वम्। अतः सविकल्पकज्ञानं प्रत्यक्षं नापि त्वनुमानादिग्राह्यमेवेति बौद्धादीनां बुद्धिः।

बौद्धानामित्येवाशयः तर्कभाषायामित्थमुक्तः—"ननु निर्विकल्पकं परमार्थतः स्वलक्षण-विषयं भवतु प्रत्यक्षम्। सविकल्पकं तु शब्दलिङ्गवदनुगताकारावगाहित्वात् सामान्यविषयं कथं प्रत्यक्षमर्थजस्यैव प्रत्यक्षत्वात्"। अर्थाद् याथार्थ्येन स्वकार्यकारिस्वरूपबोधनात् स्वलक्षणपदेन-गृह्यमानत्वाच्च—(स्वलक्षणं तु स्वं सत्यं स्वस्वरूपं लक्षयतीति स्वलक्षणम्) तज्ज्ञानं निर्विकल्पक एव पदार्थे भवतीति। सविकल्पकं ज्ञानं तु शब्दलिङ्गवद् = (शब्दो लिङ्गहेतुर्यत्र तत् शब्दलिङ्गं तद्वत्)। एवञ्च सविकल्पकज्ञानं शब्दलिङ्गेन विज्ञातस्यैव पदार्थस्य भवति। लिङ्गेन लिङ्गिज्ञानं त्वनुमानप्रकार एव न प्रत्यक्षम्। अतः सविकल्पकज्ञानं प्रत्यक्षं न भवति, अपि तु अनुमानमेव। अतस्तज्ज्ञानमेव भवति अर्थाद् अनुगताकारावगाहि यद्यज्ज्ञानं भवति, तत्तत् सामान्यमेव भवति। सामान्यं तु जातिरेव, आकृतिग्रहणजातिरिति लक्षणात्। आकृत्या पदार्थाकारेण गृह्यते या सा आकृतिग्रहणा, इति सामान्यलक्षणात्। सामान्येन सामान्यपदार्थस्यैव ज्ञानं भवति, विशेषस्य च ज्ञानमनुमानेनैव भवति। यथा घटत्वेन सामान्येन सामान्य-घटानां ज्ञाने जातेऽपि कार्यकरणाय एकस्य घटस्य ज्ञानावश्यकत्वे एकस्मिन् घटे अयमपि घटो घटत्वसामान्यवत्वाद् इत्यनुमानेनैव भवति।

इत्थं समेषां सविकल्पकज्ञानानां सामान्यज्ञाने जातेऽपि विशेषज्ञानायानुमानमेव शरणी-करणीयम्। अतः सविकल्पकज्ञानं न प्रत्यक्षमिति। परमार्थतः सत एवार्थस्य प्रत्यक्षज्ञान-विषयत्वात्। तच्च निर्विकल्पके एव सम्भवति न पुनः सविकल्पके, स्वलक्षणं तु ज्ञानं परमार्थतः सदेव भवति। न तु सामान्यविषयकं ज्ञानं परमार्थतः सद्भवतीति ज्ञेयम्। प्रामाण्येन निरस्तो विधिभावो यस्य तस्य सविकल्पकज्ञानस्यापोहेनान्यव्यावृत्यात्मनः (अन्यवस्तु-विवर्जनरूपस्य) तुच्छत्वाद् इति बौद्धो बुद्धिः।

परं नैयायिका न तन्मतं मन्वते, नैयायिकानां नये सामान्यस्यार्थस्यापि वास्तविकत्वात् = स्वलक्षणत्वादिति यावत्। अतः न्यायमते निर्विकल्पकसविकल्पकोभयज्ञानानां प्रत्यक्षविषयता साधिता। अन्येष्वपिदर्शनेषु निर्विकल्पिका सविकल्पिका च द्विविधा प्रत्यक्षप्रमा स्वीकृता। वैयाकरणानां नये तु निर्विकल्पिका प्रमा सम्भवत्येव न। यथोक्तं सुविख्यातवैय्याकरणेन भर्तृहरिणा[1]—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते॥

परं पूर्वोक्तरीत्या सविकल्पकस्येव निर्विकल्पकस्यापि शब्दवेद्यत्वे सिद्धे, उभयविधज्ञाना-नामेतेन प्रामाण्येन प्रत्यक्षविषयत्वसिद्धिरिति दिक्।

---

१. वाक्यपदीयम्—१।१।



# नैष्ठिकीचिकित्साविमर्शः

डॉ० विद्याधरशास्त्री कविराजः,
उपाचार्यः, आयुर्वेदमहाविद्यालये,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

चिकित्सा हि नाम व्याधिहरणी क्रिया। 'किद रोगापनयने' धातुः। केतुं व्याधिप्रतीकारं कर्तुमिच्छतीति चिकित्सति, चिकित्सतीति चिकित्सा[1]। चेतः पीडा [2]चाधिरुच्यते, यत्र च विविधा आधयो भवन्ति, तत्र व्याधिरित्यवगन्तव्यम्। व्याधिरामयो गद आतङ्को यक्ष्मा ज्वरो विकारो रोग इत्यनर्थान्तरम्[3]। इह च नैष्ठिकीचिकित्साप्रसङ्गे द्विविधा एव व्याधयोऽभिधानार्हा अवधेया भवन्ति। राजसास्तामसाश्चेति, न तु "आग्नेयसौम्यवायव्यास्त्रिविधविकल्पा व्याधयः"। रजस्तमसी च मानसदोषावुद्दिष्टौ[4], तौ च प्रज्ञापराधवशादाधिजनकौ। तथाहि व्याधिपदेन मानसी व्यथाऽत्राभिप्रेता, यत्प्रतीकारश्च ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिर्भवति[5]। सा च व्याधिप्रतीकारसरणिः सत्त्वावजयः चिकित्सापदवाच्या। एवञ्च शाश्वतसुखावाप्तिरूपकार्यफलोपलब्धौ चिकित्सैषा पर्यवस्यति[6]। एवमेव चिकित्सामभिलक्ष्यायमायुर्वेदोऽनन्तपार इत्याख्यातः[7]।

---

१. चतुर्णां भिषगादीनां शस्तानां धातुवैकृते।
प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते॥ ( चरक० सूत्र० ९।५ )

२. बन्धकं व्यसनं चेतः पीडाधिष्ठानमाधयः। ( अमर० ३।३।९७ )

३. चरक० निदान० १।५।

४. मानसः पुनरुद्दिष्टो रजश्च तम एव च। ( चरक० सूत्र० १।५७ )

५. मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः। ( चरक० सूत्र० १।५८ )

६. कार्यफलं सुखावाप्तिः। चरक० विमान० ८।९०, तथा चिकित्सा तु नैष्ठिकी या विनोपधाम्। ( चरक० शा० १।९४ )

७. सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः।
यथावदचिरात्सर्वं बुबुधे तन्मना मुनिः॥ ( चरक० सूत्र० १।२५ )
तत्रैव चक्रपाणिटीका—अनन्तो मोक्ष एव पारमुत्कृष्टं फलं यस्यायुर्वेदस्यासावनन्तपारः, वक्ष्यति हि "चिकित्सा तु नैष्ठिकी या विनोपधामिति" ( च० शा० १।९४ ) इति। अत्र नैष्ठिकी मोक्षसाधनहेतुः।

[1]निष्ठा वात्यन्तदुःखमोक्षरूपा व्यवस्था, तदर्थमङ्गीकृता सत्त्वावजयतीर्थाभ्युपगमनपूर्विका सर्वोपधापरित्यागोदयना मोक्षफला प्रवृत्तिर्हि नैष्ठिकीत्युच्यते। तथा च—तृष्णाशून्या व्यपगत-रागद्वेषाद्यभिनिवेशा मोक्षसाधनहेतुभूता मोक्षफला सत्त्वावजयोत्कृष्टा[2] चिकित्सा हि नैष्ठिकी-चिकित्सा अभिधाना भवति।

चरमोत्कर्ष एव 'निष्ठा' पदार्थः। 'काष्ठा' शब्दश्च निष्ठामन्वेति। तथाहि—"सा काष्ठा सा परा गतिः" (कठोपनिषद् १।३।११) इति। निष्ठाकाष्ठाशब्दार्थौ च सम्भूत्यर्थे पर्यवस्यतः। अमुमेवार्थमभिव्यनक्ति श्लोकोऽयम्—"मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय" (गीता० ७।७) इति। अस्मिन्नेवार्थे सम्भूतिरमृतत्वाय कल्पत इत्याख्यातमुपनिषदि[3]।

महता पुण्यपण्येनयं कायनौर्क्रीतेति नाविदितमस्ति प्रेक्षावताम्। ये च मन्दमतयोऽभि-नन्दन्ति तादात्विकेषु सुखेषु[4], ते हि विनश्वरेषु पुत्र-कलत्र-धन-धान्य-मानादिषु समासक्ता भवन्ति। ते चासम्भूतिमुपासते, भोगसम्भाराहरण एव व्यापृतमनसोऽर्जयन्ति भोगयोनिजन्म-फलप्रदानि [5]कर्माणि। जन्म-मृत्यु-जरा-व्याधिपारावारे च निमज्जन्ति जन्मजन्मान्तराणि यावत्। जगत्कामहैतुकमिति मन्वानास्ते प्रभवन्त्युग्रकर्मणे। दुरापाश्च कामापगां कामोडुपेनैव तितीर्षवस्ते पतन्ति कामवीचिभ्रमिषु नैकवारम्। कामोपभोगाभिनिविष्टा आशापाशबद्धास्ते मनोरथाधिरूढा आत्मानमाढ्यमभिजनवन्तं धनमानान्वितं बलवर्णसुखागारमुद्घोषयन्तोऽहङ्कार-काम-क्रोध-मद-मात्सर्य-राग-द्वेषादिभिराद्रियन्तेऽतितराम्। मिथ्याभिमानास्ते गुरुवृद्धसिद्धाचार्य-चरितानपि गर्हयन्ति। परिणामसुखे गरीयसि कर्मणि तन्मनो व्यथते, तात्कालिकेषु च शब्द-

---

१. (क) निष्ठा निर्वहणे समे। अमर० १।७।१५।
तत्रैव रामाश्रमीटीका—निष्ठेति। नियतं स्थानम्। निष्ठा। आतश्चोपसर्गे (३।३।१०६) इत्यङ्। उपसर्गात्सुनोति (८।३।६५) इति षः। "निष्ठोत्कर्षव्यवस्थयोः"। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचनं व्रते" इति हैमः (२।१०८)।.........'निर्वहणं तु निष्ठा स्त्रीसंहारश्च समापने' इति शब्दार्णवः। समे इति समानार्थे, न तु समानलिङ्गे। शब्दार्णवे लिङ्गभेददर्शनात्। निष्ठा निर्वहणे वर्तते इति योजना।

(ख) निष्ठा निष्पत्तिनाशान्ताः। अमर० ३।३।४१।

२. त्रिविधमौषधमिति—दैवव्यपाश्रयम्, युक्तिव्यपाश्रयं सत्त्वावजयश्च।
... ... .... .... ...सत्त्वावजयः पुनरहितेभ्योऽर्थेभ्यो मनोनिग्रहः॥
(चरक० सूत्र० ११।५४)

३. ...............सम्भूत्याऽमृतमश्नुते। (ईशावास्योपनिषद् म० १४)

४. तदात्वसुखसञ्ज्ञेषु भावेष्वज्ञोऽनुरज्यते। (चरक० सूत्र० २८।५४)

५. अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते। (ईशा० म० १२)

स्पर्श-रूप-रस-गन्धानन्देषु रमन्ते अज्ञानोपहतमतयश्च न समाचरन्ति श्रुतिस्मृतिपुराणानुमोदितानि शाश्वतसुखप्रदानि कर्मजातानि[1]।

बाह्यविषयेष्वेवानन्दातिरेकानुभवगर्वितास्ते पौनःपुन्येन मृत्योर्विश्ववितते पाशेऽभिप्रयान्ति[2]।

आपातरमणीयेषु मणिप्रभामण्डितेषु भौतिकेषु विषयजातेषु समासक्तमनसो भवन्ति। सहजबालिशजना इति नात्र चित्रम्। त्रिकालव्यापिनीमृत्युरज्जुरावेष्टयति जगत्प्रपञ्चमिति दर्शं दर्शमपि न ते विरमन्ति विषयरतिभ्योऽभिपतन्ति च जन्म-मृत्युपाशे भूयोभूयः। समुपस्थिते कीनाशनिकेतनातिथित्वसमयेऽपि तेऽमितः परिपतन्ति भोग्यवस्तुसञ्चयने यथास्वच्छन्दानुरोधेन। आपादतलमस्तकं महति वर्ण-रति-प्रमोदाभिध्यानसम्पारयेऽनुप्रविष्टा विचिकित्सन्ति शाश्वतेऽमृतपदाभिधाने निर्वाणे।

वस्तुतस्तु देहिनां गतयो भिन्नपथा भवन्ति। नेयं मानवी काया पूर्वजन्मार्जितकर्मफलोपभोगायैव केवलं कल्पते, अपि तु महत्तममस्ति साधनमेतन्महते कल्याणाय। मानवोऽनुष्ठातुमर्हति तथाविधमाध्यात्मिकं कर्म, यत्कृत्वाऽऽत्यन्तिकं सुखमन्वेतुमर्हो भवेन्नाम। द्विविधं हि सुखसाधनमाम्नातं शास्त्रेषु—

( १ ) एकं श्रेयः।
( २ ) अपरञ्च प्रेय इति।

श्रेयःपदेन विरजः शान्तं परमक्षरं ब्रह्मभूतं पदमधिगन्तुमुद्यमोऽभिधीयते। प्रेयःपदेन स्त्री-पुत्र-मित्र-धन-धान्य-मान-यशांस्यैहलौकिकानि स्वर्ग्याणि च सुखोपभोगवस्तून्यवाप्तुमुपायोऽवगम्यते। तावुभावपि स्वस्वमर्यादानुसारं पुरुषमध्याक्रान्तुं यततः। बाहुल्येन च जना अनवबुद्धयाथार्थ्याः प्रत्यक्षोपभोगसुलभेषु सांसारिकेषु विषयेषु रतिमादधते, प्रयतन्ते चाहर्निशं नवनवशब्द-स्पर्श-रूपादिसंश्लेषसुखाय, व्रजन्ति चागाधे विषयपारावारपयसि। प्रेयोवरणस्वभावाश्च दूरे व्रजन्ति कल्याणपथात्। भोगासक्तधियश्च देवदुर्लभं मानुषं जन्म पशुवद् यापयन्ति, विषयारण्यभूमिसञ्चरणे। सन्ति च विपुलविमलमतयो धीरास्तादृशा ये श्रेयश्च प्रेयश्चेत्युभावपि यथार्थबुद्ध्याऽधिगच्छन्ति, ते तात्त्विकधिय उभावपि संवीक्ष्य नीरक्षीरविवेकन्यायेन प्रेयोऽपहाय श्रेय एव वाञ्छन्ति। विवेकशून्याश्च लौकिकं योगक्षेममेव परमं साधनं मन्यमानाः प्रेयसि एव रमन्ते, न चात्मश्रेयसि कामपि पद्धतिमनुव्रजन्ति[3]।

---

१. (क) श्रीमद्भगवद्गीता—( अ० १६।७–२० )
(ख) असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ( ईशा० म० ३ )
(ग) अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥ (मुण्डकोपनिषद् २।८)

२. पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्। ( कठोपनिषद् २।१।२ )

३. अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते॥
( कठोपनिषद् १।२।१-२ )

मोहोपहतचेतसो लौकिकाः कर्तव्याकर्तव्यविवेकशून्या जिह्वादीन्द्रियलौल्यप्रसक्ताः समग्रेन्द्रियग्रामपरवशा विषयेन्द्रियसंयोगक्षणजानन्दमेव सर्वस्वं मन्यमानास्तांस्तानाधीनाश्रयन्ते। आयतिविरुद्धमपि तदात्वे प्रियं विषयजातं सेवन्ते हि रजोमोहावृतात्मानः। धीधृतिस्मृतिविभ्रंशाच्च ते न शक्नुवन्ति रोगसमुत्थानं परिहर्तुम्। प्रज्ञापराधाभिभूताश्च नोचितानुचितविवेकभाजो भवन्ति, अतश्च विषमेष्वेव वाग्देहमानसकर्मसु प्रवर्तन्ते[1]। एनां च दुःस्थितिमपनेतुं नैष्ठिकी चिकित्सैव सक्षमा।

तथाहि समस्तवेदनानामात्यन्तिकदुःखनिवृत्तिरूपा 'नैष्ठिकी चिकित्सा' मोक्षपदवाच्या पुरुषार्थचतुष्टयान्यतमा। मोक्षो हि सर्वथा शरीरोच्छेदः, मोक्षे च निःशेषा भवति वेदना[2]। वेदना न पुनर्भवति। विषयोपादानार्थं मनसोऽनवस्थानाद् रजस्तमोऽभावाद् बलवत्कर्मसंक्षयाच्च कर्मसंयोगैर्वियुक्तो भवत्यात्मा, न च पुनः शरीरादिसम्बन्धो भवति। अतश्च मोक्षस्यापरा संज्ञाऽपुनर्भव इति समाख्याता[3]।

तत्त्वस्मृतिरेव मोक्षप्रवर्तिका। तत्त्वस्मृतेरुपस्थानाच्च आत्मा शरीराद्यनुपकार्यः शरीरादयश्च तदधीनभावा इत्यादिकस्मरणरूपतया स्मृतिरुपजायते। तत्त्वस्मृतिरेव बलं मोक्षसाधनमार्गे, यद्बलेन मुक्ति याता न पुनरागता[4] इति।

यदा च सत्या बुद्धिरुदेति, तदा तत्त्वसाक्षात्कारवान् सर्वमेव बुद्ध्यहङ्कारशरीरादिकं दुःखहेतुमस्वमनित्यमनात्मकृतकमिति मन्यते, सर्वमेव च बुद्ध्यादि त्यजति। ततश्च सकलकर्मसन्न्यासे सर्ववेदनज्ञानादयश्च शरीरोपरमादेवोपरमन्ते। अनन्तरञ्च प्रकृत्यादिविरहितो भूतात्मा ब्रह्मभूतो भवति, न चोपलभ्यते। न च तस्य चिह्नं किमपि विद्यते। मुक्तात्मनश्च प्राणापानाद्यात्मलिङ्गाभावाद् गमकं चिह्नं नास्त्येव। तच्चाक्षरमलक्षणं ब्रह्म परमव्ययममृतं निर्वाणं शान्तिरिति चोच्यते[5]।

चिकित्सा चात्र न केवलं सुखानुबन्धरूपा, अपि त्वत्यन्तदुःखमोक्षरूपा। न च तत्र जन्ममरणक्लेशलेशस्याप्याशङ्का स्यात्। तादृशी तृष्णाशून्या प्रवृत्तिर्मोक्षफला भवति, अतश्च

---

१. चरक० शारीर० १।९९–१०९।
२. मोक्षे निवृत्तिर्निःशेषा……। चरक० शा० १।१३७।
३. मोक्षो रजस्तमोऽभावाद् बलवत्कर्मसंक्षयात्।
वियोगः कर्मसंयोगैरपुनर्भव उच्यते॥ ( चरक० शा० १।१४२ )
४. एतत्तदेकमयनं मुक्तैर्मोक्षस्य दर्शितम्।
तत्त्वस्मृतिबलं येन गता न पुनरागताः॥ ( चरक० शा० १।१५० )
५. यावन्नोत्पद्यते सत्या बुद्धिर्नैतदहं यया।
नैतन्मम च विज्ञाय ज्ञः सर्वमति वर्तते॥
तस्मिंश्चरमसंन्यासे समूलाः सर्ववेदनाः।
ससंज्ञाज्ञानविज्ञाना निवृत्तिं यान्त्यशेषतः॥
अतः परं ब्रह्मभूतो भूतात्मा नोपलभ्यते।
निःसृतः सर्वभावेभ्यश्चिह्नं यस्य न विद्यते॥ ( चरक० शा० १।१५३–५५ )

सर्वविधतृष्णाराहित्यात् सर्वथा रागद्वेषशून्यता जायते । तृष्णैव मूलकारणमस्य संसारसकलदुःख-ग्रामस्य । तृष्णात्यागश्च सर्वदुःखनाशहेतुः । अज्ञो जनोऽर्थेभ्यस्तृष्णामधिगच्छति, भवति च सदाऽऽतुरः । ज्ञानवांस्तु विषयानग्निकल्पान् मत्वा तेभ्यो निवर्तते, रागद्वेषपूर्वककर्मारम्भविरहाद् आरम्भशून्यत्वेन धर्माधर्मोच्छेदकृतात् शरीरासंयोगात् तं निराश्रयमकारणकं दुःखं न भवति ।

**नैष्ठिकी चिकित्सा**[1]

यस्यां प्रवृत्तौ सर्वविधतृष्णात्यागो भवति, सा प्रवृत्तिर्नैष्ठिकी चिकित्सेत्यभिधीयते । अस्याञ्च चिकित्सायां सर्वा वेदनाः समूला विलयं यान्ति । एषा च योगरूपा मोक्षरूपा च विद्यते । योगे मोक्षे च सर्वासामेव वेदनानामात्यन्तिकरूपेण निवृत्तिर्भवति । अनयोश्च योगस्य शरीरेण सह सम्बन्धोऽस्ति, मोक्षस्य तु शरीरात्यन्तोच्छेदरूपतया शरीरादिसम्बन्धो नास्ति । तथा च मोक्षपदप्राप्तये योगः सोपानभूतोऽस्ति । योगो मोक्षप्रवर्तको भवति । अनारुह्य च योगसोपानं नैव मोक्षपदमधिगन्तुं शक्यते । योगश्च चित्तमलापनयनसाधनम् ।

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिश्च चित्तं सत्त्वगुणोद्रिक्तम्, रजस्तमोविरहितम्, मोक्षप्रवर्तकं भवति । आत्मेन्द्रियमनोऽर्थानां सन्निकर्षाश्च सुखदुःखं प्रवर्तते । यदा चात्मस्थं मन आत्मन्येव स्थिरं भवति, चित्तवृत्तीनाञ्च निरोधो भवति, बुद्ध्यहङ्कारादिकं चात्मलीनं भवति, तदाऽऽत्मस्थे मनसि विषयेन्द्रियसंयोगाभावाद्विषयग्रहणार्थं मनसोऽनवस्थाना-दुभयं सुखदुःखं निवर्तते । नीरजस्तमस्कस्य मनस आत्मनि सम्यगाधानादष्टविधैश्वर्यबलरूपं[2] वशित्वमप्युपजायते ।

अत्र च शुद्धसत्त्वता योगलभ्येति निर्दशितम् । तत्त्वस्मृतिश्च योगाङ्गभूता यथा योगे यमादयोऽष्टाङ्गाः समाख्याताः, तथैव तत्त्वस्मृतेरपि सन्ति कतिचन स्थितयो यदाधारेण तत्त्व-स्मृतिर्जायते । तथा हि—

सतामुपासनेनासतां परिवर्जनेन, ब्रह्मचर्योपवासादिव्रतनियमाचरणेन, कार्यकालानति-पातेन, परीक्षिताभिनिवेशेन, चञ्चलस्य चित्तस्येन्द्रियाणाञ्च सन्नियमनेन, क्रोधहर्षादिपरित्यागेन,

---

१. चिकित्सा तु नैष्ठिकी या विनोपधाम् । "निष्ठाज्ञानस्य या परा" .( गीता १८।५० )
उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः ।
त्यागः सर्वोपधानाञ्च सर्वदुःखव्यपोहकः ॥
कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान् ।
उपादत्ते तथार्थेभ्यस्तृष्णामज्ञः सदातुरः ॥
यस्त्वग्निकल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्तते ।
अनारम्भादसंयोगात् तं दुःखं नोपतिष्ठते ॥ ( चरक० सा० १।९४।९७ )

२. आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥
इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।
शुद्धसत्त्वसमाधानात् तत्सर्वमुपजायते ॥ ( चरक० शा० १।१४०-४१ )

ज्ञान-दान-मैत्री-कारुण्य-मानोपेक्षा प्रशमपरेण, धर्मशास्त्राणां धारणेन, निर्जनप्रशान्तावास-निवासेन, विषयविरागेण, मनोनियमनादिधृत्युत्कर्षेण, अनागतधर्माधर्मसाधनानामसमारम्भेण, जन्मान्तरोपार्जितकर्मणां परिक्षयेण, संसारनिष्क्रमणेच्छया ममेदमहमस्मीत्यादिबुद्धिवर्जनेन, आत्मशरीराभिसंयोगबन्धनभयस्मरणेन, मनोबुद्ध्योरात्मनि समाधानेन चात्मादीनां याथार्थ्यं यथाभूतानुस्मरणमुपजायते। मनोबुद्ध्यहङ्कारादीनाञ्च परस्परभिन्नं परस्परानुपकारकत्वेन व्यवस्थितं प्रत्यात्मनियतरूपं स्वभावं स्मरन् न क्वचिदपि प्रवर्तते योगज्ञो जनः, अप्रवर्तमानश्च प्रकृतिजन्येन च दुःखेन नैव युज्यते।

जीवन्मुक्तैर्धर्मतत्त्वज्ञैर्ज्ञानिभिरपगतोपधैर्योगिभिर्पुनरिदमेकायनं मोक्षस्येति समाख्यातम् – तच्च तत्त्वस्मृतिबलम्।

तथा चोक्तम्[1]—

एतत्तदेकमयनं मुक्तैर्मोक्षस्य दर्शितम्।
तत्त्वस्मृतिबलं येन गता न पुनरागताः॥
अयनं पुनराख्यातमेतद्योगस्य योगिभिः।
सङ्ख्यातधर्मैः साङ्ख्यैश्च मुक्तैर्मोक्षस्य चायनम्॥

उपनिषत्सु च योगाभ्यासबलेन शाश्वतसुखस्य ब्रह्मपदस्यावाप्तये पन्था निर्दिष्टो वर्तते। तथा च यत्तचित्तेन्द्रियक्रिय आसनोपवेशनमास्थायात्मविशुद्धये योगं युञ्ज्यात्। यथाविधि च समं कायशिरोग्रीवमचलं स्थिरासनमङ्गीकृत्वा स्वं नासिकाग्रं सम्पेक्ष्य सर्वतश्च दिग्भ्यो दृष्टिमपनीय प्रशान्तात्मा मनः संयम्य परमात्मपरायणस्तच्चितो युक्त आसीत्। यदा च विनियतं चित्तमात्मन्येवावतिष्ठते सर्वकामेभ्यश्च मनो निवृत्तं निःस्पृहञ्च भवति, तदा युक्तावस्था जायते। यथा निवातस्थो दीपो नेङ्गते, तथैव योगिनश्चित्तं निश्चलं भवति। एवञ्च समाहितचेतसो वशित्वमवाप्ता योगिनो निष्ठात्मिकां परमानन्दसन्दोहस्थितिमधिगच्छन्ति। विशुद्धया बुद्धया युक्तो धृत्या चात्मानं नियम्य विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य विविक्तसेवी ध्यानयोगपरो परमं वैराग्यं समुपाश्रितोऽहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहादिकञ्च बन्धनं सर्वथा विमुच्य ब्रह्मभूयाय कल्पते। निष्कामयोगयुक्तश्च परमं ब्रह्म पदमाचिनोति[2]।

यश्च योगी विवेकबुद्धिसम्पन्नो भवति, स हि युक्तेन मनसा स्वस्येन्द्रियाणि वश्यानि करोति। विज्ञानसारथिर्मनःप्रग्रहवान् नियतात्मा जन एव संसाराध्वनः परमं पारं तत्परं निर्वाणधाम समधिगच्छति। यथार्थवेत्ता योगी वागादीन्द्रियग्रामं मनसि, मनश्च बुद्धौ, बुद्धिञ्चात्मनि, आत्मानञ्च शान्तारामे परमपुरुषे परमात्मनि यच्छेत्।

जन्मजन्मान्तरप्रभृत्यज्ञाननिद्राविमोहितांश्च जनान् दुर्लभस्य मानवदेहस्य चरितार्थतामधिगन्तुमुपनिषत्सु महान् मूल्यवानुपदेशराशिरुपदिष्ट आस्ते।

---

१. चरक० शा० १।१५०–५१।
२. श्रीमद्भगवद्गीता—अ० ६।१–२८ तथा अ० १८।४९–५६।

कतिचन वाक्यरत्नानि[1] यथा—

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।
क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति॥

× × ×

अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते :

× × ×

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो य एतद् विदुरमृतास्ते भवन्ति॥

× × ×

अन्यच्च[2]—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥
यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।
अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम्॥

एवञ्च मनःशुद्ध्युपायैस्तैलचेलकचादिभिरादर्शमिव मृज्यमानं मनो विमलं भवति। गुहाम्बुदरजोधूमनीहारै रसमावृतमर्कमण्डलं यथा भाति, तथाऽमलं सत्त्वं विभाति। यावत्कालं सत्या बुद्धेरुदयो न भवति, तावदेव ममेयं बुद्धिर्ममेदं शरीरमित्यादिरूपा ममता समुत्पद्यते, सति चोदये सत्या बुद्धेस्तत्त्वसाक्षात्कारवान् पुरुषस्तयैव सत्यया बुद्ध्या ( सम्यग् ज्ञानेन ) नैतद्बुद्ध्याद्यहम्, किन्तु भिन्न एवाहम्, तथा नैतद्बुद्ध्यादि मम, किन्तु प्रकृतेः प्रपञ्च इति विज्ञाय सर्वं बुद्ध्यादि त्यजति[3]।

आयुर्वेदशास्त्रे च नैष्ठिकी चिकित्सोपयोगित्वेन ( मोक्षोपयोगित्वेन ) पुरुषविचयशरीरे ( चरकसंहिता-शारीरस्थानस्य पञ्चमेऽध्याये ) लोकपुरुषयोः सामान्यत्वं वैशद्येन प्रतिपादितम्[4]।

---

१. कठोपनिषद्—१।३।१४, २।१।२, २।३।९।

२. ,, ,, —२।३।१४–१५।

३. यावन्नोत्पद्यते सत्या बुद्धिर्नैतदहं यया।
नैतन्मम च विज्ञाय ज्ञः सर्वमतिवर्तते॥ ( चरक० शा० १।१५३ )

४. षड् धातवः समुदिताः पुरुष इति शब्दं लभन्ते ) तद्यथा—पृथिव्यापस्तेजोवायुराकाशं ब्रह्म चाव्यक्तमिति। एत एव च षड् धातवः समुदिताः पुरुष इति शब्दं लभन्ते।

तस्य पुरुषस्य पृथिवी मूर्तिः। आपः क्लेदः। तेजोऽभिसन्तापः। वायुः प्राणाः। वियत् सुषिराणि। ब्रह्मान्तरात्मा। यथा खलु ब्राह्मी, विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिः। ब्रह्मणो विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्त्वम्, यस्त्विन्द्रो लोके पुरुषेऽहङ्कारः सः, आदित्यस्त्वादानम्, रुद्रो रोषः, सोमः प्रसादः, वसवः सुखम्, अश्विनौ कान्तिः, मरुदुत्साहः, विश्वेदेवाः सर्वेन्द्रियाणि सर्वेन्द्रियार्थश्च, तमो मोहः, ज्योतिर्ज्ञानम्, यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानम्, यथाकृतयुगमेवं बाल्यम्, यथा त्रेता तथा यौवनम्, यथा द्वापरं तथा स्थाविर्यम्, यथा कलिरेवमातुर्यम्, यथा युगान्तस्तथा मरणमिति। एवमेतेनानुमानेनानुक्तानामपि लोकपुरुषयोरवयवविशेषाणामग्निवेश! सामान्यं विद्यात्। इति ( चरक० शा० ५।५ )।

तथा च—"यावन्तो हि लोके मूर्तिमन्तो भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्ते 'लोके" इति । अस्य च सामान्योपदेशस्य प्रयोजनं सत्याबुद्धेरुदय एव । सर्वलोकमात्मनि, आत्मानं च सर्वलोके समनुपश्यतः सत्या बुद्धिः समुत्पद्यते । सर्वलोकं ह्यात्मनि पश्यतो भवत्यात्मैव सुखदुःखयोः कर्ता, नान्य इति । कर्मात्मकत्वाच्च हेतु( उत्पत्तिकारणम् ) जन्म-शरीरवृद्धिदुःखागमजीवापगमैर्युक्तो भवति पुरुष इति विदित्वा पूर्वं ज्ञानमुत्थाप्यतेऽपवर्गाय । ततश्च प्रवृत्तिरेव सर्वदुःखानां मूलम्, निवृत्तिश्च ( तृष्णाशून्यता रागद्वेषादिराहित्यश्चेति ) सुखमूलमिति विजानाति ।

अनन्तरञ्च "प्रवृत्तिर्दुःखम्, निवृत्तिः सुखमिति यज्ज्ञानमुत्पद्यते तत्सत्यम् । तस्य हेतुः सर्वलोकसामान्यज्ञानम् । एतत् प्रयोजनं 'सामान्योपदेशस्य" इत्यवगम्यते ।

सत्याबुद्ध्युदये च मोहेच्छाद्वेषकर्ममूला प्रवृत्तिर्विरमति । प्रवृत्तिजन्याश्च जाति-रूप-वित्त-वृत्त-बुद्धि-शील-विद्याभिजनाहङ्कारा विलुप्यन्ति । बन्धनकारकं मनोवाक्कायकर्म त्यज्यते । अहं शरीरेन्द्रियबुद्धिस्मृतिराशिरित्यनात्मनि, आत्मबुद्धिर्नश्यति । मातृ-पितृ-भ्रातृ-दारापत्यबन्धुमित्र-भृत्याद्यनात्मीयेषु ममताऽपयाति । कार्याकार्यादिषु च विपरीताभिनिवेशो नश्यति । एवञ्च सर्वोपधा ( तृष्णा ) शून्योऽहङ्कारसङ्गसंशयाभिसम्प्लवाभ्यवपातविप्रत्ययविरहितोऽतिवर्तते प्रवृत्तिम्, न चाबध्यते कर्मजालैरिति ।

निवृत्तिस्त्वपवर्गः, तत्परम्, प्रशान्तम्, तदक्षरम्, तद्ब्रह्म, स मोक्षोऽपुनर्भवश्चेत्यादि-शब्दैरेक एवाऽर्थोऽभिधीयते ।

नैष्ठिकीचिकित्सासूत्राणि—

मोक्षोपलब्धिसाधनानि हि नैष्ठिकीचिकित्सासूत्राण्यभ्युपगन्तव्यानि । मोक्षसाधन-हेतुरूपा चिकित्सा च नैष्ठिकी चिकित्साऽवगन्तव्या । मुमुक्षुपुरुषाणाञ्च कृते मोक्षोपाया निर्दिश्यन्ते । तथाहि—दुःखाक्रान्तलोकदर्शनाद्विरक्तस्तु जनः प्रागेव मोक्षशास्त्रोपदेष्टारं गुरुमभ्यु-पेयात् । आचार्यस्य गुरोश्चोपदेशमनुपालयेत् । अग्निहोत्रव्रतमाचरेत् । धर्मशास्त्रा-नुगमनपरो भवेत् ।

शास्त्रावबोधेनात्मनि धैर्यमाश्रयेत्, धर्मशास्त्रोक्ताश्च क्रियास्तेन करणीयाः । तथा च सर्वभूतमपरुषमनतिकाले वचनम्, सर्वप्राणिषु चात्मनीवावेक्षा, सर्वपरिग्रहपरित्यागः, सर्वासाञ्च स्त्रीणामस्मरणमसङ्कल्पनमप्रार्थनमनभिभाषणं च, कौपीनं प्रच्छादनार्थम्, गौरिकरागनिवसनम्, दण्डधारणम्, भैक्ष्यचर्यार्थं पात्रम्, प्राणधारणार्थमेककालमग्राम्यो यथोपनतोऽभ्यवहारः, वनेषु विजनेषु वाऽनिकेतवासः, तन्द्रानिद्रालस्यादिकर्मवर्जनम्, इन्द्रियार्थेष्वनुरागोपतापनिग्रहः

१. चरक० शा० ५।३ ।  २. चरक० शा० ५।८ ।

३. जातिरूपवित्तवृत्तबुद्धिशीलविद्याभिजनवयोवीर्यप्रभावसम्पन्नोऽहमित्यहङ्कारः । यन्मनो-वाक्कायकर्म नापवर्गाय स सङ्गः । कर्मफलमोक्षपुरुषप्रेत्यभावादयः सन्ति न वेति संशयः । सर्वास्ववस्थास्वनन्योऽहमहं स्रष्टा स्वभावसंसिद्धोऽहमहं शरीरेन्द्रियबुद्धिस्मृतिविशेषराशिरिति ग्रहणमभिसम्प्लवः । मम मातृपितृभ्रातृदारापत्यबन्धुमित्रभृत्यगणो गणस्य चाहमित्यभ्य-वपातः । कार्याकार्यहिताहितशुभाशुभेषु विपरीताभिनिवेशो विप्रत्ययः । ...................
एवमहङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्तते प्रवृत्तिम्, सा च मूलमघस्य ।
( चरक० शा० ५।१० )

विहाराहारसुखस्थितगतप्रत्यङ्गचेष्टादिकेष्वारम्भेषु स्मृतिपूर्विका प्रवृत्तिः सत्कारस्तुतिमानाप्रियत्वम्, शोकमानोद्वेगलोभेर्ष्याभयक्रोधादिभिरस्खलनम्, कार्यकालात्ययभयम्, सत्त्वोत्साहः, सर्वं कारणवद्दुःखमस्वमनित्यमित्यभ्युपगमः, सर्वप्रवृत्तिष्वघसंज्ञा, सर्वसन्न्यासेषु सुखमित्यभिनिवेशः, एष मार्गोऽपवर्गाय[1] एत एवोपाया नैष्ठिकीचिकित्सायामनुपालनीया भवन्ति ।

एतैश्चोपायैः संवृतायने स्थिते दीपाशये यथा दीपो प्रसन्नार्चिर्ज्वलति, तथैवेन्द्रियादिभ्यो व्यावृत्त्यात्मनियतं शुद्धं सत्त्वं विराजते । शुद्धसत्त्वस्य च योगिनो या सत्या बुद्धिरवभासते तया बुद्धयाऽहमादिमिथ्याज्ञानरूपो महामोहो नश्यति । भावस्वभावज्ञश्च योगी निस्पृहो भवति । तत्त्वज्ञाता हि विषयव्यावृत्तस्य मनस आत्मन्येव सन्निरोधयोगं धारयते । न च सेवते सुखदुःखकारणानि, न च क्वचिदप्यास्थां करोति, सर्वत्रोदासीनो भवति, किञ्चिदपि नालम्बते विषयम्, सर्वमेव सन्न्यस्यते सत्यया बुद्धया ।

तत्त्वज्ञानपराश्च लोकपुरुषयोः सामान्यत्वमवगच्छन्ति, सर्वलोकमात्मनि, आत्मानञ्च सर्वलोके समनुपश्यतः सत्या बुद्धिः समुत्पद्यते । सर्वलोकं ह्यात्मनि पश्यत आत्मैव सुखदुःखयोः कर्तेति ज्ञानमुत्पद्यते, ततश्च विरज्यते कर्मभ्यः ।

रागद्वेषपूर्वककर्मारम्भपरित्यागाद् धर्माधर्मसुखदुःखसम्बन्धाभावादवश्यभोग्यफलानां कर्मणाञ्च परिक्षयान्न पुनः शरीरादिसंयोगो भवति । साक्षाद् दृष्टभावस्वभावेन च योगिजनेन यः सर्वसन्न्यासः क्रियते, तेन सर्वाश्च वेदना समूला विनश्यन्ति । योगज्ञो हि धीरोऽक्षरं ब्रह्मपदं प्रतिपद्यते, न चाज्ञस्तज्ज्ञातुमपि प्रभवति । ब्रह्मविदामेव चात्र ज्ञानं प्रतिष्ठितं भवति । सर्वसंयोगाभावाच्चात्मनि किमपि लक्षणं न भवति । उपलब्धियोग्यता भावान्नोपलभ्यते चात्मा । कारणाभावादात्मनि नहि लिङ्गमुपलभ्यते । सर्वकरणायोगाच्च 'मुक्तः' इत्यभिधीयते ।

एवञ्च सत्य बुद्धिबलेन सर्वोपधापरित्यागेनोभयं सुखदुःखं निवर्तते[2] । एतदेवाग्निलक्ष्याचार्यवरेण चरकेण 'चिकित्सा तु नैष्ठिकी या विनोपधाम्' इत्यादिप्रसङ्गेनानन्तपारस्यायुर्वेदशास्त्रस्य चरमपुरुषार्थफलत्वमाम्नातमिति । ॐ शान्तिः ।

---

१. चरक० शा० ५।१२ ।

२. शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्तते ।
यया भिनत्त्यतिबलं महामोहमयं तमः ॥
सर्वभावस्वभावज्ञो यया भवति निस्पृहः ।
योगं यया धारयते साङ्ख्यः सम्पद्यते यया ॥
यया नोपैत्यहङ्कारं नोपास्ते कारणं यया ।
यया नालम्बते किञ्चित् सर्वं सन्न्यास्यते यया ॥
याति ब्रह्म यया नित्यमजरं शान्तमव्ययम् ।
विद्या सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानं च सा मता ॥
लोके विततमात्मानं लोकं चात्मनि पश्यतः ।
परावरदृशः शान्तिर्ज्ञानमूला न नश्यति ॥
पश्यतः सर्वभावान् हि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते ॥
नात्मनः कारणाभावाल्लिङ्गमप्युपलभ्यते ।
स सर्वकरणायोगान्मुक्त इत्यभिधीयते ॥ इति (चरक० शा० ५।१६–२२)



# वैदिकवाङ्मये वास्तुनिर्माणम्

श्रीविनायकरामचन्द्ररटाटे,
अनुसन्धाता,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

अधुना वास्तुनिर्माणसाधनानाम्, निर्मातॄणां यन्त्राणाम्, वास्तुभेदानां चावश्यकं विवरणमुपस्थाप्यते। वेदेषु विषयस्यास्य महती सामग्र्युपलभ्यते। तत्रादौ वास्तोः सर्वाधारभूता ध्रुवा चिन्त्यते। ऋगादिवाङ्मयेऽस्य बहूनि प्रमाणानि श्रूयन्ते। अथर्ववेदे[1] यथा—'इहैव ध्रुवा प्रतितिष्ठ'। 'ध्रुव'शब्दवैशिष्ट्यज्ञापनार्थमथर्ववेदे पृथक् सूक्तं वर्तते—

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं सर्वमिदं जगत्।
ध्रुवासः पर्वता इमे ध्रुवो राजा विशामयम्[2]॥

तत्र श्रौतपात्रव्याजेन पृथिव्या सह ध्रुवस्य महत्त्वं सङ्केतयति अथर्ववेदे यथा—'जुहूर्दाधार द्यामुपभृदन्तरिक्षं ध्रुवा दाधार पृथिवीं प्रतिष्ठाम्[3]' इति। तथैवाग्रिमे मन्त्रेऽपि—'ध्रुव आरोह पृथिवीम्'। ब्राह्मणादिषु[4] अस्य पर्याप्तान्युदाहरणानि लभ्यन्ते। 'वास्तोः' आधारशिलासु अन्यतमः 'धरुणः' शब्दोऽपि क्वचिदाधारार्थं लभ्यते। वास्तोराधारशिला यादृशी निश्चला दृढा च भवति, तथैव 'सप्तमर्यादायाम्' तिष्ठतः पुरुषस्य निश्चलत्वं दृढत्वं च सम्पादयति। यथा—'सप्त[5] मर्यादाः कवयस्ततक्षुस्तासामिदेकामभ्यंहुरो गात्। आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे धरुणेषु तस्थौ' इति। तथैव[6] भूमेराधारत्वं तत्रैव 'स्तूपः' वेदेषु विविधानां स्तूपानां तदर्थकशब्दानां च बहुत्र निर्देशोऽस्ति।

आधारशिलाया अनन्तरं स्तूपस्य (स्तम्भस्य) महत्त्वं वास्तुशास्त्रे दृश्यते। 'हिरण्यस्तूपः' शब्दोऽयं यद्यपि व्यक्तिनामकरूपेणोपलभ्यते, तथापि शब्दस्यास्य व्युत्पत्तिमवलोकयेदमेव सिद्ध्यति यदयं सुवर्णस्तम्भार्थे प्रयुक्तोऽस्ति। तत्र व्यक्तिनामोदाहरणानि प्रथमत उपस्थाप्यन्ते[7]। अत्रायमाङ्गिरसः प्रोक्तः[8], य ऋग्वेदे ऋषित्वमलभत। स्तूपशब्देन ऊर्ध्वोन्नतस्य

---

१. अ० वे०—३।१२।२। २. तत्रैव—६।८८।
३. अ० वे०—१८।४।५। ४. ऐ० ब्रा०—८।४, बृ० उ०—३।९।२५, तु० 'पृथिवी ध्रुवा'—श० ब्रा० १।८।१।३९ इत्यादिः। ५. अ० वे० ५।१।६।
६. 'धर्मा ध्रियस्व धरुणे पृथिव्या अच्युतं त्वा देवताश्च्यावयन्तु'—अ० वे०—१२।३।३५, अपि च—'धरुण मसिदिवं दृगहचक्षुः'—तै० सं० १।१।७।१, 'धरुणा' धारे स्कम्भा प्रतिष्ठन्ति स्म—'स्कम्भं धरुणे'—ऋ० १०।४४।४।
७. ऋग्वेदे—१०।१४९।५, श० ब्रा०—३।२४।११।
८. ऋ०—२।३१।३५, ९।४।६९, तु० लुडविग्० ट्रां०। ऋ०—३।१४।१४१।

सङ्केतः। यथा—'उपस्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य'[1]। स्तूपस्योत्पत्तिः 'यूप'शब्दात् सञ्जातेत्यनुमीयते। श्रौते यूपस्य महत्त्वं सर्वप्रसिद्धमेव। यूपे पशवो बध्यन्ते। अस्य सम्बन्धो द्वारेण सह प्रतोयते। तत्रापि यूपस्य प्रमुखोऽर्थः 'मध्यभागस्थनिश्चलः स्तम्भः' एव।

यूपस्य विविधानि सङ्केतस्थलान्यधो निर्दिश्यन्ते[2]। द्वारेण सहास्य सम्बन्धोऽनेन प्रकारेण दृश्यते[3]। यूपस्य परिमाणानि श्रूयन्ते[4]। एतत्कृते निर्दिष्टकाष्ठस्यापि प्रमाणं लभ्यते। खादिरो यूपो भवति[5]। तथैवास्य दीर्घत्वं पुष्टत्वं भारवाहकत्वं च क्रमेणापस्थाप्यते—'आदित्यो यूपः[6]', 'वज्रो यूपः[7]', तथैव यज्ञे यजमानत्वम्, अग्निहोत्रकर्तृत्वं च—'एष वै यजमानो यद् यूपः[8]', 'यजमानो वा एष निदानेन यद् यूपः[9]', 'असौ वा अस्य अग्निहोत्रस्य कर्तुः'। वाससः सम्बन्धे यूपस्य ध्वजत्वं सूच्यते। [10]वैतानश्रौतसूत्रे 'यूपवासांसि' इत्थं यज्ञियस्य यूपस्यैव स्तूप इति युगप्रसिद्धं नामार्थवत्। यस्य बौद्धयुगेऽपि विस्तृतप्रचारो दृश्यते।

वैदिककाले स्तूपस्यास्य स्तम्ब स्तम्भो वेत्यपरो विकासो दृश्यते। वैदिककोषकारस्य डॉ० सूर्यकान्तस्य मतानुसारेणाथर्ववेदे परवर्तिसाहित्ये च शब्दोऽयं तृणगुच्छम्[11], मुष्टिकां वा ज्ञापयति। यत्किमपि स्याद् वेदेष्वस्य विविधानि रूपाणि लभ्यन्ते। अस्य स्कम्भस्याधारे वास्तोः (गृहादेः) शिला-नासा-धदिस-गोपानसीत्यादि प्रतिष्ठते स्म। स्कम्भसम्बन्धेनैव इन्द्रोऽपि

---

१. ऋग्वेदे—७।२।१, तु०—१।२४।७, तै० सं०—३।३।६।५, पवि० ब्रा०—१३।४।४।

२. अथर्ववेदे—१२।१।३८, १३।१।४७, ऋ०—२।५।७। तै० सं०—६।३।४।१, ७।२।१।३।

३. 'दुर्यः'—ऋ० १।५१।१४, तु० (देवाः) 'यदनेन (यज्ञम्) अगोपयंस्तस्माद्यूपो नाम'—श० ब्रा० १।६।१।२०।

४. 'सप्तदशारत्निर्यूपो भवति'—तै० ब्रा० १।३।७।२।

५. श० ब्रा०—३।६।२।१२।

६. तै० ब्रा०—२।१।५।२।

७. श० ब्रा०—३।६।४।१९।

८. तै० ब्रा०—१।३।७।३।

९. श० ब्रा०—३।७।१।११।

१०. वैश्रौसू०—२७।८, अस्मिन्नेव सूत्रे यूपस्थलानि—१०।२, १८।८, २७।६, ३७।२३, 'यूपैकादशिनी'—२४।११।

११. अ० वे०—८।६।१४, तै० सं०—५।६।४।१, 'दर्भमुष्टिः' तै० ब्रा०—२।१।७।३, ३।३।४, ३।३।३।४, ऐ० ब्रा०—५।२३।९ इत्यादिः। स्तम्भः—कासं० ३०।९।३१।१, सूत्रग्रन्थेषु शब्दोऽयं स्पष्टतः स्तम्भार्थ एव वर्तते। ऋग्वेदे, अथर्ववेदे 'स्तम्भः' शब्दः—१।३४।२, ४।१३।५, तृणगुच्छार्थेऽस्यैव विविधानि रूपाणि—स्तम्बिनी ८।७।४, स्तम्भेन १९।३२।७, अस्य यष्टिकारूपेणोपयोगः।

स्कम्भीयानुच्यते[1]। एतेनावगम्यते यद् गृहादेराच्छादनानां प्रमुखा भारधारकास्त्रयः स्कम्भा भवन्ति स्म[2]। बहुषु स्कम्भेष्वेकतरो दीर्घत्वपृथुत्वादिगुणैर्विशिष्टः स्तम्भो महास्कम्भत्वेनोक्तः। तद्यथा—'अयं महान् महता स्कम्भेन[3]' ऋग्वेदस्य सूक्तेषु[4] विषयमवलम्ब्य बहुत्र सङ्केता वर्तन्ते।

वेदेषु छदिस्—पटलाच्छादनार्थं यानि वक्रदारूणि भवन्ति, तेषां कृते—उपमित्-प्रतिमित्-वंश-प्राचीनवंश-प्राग्वंश-बर्हंण्णायामित्यादिशब्दा उपलभ्यन्ते[5]। यथा—

उपमितां प्रतिमितामथो परिमितामुत।
शालाया विश्ववाराया नद्धानि विचृतामसि[6]॥

'छदिस्'शब्दोऽपि ऋगादिषु पटलार्थे प्रसिद्धः। यथा—'अदो यदवरोचते चतुष्पक्षमिवच्छदिः[7]' आच्छादनस्थानीयानां वंशादीनां बन्धनार्थं 'मुञ्जारज्वादीनामुपयोगोऽपि शालादिनिर्माणेषु सूक्तेषूपलभ्यते। मुञ्जवृन्देषु पश्वादीनां निलीयनस्य[8] स्वाभाविकी प्रवृत्तिरवगम्यते। शतपथेऽस्य[9] विपुलं वर्णनमुपलभ्यते।

अयं मुञ्ज आसन्दोनिर्माणेऽपि प्रयुज्यते स्म[10]। तथा ह्युक्तम्—'अग्निर्देवेभ्य उदक्रामत् स मुञ्जं प्राविशत् तस्मात् स सुषिरः[11]' इति। अन्यत्रापि—'यज्ञिया हि मुञ्जाः[12]' बन्धनादिप्रयोजनसिद्ध्यर्थं तृणघासादीनामपि प्रयोगो भवति। तद्यथा—

'मानस्य पत्नि शरणा स्योना देवी देवेभिर्निर्मितास्यग्रे।
तृणं वसाना सुमना असस्त्वमथास्मभ्यं सहवीरं सायं दाः[13]'।

---

१. ऋ०—१०।११।५।
२. 'त्रयः स्कम्भः स्कम्भितासः'—ऋ० १।३४।२, 'स्कम्भेन धारयत्'—ऋ० ८।४१।१०, 'स्कम्भं धरुणे'—ऋ० १०।४४।४, या स्कम्भ धारयति स्म।
३. ऋ०—१०।११।५।
४. ऋ०—३।८ ६।४६–४७ आदिः।
५. 'भाषायां ये—बल्लीधरणगारादि कथ्यन्ते।
६. अ० वे०—९।३।१।
७. अ० वे०—३।७।३, तथैव ऋगादिषु—१०।८५।१०, तै० सं०—६।२।९।४, ६।१०।५।७, ऐ० ब्रा०—१।२९, श० ब्रा०—३।५।३।९, क्वचिच्छब्दोऽयं नक्षत्रविषयकः प्रोक्तः—अ० वे०—१४।१।१०।
८. ऋ०—१।१९१।३, १।१६१।८, अ० वे०—१।२।८, तै० सं०—५।१।९।५, ५।१।१०।५, कौ० ब्रा०—१८।७, श० ब्रा०—४।३।३।१६, ६।६।१।२३, ६।६।२।१५।
९. सैषा योनिरग्नेर्यं मुञ्जः'—श० ब्रा०—६।३।१।२६।
१०. श० ब्रा०—१२।८।३।६।
११. श० ब्रा०—६।३।१।२६।
१२. श० ब्रा०—१२।८।३।६।
१३. अ० वे०—३।१२।५।

अन्यच्च—

वंशानां ते नहनानां प्राणाहस्य तृणस्य च ।
पक्षानां विश्ववारे ते नद्धानि विचृतामसि[1] ॥

अपि च—

तृणैरावृता पलदावसाना रात्रीव शाला जगतो निवेशनी ।
मिता पृथिवी पृथिव्या तिष्ठति हस्तिनीव पद्धती[2] ॥

तृणवाहकानामपि प्रमाणमुपलभ्यते–'सर्वास्तङ्दवाव'[3] इति । तृणानामन्येऽपि बहुत्र प्रयोगा लभ्यन्ते[4] । 'कुश'शब्दस्य प्रयोगो यद्यपि पुण्यक्रियायाः सम्पादनार्थं ज्ञायते, तथापि कुशानां शालानिर्माणेऽपि सम्प्रयोगो लभ्यते[5] । अस्य विविधा भेदा अपि दृश्यन्ते क्वचित्[6] । तथैवास्य काष्ठधात्वोर्कीलकवदुपयोगोऽपि लभ्यते[7] । अयमास्तरणवाचकोऽस्ति[8] 'वीरिणः', 'वोरगः' वा तृणविशेषो ज्ञायेते[9] । आच्छादनार्थे 'पलादः' शब्दोऽपि श्रूयते—'संदशानां परिष्वञ्जल्यस्य च[10]' इति । सुदृढं विनिर्मिताया मुञ्ज-कुश-काशादीनां विविधकार्यसम्पादिकाया रशनाया रज्वा वा प्रयोगोऽपि वेदेषूपलभ्यते । या विविधैरुपयोगैः सह शालादीनां बन्धनादिषु नियुज्यन्ते स्म । यथा ऋग्वेदे–'शीर्षण्या रशना[11]' अत्र अस्या अश्वेन सह सम्बन्धो वर्तते[12] । अन्यत्र बन्धनार्थेऽपि

---

१. अ० वे०—९।३।४ ।

२. अ० वे०—९।३।१७, ऋग्वेदेऽपि—१।१६१।१, १।६२।८–११, १०।१०२।१० आदिः ।

३. अ० वे०—१९।३६।५ ।

४. 'तृणम्'—अ० वे० २।३०।१, ६।५४।१, ६।१०२।२, ७।७३।११, ९।१०।२०, 'तृणष्ट्वान्' अ० वे० ५।१९।७, 'तृणाः'—अ० वे० ११।७।२१, 'तृणानि'—अ० वे० ९।७।२२, 'तृणेढु'—अ० वे० ८।८।११ ।

५. श० ब्रा०—१५।२।१।५, ३।१।२।१६, ५।३।२।७, मै० सं०—४।५।७, श० ब्रा०—३।६।२।९, तै० ब्रा०—१।५।१०।१–२,७ ।

६. 'अहल कुश वर्तक'—अ० वे०—२०।१६१।६ ।

७. ऋ०—१०।१००।१० ।

८. तै० आ०—६।९।१ ।

९. द्र०—षड्विंशब्रा० ५।२, श० ब्रा० १३।८।१।१५ ।

१०. अ० वे०—९।३।५।१७ ( तु०—त्सिमर, आ० ले० १५३, ब्लूमफील्ड, 'हिम्स' आ० दि०—अ० वे० १९४–१९५ ) ।

११. ऋ०—१।१६२।८ ।

१२. ऋ०—४।१।९, ९।८९।१, १०।१८।१४, तु० तै० सं०–१।६।४।३ ।

प्रतीयते[१]। रशनायाः प्रमाणमपि प्रलभ्यते—'अङ्गुलीव रशना[२]' इति। बन्धनार्थं नहन-नद्धादिशब्दाः प्रयुज्यन्ते[३]।

शालादीन् परितो भित्तिपरिखादीनां चापि वेदेषु क्रमिकं विवरणमुपलभ्यते। एतेषां निर्माणं मृद्-शिला-प्रस्तरेष्टकादिभ्यः सम्पद्यते स्म। तत्र तीर्थविधावुच्चार्यमाणेषु मन्त्रेषु मृदः केवलं धार्मिकं महत्त्वमेव नास्ति[४], अपि तु निर्माणकार्ये तस्या विशिष्टं महत्त्वं प्रतीयते। वेदे प्रथमतो मृन्मयगृहा एव दृश्यन्ते[५]।

सिकताया ज्ञानमपि तैः पर्याप्तं सम्पादितमासीत्। यथा—'सा[६] ( मृद् ) अतप्यत्, सा सिकताम् असृजत्', '[७]सिकताभ्यः शर्करामसृजत्' इति। आर्याः सिकताया भेदानपि जानन्ति स्म—'[८]द्वे हि सिकते शुक्ला च, कृष्णा च' '[९]अलङ्करोत्वेव सिकता भ्राजन्त इति हि सिकता अग्नेर्वा एतद् वैश्वानरस्य भस्म यद् यत् सिकताः', '[१०]रेतः सिकताः' इति। एभिरस्योत्पत्तिर्ज्ञाप्यते। यतो हीमां नद्यः स्वप्रवाहेन सह तटेषु त्यक्त्वा प्रवहन्ति। '[११]सिकता वा अपां पुरीषम्' एवमस्या विविधानि प्रमाणानि श्रूयन्ते[१२]।

---

१. ऋ०—२।२८।५, वासं०—२१।४६, २२।२, २८।३३, तै० सं०—६।६।४।३, श० ब्रा०—३।६।२।१०, 'रज्ज्वर्थकः'—ऋ० १।२८।४, ४।२२।८, ८।२५।१८, ऐ० ब्रा०—४।१९।३, विशेषेण रज्ज्वर्थकः'—अ० वे० १०।९।२, तै० सं०—१६।४।३, वासं०—२३।१४, तै० ब्रा०—१।२।४।२, ऐ० ब्रा०—२।३७, ( अन्तरी ) रथस्य चर्मरज्जुः ( लगाम ) त्वेनोल्लिखितोऽस्ति। तु० त्सिमर, अले० २४९, रज्जोबन्धनार्थः—तै० सं० २।५।१।७, श० ब्रा०—१।३।१।१४, १०।२।३।८, ११।३।१।१, अ० वे०—४।३।२, १९।४।७-८, ब्लूमफील्ड–'हिम्स' आ०—अ० वे० ३६८, तु० 'वरुण्या वा एष यद् रज्जुः'—श० ब्रा० ३।२।४।१८, ऋ०—१।८५।३, तै० सं०—६।२।९।२, ६।६।३।१, श० ब्रा०—१०।६।१।७, शाश्रौसू०—४।१०।३।

२. तु०—त्सिमर, आ० ले० २४९।

३. अथर्ववेदीयशालासूक्तयोः प्रसिद्धमेव।

४. 'अश्वक्रान्ते रथक्रान्ते·······॥ मृत्तिके हन मे पापम् ॥'—तै० आ० १०।८।

५. ऋ०—८।८८।१ ( द्र०—वैको० )।

६. श० ब्रा०—६।१।३।४।

७. श० ब्रा०—६।१।३।५।

८. श० ब्रा०—७।३।१।४३।

९. श० ब्रा०—७।१।१।१०।

१०. श० ब्रा०—७।१।१।११।

११. श० ब्रा०—७।५।२।५९।

१२. सिकताया अन्येऽपि प्रमाणानि। अथर्ववेदे यथा—७।१०९।२, ११।३।१२, ११।७।२१, सिकतावती १।१७।४, सिकतासु २०।१३६।२ इत्यादिः।

प्रस्तरार्थे–अश्मोपलशिलादिशब्दानां प्रयोगो वर्तते । एतेषां पुरा विशेषोपयोगः प्रक्षेपणपूर्वकहननाय भवति स्म । तदा जना अश्मनोः सङ्घर्षणेनाग्नेरुत्पादनमपि[1] कुर्वन्ति स्म । अस्मोपयोगो गृहनिर्माणेऽपि विपुलतया भवति स्म । अथर्ववेदे यथा—'हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् । बृहस्पतिरभिकनिक्रदन्दा उत प्रास्तौदुच्च विद्वाँ अगायत्[2]' इति । तत्रैव वेदेऽस्य विविधानि शब्दरूपाण्युपलभ्यन्ते–अश्मन्वती, अश्मवर्मं, अश्मसु, अश्महन्मभिः, अश्मानः, अश्मानमित्यादिः ।

प्रस्तरस्य महत्त्वमवगम्यार्यैस्तस्य प्रतिपादम् अभिवर्णनं कृतमस्ति—'ऋषीणां प्रस्तरोऽसि नमोस्तु दैवाय प्रस्तराय[3]' इति । प्रस्तरस्य त्रिविधोपयोगिता अधोनिर्दिष्टैः सूचकस्थलैः सूच्यते[4] ।

'इष्टकायाः' सुव्यक्तं स्वल्पं श्रौतसाहित्ये प्रलभ्यते, तथापि सूत्ररूपेणास्य सङ्केताः संहिता–ब्राह्मणेषु च लभ्यन्ते —'इष्टस्य ते वि चृताम्यपिनद्धमपोर्जुवन्[5]' इति । शतपथे इष्टकानिर्माणस्योल्लेखोऽस्ति[6] । तद्यथा—'तद् यदिष्टात् समभवस्तस्मादिष्टकाः[7]' इति । अन्यच्च—'यदिष्ट्वा पश्यत्तस्मादिष्टकाः[8]' इत्यादिः । इष्टकायाः चिह्नानाम् आकारादिविषये च 'चयन'–प्रकरणं द्रष्टव्यम् ।

शाला गृह-दुर्गादीनां च संरक्षार्थं भित्तेः प्राकारस्य वा स्पष्टोल्लेखो वैदिकवाङ्मयेपूपलभ्यते । यस्य कृते वप्रप्राकारदेहीशब्दाः प्रयुज्यन्ते स्म । प्राकारशब्दः सर्वप्रथमं शाङ्खायनश्रौतसूत्रे दृश्यते । यस्यार्थो दुर्गपरिवेष्टिता बृहती सुपुष्टा च भित्तिर्वर्तते । इयं दर्शकदीर्घाऽपि वक्तुं शक्यते । ईदृगेव परिधिशब्दोऽपि वर्तते । यस्य विविधानि रूपाणि पुरःस्थाप्यन्ते । अस्मिन्नेवार्थे देहीशब्दोऽपि लभ्यते । ऋङ्निर्देशानुसारेण देहीशब्दः शत्रोराक्रमणं निवारयितुं रक्षात्मकपुराणां समन्ताद् वर्तमानां परिखां सङ्केतयति । तत्रापि विशेषेण मृद्भित्तीः सङ्केतयति । मन्ये शब्दोऽयं शरीरवाचकेन देहशब्देन व्युत्पन्नः । यथा 'पुरम्' शरीरार्थकं वर्तते इति ।

---

१. अ० वे०—२०।३४।३ ।

२. अ० वे०—२०।९१।३ ।

३. अ० वे०—१६।२।६ ।

४. तै० सं०—१।७।७।४, वासं०—२।१८, १८।६३, ऐ० ब्रा०—१।२६, २।३, तु०—'अयं वै स्तूपः'—( ऊर्ध्वबद्धकेशसङ्घातमकः ) श० ब्रा० 'यज्ञो वै प्रस्तरः'—१।३।४।१०, 'शिला भूमिरश्मा पांसुः'—अ० वे० १२।१।२६, 'प्रस्तरमिमं याज्ञिकासनार्थे प्रयुनक्ति स्म'—ऋ० १०।१४।४ ।

५. अ० वे०—९।३।१८ ।

६. श० ब्रा०—६।१।२।२२ ।

७. श० ब्रा०—६।१।२।२२ ।

८. श० ब्रा०—६।३।१।२, अपि च—'अस्थीनि वा इष्टका'—श० ब्रा० ८।७।२।१०, 'अहोरात्राणि वा इष्टकाः'—श० ब्रा० ८।९।२।१० । इत्यादिः ।

●●●

लघुग्रन्थमाला–२६

श्रीशशिदेवविरचिता

# व्याख्यानप्रक्रिया




सम्पादकः

डॉ० जानकीप्रसादद्विवेदः

अनुसन्धानसहायकः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वै० सं० २०३२

# भूमिका

आचार्यः शशिदेवो व्याख्यानप्रक्रियाख्यं लघुग्रन्थं रचयामासेति ग्रन्थान्ते उक्तेन तदीयेनैव वचसा स्फुटं ज्ञायते । ग्रन्थकारस्य देशकालपरिचयविषयेऽज्ञानमेव वर्तते सम्प्रति ।

श्रीपादकृष्णबेल्वल्करमहोदयेन Systems of Sanskrit grammar ग्रन्थे ( P. 81-82 ) डेक्कनकालेजीया व्याख्यानप्रक्रिया उद्धृता । तत्रैकः श्लोकः कलापव्याकरणरचनाप्रयोजनप्रकाशकः पठितो दृश्यते, किञ्चित् पाठान्तरमपि तत्रास्ति । मन्ये, तत्रान्यान्यपि स्युः पाठान्तराण्येवंविधानि, परं तस्यानुपलब्धिवशात् पाठशोधनादौ न कृतस्तदुपयोगः ।

Catalogus Catalogorum इत्यत्र ऑफ्रेक्टमहोदयेन ( Aufrecht ) शशिदेवरचिताया व्याख्यानप्रक्रियायाः किञ्चिद् विवरणमुपन्यस्तम् । तत्र पं० काशीनाथकुण्टेमहोदयेन प्रसारितं संस्कृतहस्तलेखसूचनाख्यं पुस्तकं सन्दर्भितम् । तदनुपलब्ध्याऽधिकं वक्तुं न शक्यते । Albiruni's India ग्रन्थे ( १/१३५ ) Dr. Edward C. Sachow महोदयेन शशिदेवकृता शशिदेववृत्तिरुल्लिखिता । सा च वृत्तिर्व्याख्यानप्रक्रियातो भिन्नैव स्यादिति मन्ये ।

व्याख्यानप्रक्रियाया आधारः 'शशिप्रभारूपन्यास[1]' इत्याख्यं ग्रन्थकारीयमेव ग्रन्थान्तरमस्ति । शशिप्रभारूपन्यासो '[2]रूपन्यास-शशिप्रभा[3]' इति नामान्तरद्वयेनापि स्मृतः स्वयमेव ग्रन्थकारेण । शशिप्रभान्यासस्य स्वरूपादिकं विशेषेण वक्तुमशक्यं तदनुपलब्धिवशात् । एवं च तदीयाधारभूतग्रन्थविषयोत्कर्षादिविचारोऽपि न मदीयवाग्व्यवहारविषय इति स्फुटमवधेयम् । मन्ये-हस्तलिखितग्रन्थागारे क्वचिद् रक्षितः स ग्रन्थोऽवश्यमधिगततत्त्वेन केनचिद् विदुषा प्राकाश्यमुपनयेदिति । तथापि प्रसङ्गात् तत्र शब्दानुशासनसम्बन्धादीनां केषांचिद् विषयाणां प्रवर्तते विचारणेत्यत्र ग्रन्थकारोक्तान्येव पञ्चषाणि वचनानि सन्ति पाठकैर्मननीयानि ।

तथाहि—

शब्दशासनसंबन्धस्तत्रोक्तो बहुधा मया ।
शशिप्रभारूपन्यासे प्रकृतं प्रवदाम्यतः ॥ ( १।२० )
अधिकाराः षोढा प्रोक्ता व्याख्या तेषां मया स्फुटा ।
रूपन्यासे स्ववृत्तौ तु प्रसङ्गादिह दृश्यते ॥ ( ३।२६ )
नित्यानित्यविभागेन समासाः षड् ये मया ।
शशिप्रभायां व्याख्यातास्तेषां भेदः प्रदर्श्यते ॥ ( ५।१७ )

---

१. शब्दशासनसम्बन्धस्तत्रोक्तो बहुधा मया ।
शशिप्रभारूपन्यासे प्रकृतं प्रवदाम्यतः ॥ ( १।२० )

२. रूपन्यासे स्ववृत्तौ तु ( ३।२६ ) ।

३. शशिप्रभायां व्याख्याताः ( ५।१७ ) । शशिप्रभायां विख्याताः ( ५।२७; ७।२९ ) । शशिप्रभानुसारेण ( ८।६५ ) ।

शशिप्रभायां विख्याताः समासाः कारकाणि च ।
तेषामुद्देश्यलेशोऽयं भेदानां दर्शितोऽधुना ।। ( ५।२७ )
अतीतो ह्यस्तनः प्रोक्त एष्यच्च श्वस्तनो मतः ।
शशिप्रभायां विख्याताः कालाः सर्वे मया स्फुटाः ।। ( ७।२९ )
शशिप्रभानुसारेण शशिदेवोऽन्वशंसयत् ।
शिष्याणां शब्दसिद्ध्यर्थं व्याख्यानप्रक्रियामिमाम् ।। ( ८।६५ ) इति ।

व्याख्यानप्रक्रियायां त एव विषयाः सलक्षणोदाहरणभेदैः संक्षेपेण विवेचिताः, येषामनुसरणमावश्यकता वा कस्मिंश्चिदपि व्याख्यानग्रन्थे प्रायेण प्रतिविषयविवेचनावसरे प्रतीयते । २५३ श्लोकपरिमाणेऽष्टपरिच्छेदात्मकेऽस्मिन् ग्रन्थे प्रथमपरिच्छेदस्तावत्-शास्त्रावताराभिधानकः, तत्र संबन्ध-प्रयोजन-क्रिया-शब्दादीन् पदार्थान् विवेचयता ग्रन्थकारेण धर्मार्थकाममोक्षाख्यपुरुषार्थ-चतुष्टयस्य कारणभूतानां साधुशब्दानामन्वाख्यानार्थं भगवता कार्त्तिकेयेन कलापव्याकरणं निर्मितमिति कण्ठत उक्तम् ( १।१४ ), तेन गम्यते-कलापव्याकरणप्रतिपादितान् विषयानुद्दिश्य प्रामुख्येण ग्रन्थोऽयं प्रणीतः शशिदेवेनेति । अत्र प्रमाणाय सन्ति केचिद् विषयाः । तथाहि —

१. 'भृजादि–दृगादि–मुहादि–अन्यादि–भादि–पूर्वादि' ( ६। ६ १६ ) गणानां नामनिर्देशः, प्रायेण परिसंख्यातधातुसंख्यासाम्यं च ।

२. 'भू-स्त्री' शब्दयोर्धातुवद्भावः ( ७।३२ ) ।

३. जुहोत्यादिप्रयोगस्य कृते ह्वादिशब्दस्य व्यवहारः ( ७।३२ ) । कातन्त्रीयशब्दानुशासने ह्वादिशब्देन जुहोत्यादिर्व्यवह्रियते ।

४. 'अपि-वा' प्रभृतिशब्दानां विपर्यासेनोपन्यासो यत्र क्रियते तत्र फलविशेषाभिधानं किञ्चिद् भवति तात्पर्यम् ( ८।३५ ) । कातन्त्रे एतद्विषयकः संकेतो द्रष्टव्यः श्लोके एकस्मिन्—

वाशब्दैश्चापिशब्दैर्वा सूत्राणां चालनैस्तथा ।
एभिर्येऽत्र न सिध्यन्ति ते साध्या लोकसम्मताः ।।
( कलापचन्द्रः १।२३ )

५. प्रथमाविभक्त्या कार्यस्य निर्देशः ( ८।४० ) ।

कातन्त्रे प्रथमयैव विभक्त्या कार्यनिर्देशो दृश्यते—"समानः सवर्णे दीर्घीभवति परश्च लोपम्, अवर्ण इवर्णे ए" ( कात० १।२।१,२ ) इत्यादि ।

अन्तिमेऽष्टमे परिच्छेदे एका कारिका उद्ध्रियते—"सुप्तिङ्ङुपग्रहलिङ्गनराणाम्" इत्यादि । कातन्त्रे सुप्तिङ्च्प्रभृतयः संज्ञा न दृश्यन्ते । एतेन न केवलं कातन्त्रस्य, किं च तदितरस्यापि व्याकरणस्य विषया इह समावेशिता इत्यापाततः कश्चिद् वक्तुं प्रभवेन्नाम । वस्तुतस्तु पाणिनीयादिव्याकरणान्तरेषु प्रसिद्धानि वचनानि वैयाकरणनिकाये प्रसिद्धिवशादिहापि समाहृतानि ग्रन्थकारेणेति साम्प्रतमुच्यते । एतत्ग्रन्थवर्णितविषयानुसारेण कातन्त्रव्याकरणस्यानुसन्धानेन किञ्चित्तथ्यमवश्यं प्रस्फुटिततरं स्यादित्याशास्यते ।

ग्रन्थप्रकरणानुक्रमं वर्णिता विषयाः—

१. शास्त्रावतारसम्वन्धः । २. प्रकरणसम्वन्धः । ३. सूत्रसम्वन्धः । ४. व्याख्यान-सम्वन्धः । ५. कारकसमासावतारः । ६. गणावतारः । ७. लक्षणावतारः । ८. प्रकीर्णश्चेति ।

प्रसङ्गतः सूत्रेषु दर्शिताः षड्विंशतिर्न्यायाः, अध्ययनस्य गुणा दोषाश्चोदीरिताः । सप्तमे लक्षणावताराख्ये परिच्छेदे 'वृत्ति-वाक्य-न्यास-टीका-भाष्य' प्रभृतीनां पारिभाषिकशब्दानां कृतानि लक्षणानि बुधैरवश्यमवधारणीयानि ।

वर्णितेषु विषयेषु त्रयो विषया ईदृशाः सन्ति, येषां विज्ञानाय विधानाय च कश्चिद् यत्नविशेष आस्थेय एवेति ग्रन्थकारनिर्देशो मादृशां कृते परमो हितावहः प्रतिभाति । तथाहि—

१. अर्थावबोधकः शब्दः संस्कारः शब्दलक्षणः ।
तस्माच्छब्दस्य संस्कारे यत्नः कार्यो बुधैः सदा ॥ (१।१७)

२. सूत्रं योनिरिहार्थानां सर्वं सूत्रेष्ववस्थितम् ।
तस्मात् सूत्रविचारेषु यत्नः कार्यो विचक्षणैः ॥ (३।१)

३. पदसिद्धौ तु सिद्धिः स्यादर्थस्य नियता सदा ।
ततः पदविधावादौ यत्नः कार्यो विचक्षणैः ॥ (४।१५)

एतेन संस्कारस्य = शब्दे प्रकृतिप्रत्ययादिनिर्देशस्य, सूत्रविचारस्य = उत्सर्गापवादा-नुक्तानुवृत्तिप्रभृतिप्रकारैः सूत्रार्थप्रकृत्यादिविचारस्य, पदविधेः = प्रकृतिप्रत्ययादिनिर्देशपुरस्सरं पदसिद्धेरस्ति किञ्चिद् वैशिष्ट्यं व्याकरणे, यदनुभूयते तदनुशीलनानुध्यानाभ्यासपरैर्बुधैः शाब्दिकाचार्यैः प्रतिपदम् ।

ग्रन्थेऽस्मिन् शब्दब्रह्म—अपादान—सम्बन्धादिविषये काश्चित् प्रसिद्धा वाक्यपदीयकारिका अपि दृश्यन्ते, तत्र तदीयमेवाभिमतमिदं ग्रन्थकारस्येति शक्यते वक्तुम् । एवं शब्दाभिव्यक्ति-विषये शिक्षावचनानि कानिचिच्च कातन्त्रवाङ्मये पठितान्यपि समुपलभ्यन्ते । तत्राप्युक्तैवाव-धारणा फलति ।

यद्यपि सरस्वतीभवने सुरक्षिते व्याख्यानप्रक्रियाया हस्तलेखे वर्तन्ते केचिदपपाठा अपि, तथापि तेषां शोधनाय कश्चिद् यत्न आस्थितो मया मूलमनुसन्दधता । तेन च नोन्मूलिता ग्रन्थ-कारीयदृगिति साधु सम्भावयामि । बहुत्र हस्तलेखेऽस्थाने दृष्टमनुस्वारादिकं संशोध्यैव पाठो मूले मया उपन्यस्तः, लिपिकारस्याज्ञानवशात् प्रमादवशाद्वा तत् स्खलनं सम्भावयता । प्रत्येकं परिच्छेदान्ते श्लोकसंख्या ग्रन्थस्य तदीयप्रकरणानां च परिमाणज्ञानाय प्रस्तुता ।



# विषयानुक्रमणिका

## प्रथमः परिच्छेदः

### ( शास्त्रावतारसम्बन्धः )



## द्वितीयः परिच्छेदः

### ( प्रकरणसम्बन्धः )

## तृतीयः परिच्छेदः

(सूत्रसम्बन्धः)



## चतुर्थः परिच्छेदः

(व्याख्यानसम्बन्धः)

## पञ्चमः परिच्छेदः

( कारकसमासावतारः )



## षष्ठः परिच्छेदः

( गणावतारः )



## सप्तमः परिच्छेदः

( लक्षणावतारः )

## अष्टमः परिच्छेदः

### ( प्रकीर्णः )

• • •

# व्याख्यानप्रक्रिया

## ( शशिदेवरचिता )

सम्पादकः—डॉ० जानकीप्रसादद्विवेदः

अनुसन्धानसहायकः

### शास्त्रावतारसम्बन्धपरिच्छेदः प्रथमः

ॐ श्रीवाग्देव्यै नमः ।

ॐ अथ व्याख्यानप्रक्रिया लिख्यते ।

ॐ प्रणम्य शंकरं शश्वच्छशिदेवः करोत्यथ ।
शिष्याणां शब्दशास्त्रेस्मिन् व्याख्यानप्रक्रियामिमाम् ॥१॥
क्वचिदात्मीयवक्त्रैस्तु क्वचिदन्यकृतैर्यतः ।
व्युत्पादनेस्तु तात्पर्यं तेषां मे मनसि स्थितम् ॥२॥
सिद्धिः श्रोतृप्रवृत्तीनां [1]संबंधकथनाद् यतः ।
तस्मात् सर्वेषु शास्त्रेषु संबंधः पूर्वमुच्यते ॥३॥
सिद्धार्थं ज्ञानसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः [1]संबंधः सप्रयोजनः ॥४॥
[1]संबंधमादौ विन्यस्य व्याख्याय तदनंन्तरम् ।
तस्मात्तु पदविच्छेदं ततः सूत्रार्थमादिशेत् ॥५॥
शास्त्रे तथा प्रकर्णे[2] सूत्रे व्याख्याविधावपि ।
चतुर्ष्वेतेषु [1]संबंधः कथ्यते शब्दपारगैः ॥६॥
संबंध्यंते[3] सदार्थानामन्योन्यं यत्र वृत्तयः ।
कार्यकार्णभावेन[4] [1]संबंधः स उदाहृतः ॥७॥
निमित्तं कारणं प्रोक्तं कार्यं नैमित्तिकं ततः ।
तयोः परस्परापेक्षा क्रिया भाव उदाहृतः ॥८॥
उपोद्घातस्तु संबंधो निमित्तं च प्रयोजनम् ।
कारणं हेतुरित्युक्तः शब्दानां तेर्थवाचकाः ॥९॥

---

१. 'बन्ध' शब्दे "नश्चापदान्तस्य झलि" ( पा० ८।३।३४ ) इत्यनेन नकारस्यानुस्वारे, तस्य च "अनुस्वारस्य ययि परसवर्णः" ( पा० ८।४।५८ ) इति परसवर्णेन नकारे कृते 'संबन्धः' इत्येव साधु ।

२. प्रकरणे इति साधु ।

३. टि० १ अनुसारेण "अनिदितां हल उपधायाः क्ङिति" ( पा० ६।४।२४ ) इति 'बन्ध' धातोर्नकारस्य लोपे च कृते 'संबध्यन्ते' इति साधु ।

४. 'कारण' इति शुद्धः पाठः ।

शासनाच्छास्त्रमित्युक्तं तापनात्तत्त्वमुच्यते ।
लक्षणाल्लक्षणं प्रोक्तं विधानाद्विधिरुच्यते ॥१०।
अधिशब्दोधिकारार्थे तथायस्त्वनाय[1] च ।
अर्था यस्मात्ततो यान्ति[2] तस्मादध्याय उच्यते ॥११।
आकाशवायुप्रभवः शरीरात् समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥१२।
तमक्षरं ब्रह्म परं पवित्रं गुहाशयं सम्यगुशन्ति विप्राः ।
स श्रेयसा चाभ्युदयेन चैव सम्यक् प्रयुक्तः पुरुषं पुनन्ति[3] ॥१३।
धर्मार्थकाममोक्षाणां साधुशब्दस्तु कारणम् ।
कार्त्तिकेयेन तेनेदं निर्मितं शब्दशासनम् ॥ ४।
छान्दसाः स्वल्पमतयः शास्त्रान्तररताश्च ये ।
ईश्वरा वाच्यनिरतास्तथालस्ययुताश्च ये ॥१५।
वणिक्[4] तृष्णादिसंसक्ता लोकयात्रादिषु स्थिताः ।
तेषां क्षिप्रं प्रबोधार्थमनेकार्थं कलापकम् ॥१६।
अर्थावबोधकः शब्दः संस्कारः शब्दलक्षणः ।
तस्मात् शब्दस्य संस्कारे यत्नः कार्यो बुधैः सदा ॥१७।
अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
आवर्ततेर्थरूपेण प्रक्रिया जगतो यतः ॥१८।
शब्दानुशासनं शास्त्रं दृष्टादृष्टफलप्रदम् ।
अध्येतव्यमिदं तस्मात् साधुशब्दबुभुत्सुभिः ॥१९।
शब्दशासनसम्बन्धस्तत्रोक्तो बहुधा मया ।
शशिप्रभारूपन्यासे प्रकृतं प्रवदाम्यतः ॥२०।
शब्दोऽक्षरः स्वरो घोषस्तथारावो रवो ध्वनिः ।
कूटः स्फोटो विसर्गश्च शब्दार्थो दशलक्षणः ॥२१।
क्रियाशब्दास्तु विज्ञेया गुणशब्दास्तथा परे ।
जातिशब्दाः स्मृतास्त्वन्ये तथा यादृच्छिकाः परे ॥२२।
पचत्याद्याः क्रियाशब्दाः शुक्लाद्या गुणसंज्ञकाः ।
ब्राह्मणाद्यास्तु जात्युक्ता डित्थाद्यास्तु यदृच्छया ॥२३।

---

१. गत्यर्थकस्य 'इण्' धातोः, 'अय' धातोर्वा भावे ल्युटि ( ल्युट् च—पा० ३।३।११५ ) 'अयन' इति रूपम्, तेन 'अयनाय' इति साधु ।
२. 'इण्' धातोर्घञि 'आय' इति रूपम्, तेन इण्धातोः प्रथमपुरुष—बहुवचनान्तं 'यन्ति' इति शब्दरूपं साधु ।
३. शब्दपरामर्शकस्य तदिति सर्वनाम्नः पुंल्लिङ्ग एकवचनान्तः 'सः' शब्दोऽत्र कर्ता, तेन 'पुनाति' इत्येकवचनान्तं क्रियापदं साधु ।
४. 'वणिजः' इति बहुवचनं साधु ।

क्रियात्मा कारकात्मा च शब्दो द्विविध उच्यते ।
कर्माधिकरणं प्रोक्तं धात्वर्थस्तु क्रिया मता ॥२४।

यच्च सिद्धमसिद्धं वा [1]साध्यत्वेनायदीप्सितम् ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥२५।

प्रधानो व्यञ्जको नित्यमप्रधानो गुणः स्मृतः ।
स्वेच्छया यत्र संकेतो भवेद् याद‍ृच्छिकस्तु सः ॥२६।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिग्राह्या गोत्रं च चरणैः सह ॥२७।

एका नित्या निरवयवा स्वपिण्डेषु पृथक् स्थिता ।
जातिः समाप्ता प्रत्येकं जलाधारेष्विवांशुमान् ॥२८।

ॐ इति व्याख्यानप्रक्रियायां शास्त्रावतारसम्बन्धपरिच्छेदः प्रथमः (१) ।

● ● ●

## प्रकरणसम्बन्धपरिच्छेदो द्वितीयः

ॐ प्रक्रमः प्रकृतार्थानां शब्दानां यत्र दृश्यते ।
संज्ञादीनां तु सम्बन्धः प्रोक्तं प्रकरणं तु तत् ॥१।

वाक्येनैकेन यत्र स्याद् बहूनां ग्रहणं स्फुटम् ।
लाघवात् कार्यसिद्धयर्थं संज्ञाप्रकरणम् मतम् ॥२।

[2]सम्यक् पदस्य समयः सूत्रनिर्देशनिर्दिष्टः ।
संबन्धस्त्वस्य कीदृशः .... .... .... .... ... ॥३।

सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत् प्रयोजनं नोक्तं तावत्तत्त्वे न गृह्यते ॥४।

किं प्रयोजनमारम्भो का निवृत्तिरिह स्थिता ।
सूत्रार्थस्त्वथ कोत्र स्यात्तदर्थमिदमुच्यते ॥५।

इति प्रकरणसम्बन्धो द्वितीयः परिच्छेदः ( २ ) ।

श्लोकसंख्या २८+५ = ३३

● ● ●

---

१. वाक्यपदीयादौ 'साध्यत्वेनाभिधीयते' इति पाठो दृश्यते, स एव साधीयान् प्रतीयते ।

१. श्लोकस्यास्य पादांशो हस्तलेखे न पठ्यते, तेन संज्ञाप्रकरणेऽभिप्रेतस्य सम्बन्धस्य स्वरूपादिकमवगन्तुं न सुशकम् ।

## सूत्रसम्बन्धपरिच्छेदस्तृतीयः

ॐ सूत्रं योनिरिहार्थानां सर्वं सूत्रेष्ववस्थितम् ।
तस्मात् सूत्रविचारेषु यत्नः कार्यो विचक्षणैः ॥१।
सूत्रस्य सूचनं सम्यक् सूत्रे चार्थमनेकदा ।
बहुन्यायसमायुक्तं सूत्रमाहुर्मनीषिणः ॥२।
अल्पाक्षरमसन्दिग्धं सारवद् गूढनिर्णयम् ।
निर्दोषहेतुमत्तथ्यं सूत्रं षाड्गुण्यलक्षणम् ॥३।
षाड्गुण्यालङ्कृतं योज्यं पञ्चदोषविवर्जितम् ।
बह्वर्थसूचनं सूत्रं व्याख्याषट्कसमायुतम् ॥४।
विसंध्यव्यापकं चैव गुरवतिव्यापकं[1] तथा ।
पुनरुक्तपदार्थं च पञ्च दोषान् न योजयेत् ॥५।
क्वचिद् घुणाक्षरन्यायः क्वचित् सिंहावलोकनम् ।
काकतालीयवन्न्यायः क्वचिद् भेकगतिस्तथा ॥६।
अरघट्टघटीन्यायो नष्टाश्वरथदग्धवत् ।
वृद्धकुमारी वृद्धवन्नदीस्रोतोगतिस्तथा ॥७।
क्वचित् पर्णक्रिमिन्यायः क्वचित् पर्जन्यवद् विधिः ।
आधाराधेयवन्न्यायः क्वचिद् वातालिवद् गतिः ॥८।
बीजाङ्कुरादिवन्न्यायो घटपाषाणवत् क्वचित् ।
पङ्ग्वन्धगतिवन्न्यायो रज्जुकोलकवत् क्वचित् ॥९।
दण्डापूपिकवन्न्यायः क्वचिदागन्तुको यथा ।
शलाकाञ्जमवन्न्यायः[2] छत्रातपनतिः क्वचित् ॥१०।
[3]अनिनकुलवन्न्यायः छायातपयुतिस्तथा ।
काकाक्षिदर्शनन्यायः क्वचिदर्थादिलक्षणः ॥११।
करामलकवन्न्यायः क्वचिद् यष्टिकपोतवत् ।
एवम्प्रकारा न्यायास्तु सूत्रेषु बहुधा स्थिताः ॥१२।
तेषां प्रदर्शनेनालं प्रकृतं प्रवदाम्यहम् ।
अधिकारोथ संज्ञाथ परिभाषा विधिस्तथा ॥१३।
नियमः प्रतिषेधश्च षड्विधं सूत्रलक्षणम् ।
अपरोच्चारिता लघ्वी निर्देशान्यत्र संमता ॥१४।
आवर्तिनी च संज्ञा स्याच्चतुर्भिर्लक्षणैर्युता ।

---

१. छन्दोलक्षणवशात्, अर्थसङ्गतिवशात्, पञ्चसंख्यासमन्वयवशाच्च 'गुरु+अति' इत्यत्र सत्यां संहितायां 'गुर्वतिव्यापकम्' इति साधु ।

२. शलाकया सह अञ्जनस्य दृश्यते सम्बन्धस्तदुपयोगविधाविति 'शलाकाञ्जन' इति शुद्धः पाठः ।

३. सहजवैरनिदर्शने अहिनकुलयोः प्रसिद्धिरस्ति लोके तेन 'अहिनकुलवत्' इति सङ्गतः पाठः ।

नैमित्तिकी क्वचित् संज्ञा क्वचित् स्यात् पारिभाषिकी ॥१५॥
नैमित्तिकी मयूरादौ डित्थादौ पारिभाषिकी ।
अर्थनिर्वन्धना[1] या तु स्मृता सा पारिभाषिकी ॥१६॥
संज्ञा स्याद् वाचकः शब्दः संज्ञी वाच्योऽर्थ उच्यते ।
विशिष्येते च ते येन तद् विशेषणमिष्यते ॥१७॥
गुणी विशेष इत्युक्तो गुणस्तस्य विशेषणम् ।
तयोः परस्परापेक्षा सम्बन्धो बहुधा स्मृतः ॥१८॥
सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रियातश्च[2] सोऽसत्त्वप्रकृतिर्गुणः ॥१९॥
एकदेशस्थिता शास्त्रे परिभाषयते तु या ।
प्रदीपस्तु यथा वेश्म परिभाषा तु सा स्मृता ॥२०॥
प्रत्यादेर्विधानस्य[3] विधानाद् विधिरुच्यते ।
प्राप्तस्य तस्य यो रोद्धा प्रतिषेधः स उच्यते ॥२१॥
प्रसज्यः पर्युदासो वा द्वयोरेव प्रधानता ।
प्रतिषेधः प्रसज्यस्य पयुर्दासो विधिर्मतः ॥२२॥
विधिरेकत्र चाप्तव्यो निषेधोन्यत्र दृश्यते ।
पुनर्विधानमेकत्र नियमः स उदाहृतः ॥२३॥
नदीस्रोतःप्रवाहेन[4] स्त्रावधेरनिर्वर्तितः ।
प्रकृत्या प्रत्ययेनाप्यधिकारेण[5] न संज्ञया ॥२४॥
अधिकारिगतिर्मृष्टा[6] क्रमेणास्या उदाहृतिः ।
धातोस्तु प्रत्ययः कालश्चतुर्थोयं तथोच्यते ॥२५॥
विभक्तिसंज्ञासूत्रेण तथान्या बहुधोच्यते ।
क्वचिद् गोयूथवन्न्यायात् क्वचिन्माण्डूक……हृत्[7] ॥२६॥

---

१. निरो निसः वा उपसर्गस्य नितरां निःशेषो वेत्यर्थे प्रयोगाभावादत्र च तस्यार्थस्यैवेप्सितत्वाद 'निबन्धना' इति साधु ।

२. 'आधेयश्चाक्रियाजश्च' इति पाठः सङ्गतः ।

३. 'प्रत्ययादे०' इति पाठः शुद्धश्छन्दोलक्षणवशादर्थसंगतिवशाच्च ।

४. अट्कुप्वाङ्नुम्व्यवायेऽपि ( पा० ८।४।२ ) इति सूत्रेण णत्वे प्रवर्तमाने 'प्रवाहेण' इति पाठः शुद्धः ।

५. 'च' इति सङ्गतः पाठः ।

६. "धातोः—प्रत्ययः" ( पा९ ३।१।९१, १ ) इत्यादीनि अधिकारसूत्राणि यानीहोदाह्रियन्ते, एतेन 'अधिकारगतिः' इति समीचीनः पाठः ।

७ मण्डूकगतिर्मण्डूकप्लुतिर्वा प्रसिद्धाऽधिकारविषये व्याकरणशास्त्रे, तद्वाचकः कश्चिदत्र शब्दः स्यादित्यनुमीयते । हस्तलेखेऽत्यन्तमस्पष्टः स लेख इति त्यक्तम् ।

बद्धादारुवदन्यत्र तिलतण्डुलवत् क्वचित् ।
अधिकारि:[1] षोढा प्रोक्ता व्याख्या तेषां मया स्फुटा ।
रूपन्यासे स्ववृत्तौ तु प्रसंगादिह दृश्यते ॥२७॥
धर्माणामन्यदीयानामध्यारोपोऽन्यवस्तुनि ।
अप्राप्तानां तु वतिना ह्यतिदेशः स उच्यते ॥२८॥
अविद्यमानैर्धर्मैस्तु तद्भावो यत्र दृश्यते ।
प्रसज्यमानो वाक्येन सोऽप्यतिदेश उच्यते ॥२९॥
उत्सर्गश्चापवादश्च परिसंख्यान एव च ।
पुनःप्रसव इत्युक्तमन्यत् सूत्रस्य लक्षणम् ॥३०॥
सामान्येन विधानं तु यदादौ प्रकृतं भवेत् ।
उत्सर्गः स तु विज्ञेयो यथा[2] कर्मणो विधिः ॥३१॥
विशेषस्थापनायेह यदन्यद् वाक्यमुच्यते ।
सोऽपवादस्तु विज्ञेयो यथातोऽनुपसर्गास्तु[3] ॥३२॥
सामान्योक्तो विधिः पूर्वं उत्सर्गश्च स उच्यते ।
विशेषोक्तो विधिः पश्चादपवादो विधीयते ॥३३॥
सामान्यस्य विधिर्यत्र परिच्छेदक्रियापदा ।
उच्यते परिसंख्या सा राव्यादिषु यथेड्विधौ ॥३४॥
सामान्यविहितस्यापि प्रतिषेधस्तु यः कृतः ।
पुनर्विधानं तस्यैव पुनःप्रसव उच्यते ॥३६॥

ॐ सूत्रसंबन्धस्तृतीयः परिच्छेदः ( ३ ) ।

श्लोकसंख्या ३३ + ३५ = ६८

● ● ●

## अथ व्याख्यानपरिच्छेदश्चतुर्थः

पदं चैव पदार्थश्च क्रमश्च गुरुलाघवम् ।
समासविस्तरो वापि पर्यायवचनं तथा ॥१॥
अपेक्षापरिहारश्च दृश्यन्ते यत्र सर्वदा ।
सद्व्याख्या सा बुधैः प्रोक्ताऽप्यन्यथाऽसत्प्रलापिता ॥२॥

---

१. 'अधिकारः' इति शुद्धः पाठः, तस्यैव चतुर्विधत्वं षड्विधत्वं वा व्याकरणे प्रसिद्धम् ।

२. 'तद्यथा कर्मणो विधिः, यथात्र कर्मण्यण्विधिः' इति वा पाठेनार्थसंगतिः सुगमा स्यात्, "कर्मण्यण्" ( पा० ३।२।१ ) इति सूत्रेण सह साक्षादन्वयसम्भवात् ।

३. 'यथातोऽनुपसर्गे कः' इति सुबोधः पाठः पाणिनीयसूत्रेण "आतोऽनुपसर्गे कः" ( ३।२।३ ) इत्यनेनान्वयसम्बन्धात् ।

सूत्राश्च[1] पदार्थश्च हेत्वर्थश्च क्रमस्तथा ।
विनियोगोऽथ विन्यासो व्याख्या तन्त्रस्य षड्विधा ॥३।
उपोद्घातः पदं चैव पदार्थः पदविग्रहः ।
चालना प्रत्यवस्था च व्याख्या तन्त्रस्य षड्विधा ॥४।
आरम्भो वार्तिसम्बन्धः सूत्रार्थस्तद्विशेषणम् ।
चोदना परिहारश्च व्याख्या सूत्रस्य षड्विधा ॥५।
निपातनाद् योगविभागदर्शनाद् गुरूपदेशादनुवर्तनादपि ।
स्वतन्त्रवृद्धेः परतन्त्रयोजनाद् भवेत् सदा श्लेषपदैस्तु कल्पिता ॥६।
निपातनानुवृत्तिभ्यां श्लेषैश्च ज्ञापकैस्तथा ।
योगानां च विभागेन पञ्चधा विधिसाधनम् ॥७।
सापेक्षाणां तु वाक्यानां पश्चादनुवर्तनम्[2] ।
इङ्गितेनापि कार्यस्य सानुवृत्तिरुदाहृता ॥८।
विभक्तिवचने सम्यक् पदस्य च ससन्धयः ।
निर्दिश्यन्ते सदा यत्र स निर्देशो बुधैः स्मृतः ॥९।
व्याख्येयं प्रागुपन्यस्य पश्चात् कुर्यात् पदानि च ।
तेषां तु विद्यते पश्चादितिशब्दोऽर्थवाचकः ॥१०।
इतिशब्दो विवक्षार्थैः क्रियते बहुधा बुधैः ।
क्वचित् स्वरूपादर्थार्थैः क्वचिदर्थात् स्वरूपगः ॥११।
स्वरूपाणां प्रचाल्यर्थे सा चाल्यापिशलेर्मता ।
पदानामितिशब्दस्तु पश्चाद् योज्यः सदा बुधैः ॥१२।
आदौ कुर्यात् पदच्छेदं समासं तदनन्तरम् ।
समासात् सूत्रसन्धानं ततः सूत्रार्थमादिशेत् ॥१३।
अर्थप्रधानमैन्द्राः पदं विभक्त्यन्तमाहुरापिशलाः ।
ब्रुवतेऽथ पाणिनीयाः पदं सुबन्तं तिङन्तं च ॥१४।
पदसिद्धौ तु सिद्धिः स्यादर्थस्य नियता तत—
स्ततः पदविधावादौ यत्नः कार्यो विचक्षणैः ॥१५।
मधुनस्तु यथा पुष्पं द्रव्याणामवनिर्यथा ।
यथाग्नेरिन्धनं योनिस्तथाऽर्थस्य पदं स्मृतम् ॥१६।
यस्मिन् भूश्चरिते[3] शब्दे यदा योऽर्थः प्रतीयते ।
तमाहुरर्थं शब्दस्य नान्यत्तस्य तु लक्षणम् ॥१७।
नित्यानित्यविभागेन समासो द्विविधो मतः ।
कुम्भकारेति नित्यः स्याद् राजपत्न्याद्यनित्यता ॥१८।

---

१. सूत्रार्थश्चेति युक्तः पाठः ।
२. छन्दोलक्षणानुसारेणाक्षरपूर्तये 'पश्चाच्चैवानुवर्तनम्' इति समुचितः पाठः ।
३. 'यस्मिन्नुच्चरिते' इति पाठेनान्वयोऽर्थश्च सङ्गतः प्रतिभातीति स एव पाठः सङ्गतः ।

विभक्तिर्लुप्यते यत्र तदर्थस्तु प्रतीयते ।
बहूनामेकवत्त्वं तु समासः[1] उदाहृतः ॥१९।
पदयोस्तु पदानां वा विभक्तिर्यत्र लुप्यते ।
समासः स तु विज्ञेयः शक्तः पदविधौ तु यः ॥२०।
एकद्विबहुषूक्तीनां कर्मादीनां तु या स्थिता ।
विभागं कुरुतेऽर्थस्य सा विभक्तिरुदाहृता ॥२१।
कर्मादिकारकैर्युक्ता क्वचित् सोपपदाऽपि सा ।
शिवायार्घ्यं प्रयच्छन्ति नमस्तेभ्यो द्विधा स्मृतम् ॥२२।
एकार्थपदसमूहो[2] वाक्यं प्रोक्तं मनीषिभिः ।
विशिष्टार्थाभिधानस्य समर्थः सर्वदा यतः ॥२३।
प्रतिज्ञा-हेतु-दृष्टान्तैरुपसंहार-नैगमैः ।
अङ्गैः पञ्चभिरुद्दिष्टमन्यद् वाक्यं मनीषिभिः ॥२४।
विस्तरोक्तं न तद्वाक्यं समासबहुलं तथा ।
विस्तरोक्तं मतिं हन्ति समासोक्तं न गृह्यते ॥२५।
समासविस्तरौ हित्वा वक्तव्यं यद् विवक्षितम् ।
लाघवार्थं श्रुतार्थं च बुद्ध्यर्थं चाल्पमेधसाम् ॥२६।
शिरोऽक्षिभ्रुवोष्ठवक्त्रैर्व्याख्यामभिनयेत् तथा ।
हस्तद्वयाङ्गुलिभ्यां च शिष्याणां नटवद्गुरुः ॥२७।
संवीताः संयताः शिष्या बद्धपद्मासना भुवि ।
व्याख्याने दत्तचित्तास्तु तेषां शास्त्रं यथार्थदम् ॥२८।
अट्चालको[3] निराधारो ग्रन्थभीरुरसूयकः ।
निद्रालुरथ तन्द्रालुः प्रलपन्नथ सन्नयः ॥
मन्दबुद्धिरनभ्यासी न शिष्यः शास्त्रभाग् भवेत् ॥२९।
अनर्थमर्थान्तरमर्थनाशं [4]वृत्ताश्च भङ्गं चलितं च सन्धेः ।
असंस्थितार्थं ह्यसमासयुक्तं वदन्ति चाष्टादश[5] पाठदोषान् ॥३०।

---

१. 'स' इति पदान्तरसंयोजनेन पाठे छन्दोलक्षणे च भवत्यर्थसङ्गतिरिति 'समासः स उदाहृतः' इति साधु ।

२. 'षष्ठमक्षरं दीर्घं भवेत्' इत्यनुष्टुप्छन्दोलक्षणानुसारेण 'सन्दोहः' इति शोभनः पाठः प्रतीयते ।

३. अट्टालकः, अपालक इति वा पाठेन कश्चित् पाठदोषो बुध्यते इति तयोरन्यतरः पाठः सार्थकः स्यात् ।

४. 'वृत्तस्य' इति पाठेन तस्य भङ्गपदेनान्वये स्याद् दोषात्रबोधः इति स एव पाठो रोचते ।

५. अत्र गणनया सप्तदशैव संख्या जायते 'अट्चालकः' इत्यतः समारभ्य 'ह्यसमासयुक्तम्' इत्यन्तं पाठे । एतेन 'वृत्ताश्च' इत्यत्र दोषबोधकं स्वतन्त्रं किञ्चित् पाठान्तरं कल्पनीयमिति मन्ये ।

माधुर्यमक्षरव्यक्तिः परिच्छेदस्तथाऽत्वरा ।
धैर्यं गुरुलघुत्वं च षडेते पाठका गुणाः ॥३१।
[1]स्फुटकर्णविशेषैर्वर्णशोभां तु सारां
गुरुलघुपदयुक्तां छन्दसा चावनिष्टाम्[2] ।
विबुधसदसि मध्ये स्वां कृतिं वा परेषाम्
पठति यदि सदाऽर्घ्यंस्त्वन्यथा सन् प्रलापी ॥३२।

इति व्याख्यानसम्बन्धश्चतुर्थः परिच्छेदः ( ४ ) ।
श्लोकसंख्या ६८ + ३२ = १००

●●●

## कारकसमासावतारः पञ्चमः परिच्छेदः

ॐ स्याद्यन्तैस्तु पदैर्वाच्यं कार्कं[3] शक्तिरूपकम् ।
आख्यातादिपदैर्वाच्याः क्रिया धात्वर्थदर्शिकाः ॥१।
स्वाश्रये समवेतानां तत्पदे वाश्रयान्तरे ।
क्रियाणामभिनिष्पत्तौ सामर्थ्यात् साधनं विदुः ॥२।
कार्कत्वं[4] स्मृतं शक्तेः न द्रव्यस्य कथंचन ।
यथा पचत्यादौ दारु यथा स्थाली पचत्यपि ॥३।
निर्वर्त्यं वा विकार्यं वा प्राप्यं वा स्यात् क्रियाफलम् ।
तद् दृष्टादृष्टसंस्कारे कर्मकर्तुर्यदीप्सितम् ॥४।
कारकैरव्यपेता या साध्यं साधयति क्रिया ।
तत् साधकतमं नाम करणं तेषु [3]कार्कम् ॥५।
प्रवृत्तौ च निवृत्तौ च कार्काणां[5] य ईश्वरः ।
अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कार्कम्[3] ॥६।
त्यागाङ्गं कर्मणाऽप्येव प्रेरकं चानुमत्य च ।
अनिराकर्तृ वा कर्तुः संप्रदानं तदुच्यते ॥७।
प्रजयाऽनुग्रहेणापि दानं यत्र विवक्षितम् ।
तत्रैव स्यादियं संज्ञा न जातु रजकादिषु ॥८।

---

१. प्रयत्नार्थकः 'करण' शब्दोऽत्र युक्तः प्रतिभाति ।

२. 'च वरिष्ठाम्' 'च विशिष्टाम्' इति वा पाठेऽर्थसङ्गतिः सम्पद्यत इति तदेव रोचते ।

३. 'कारकम्' इति पाठः समीचीनः ।

४. 'कारकत्वम्' इति साधु ।

५. 'कारकाणाम्' इति शुद्धः पाठः ।

क्रियां प्रति य आधारो धारणात् कर्तृकर्मणोः ।
करणादिक्रिया सा हि तदाऽधिकरणं स्मृतम् ॥९॥
अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेव तदावेशात् तदपादानसंज्ञितम् ॥१०॥
क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति ।
कर्तुः सुखकरं चैव कर्मकर्तेति तद् विदुः ॥११॥
प्रेषणाध्येषणाभ्यां च यः स्वतन्त्रस्य चोदकः ।
स कर्ता चैव हेतुश्च मुखोपचरितक्रियः ॥१२॥
सम्बन्धः [1]कार्केभ्योऽन्यः क्रियाकार्कपूर्वकः[2] ।
श्रुतायामश्रुतायां वा क्रियायामुपयुज्यते ॥१३॥
कर्म सप्तविधं प्रोक्तं द्विविधं करणं तु तैः ।
कर्ता पञ्चविधो नित्यः संप्रदानं त्रिधा स्मृतम् ॥१४॥
अप्रधानं[3] द्विधा चैवमधिकारो भवेच्चतुः ।
ईप्सितानीप्सिताद्यर्थैस्त्रयोविंशतिधा स्मृतम् ॥१५॥
साध्यात्तु [4]कार्कैरेतैः कालव्यक्तिकरी च या ।
मान्या प्रकृतिनिर्वृत्ता क्रिया धात्वर्थ उच्यते ॥१६॥
नित्यानित्यविभागेन समासाः षड् ये मया ।
शशिप्रभायां व्याख्यातास्तेषां भेदाः[5] प्रदर्श्यते ॥१७॥
तत्पुरुषोऽष्टधा प्रोक्तस्त्वष्टस्वपि विभक्तिषु ।
प्राधान्यं तस्य नित्यं स्यात् पूर्ववत्तु पदद्वये ॥१८॥
प्रकारैः षड्भिरेवं स्यात् समासः कर्मधारयः ।
पदद्वयेऽपि प्राधान्यं पूर्ववत्तस्य नान्यथा ॥१९॥
षड्विधोऽपि बहुव्रीहिर्द्विपदश्च बहुपदः ।
प्राधान्यं चान्यपदार्थे क्वचित् स्यात्तु पदद्वये ॥२०॥
द्विगुर्द्विधा समासः स्यादेकवच्चाप्यनेकधा ।
संख्यापूर्वो नित्यं[6] पदद्वयसमाहृतः ॥२१॥

---

१. कारकेभ्यो' इति पाठो युक्तः स्यात् ।
२. 'कारक' इति पाठे स्यादर्थसङ्गतिः ।
३. कर्म–करण–सम्प्रदानानन्तरम् अपादानस्य चर्चा स्याद् युक्ततरेति 'अपादानम्' इति पाठरूपं साधु ।
४. 'कारकैः' इति सार्थकः पाठः ।
५. 'प्रदर्श्यते' इत्येकवचनान्तक्रियायाः कर्मापि एकवचनान्तमेवोपादेयम्, तेन 'भेदः' इत्येकवचनान्तम् एव रूपं साधु ।
६. 'नित्य' शब्दः समासस्य भेदरूपेण पठितस्तेन 'नित्यः' इति पुंलिङ्गः पाठः सङ्गतः प्रतिभाति । छन्दोलक्षणानुसारेणास्मिन् पादेऽक्षरद्वयान्तरमपेक्ष्यते तेन 'संख्यापूर्वो नित्यस्तत्र' इत्येतादृशः पाठः साधुः स्यात् ।

उत्तरस्मिन् पदे तस्य प्राधान्यं सर्वदा स्मृतम् ।
पात्रादिर्वजितस्यास्य स्त्रीत्वमुक्तं विचक्षणैः ॥२२॥

द्वन्द्वश्चतुर्धा विज्ञेयः समाहारे समुच्चये ।
इतरेतरयोगे च स्मृतोऽन्वाचययोगतः ॥२३॥
पदार्थानां तु सर्वेषां प्राधान्यं तस्य दृश्यते ।
एकत्वं च विकल्पे च सर्वस्यैव हि सूरिभिः ॥२४॥
पदं प्रधानं पूर्वं स्यात् सोऽव्ययीभावसंज्ञकः ।
नामपूर्वोऽव्ययादिर्वा द्विधा प्रोक्तो मनीषिभिः ॥२५॥
नित्यानित्यविभागेन समासाः षट् तु ये स्थिताः ।
अष्टाविंशतिधा तेषां विभागोऽयं मयोदितः ॥२६॥
शशिप्रभायां विख्याताः समासाः कारकाणि च ।
[1]तेषामुद्दिश्यलेशोऽयं भेदानां दर्शितोऽधुना ॥२७॥

इति व्याख्यानप्रक्रियायां कारकसमासावतारः पञ्चमः परिच्छेदः ( ५ ) ।

श्लोकसंख्या १०० + २७ = १२७

● ● ●

## गणावतारः षष्ठः परिच्छेदः

ॐ जक्षि जागृ दरिद्राति[2] चकास्ति शास्तिरेव च ।
दीधीवेव्यी च विज्ञेयौ जक्षादिः सप्तको गणः ॥१॥
दरिद्राजागृदीधीनां ये चैकस्वरधातवः ।
ऊर्णोतेरप्यदन्तानां नानुबन्धो विधीयते ॥२॥
रोदितिः स्वपतिश्चैव श्वसतिः प्राणितिस्तथा ।
जक्षतिश्चैव विज्ञेयो रुदादिः पञ्चको गणः ॥३॥
यजिर्वपिर्वहिश्चैव वसिर्वेञ् तु पञ्चमः ।
व्येञा ह्वेञो वदिश्वश्च नवैते तु यजादयः ॥४॥
निष्ठा शन्तृङ्ङकश्चैव खलर्थश्च तृना सह ।
अव्ययं च णिनिश्चैव तेषां षष्ठी न विद्यते ॥५॥
भ्रस्जि[3] व्रश्चि यजिश्चैव सृजिमृजौ[4] तथा परौ ।
राजृ भ्राजृ च विज्ञेयो भ्रजादिः सप्तको गणः ॥६॥

---

१. 'तेषामुद्देश्यलेशोऽयम्' इति पाठोऽर्थवान् ।
२. सुब्विभक्त्यन्तेनात्र भाव्यम्, तेन 'दरिद्रातिश्चकास्तिः' इति पाठः सङ्गतः ।
३. अत्रापि सुबन्तः पाठः साधुः, तेन 'भ्रस्जिर्व्रश्चिर्यजिश्चैव' इति पठनीयम् ।
४. 'सृजिमृजी' इति द्विवचनान्तमीकारान्तं पदं साधु, पूर्वधातोरिक्प्रत्ययेन निर्देशादपरस्यापि धातोरिक्प्रत्ययान्तत्वेन सत्त्वात् ।

[1]भृशिदिदृश्यो सधृशिश्चैव दद्दगुलिक् तथैव च ।
दृशादित्वेन निर्दिष्टाः पञ्चैते शब्दकोविदैः ॥७।
पृथुं मृदुं भृशं चैव कृषं च दृढमेव च ।
परिपूर्वं व्रढं चैत्र षडेतान् रविधौ स्मरेत् ॥८।
दुहिस्पृही स्नहिश्चापि द्रुहिस्निही तथा परौ ।
मुहादित्वेन निर्दिष्टाः पञ्चैते शब्दकोविदैः ॥९।
अल्पोऽर्धः प्रथमश्चैव तयः कतिपयस्तथा ।
चरमश्च तथा नेमः स्वल्पादिः सप्तको गणः ॥१०।
अन्यदन्यतरश्चैव कतरः कतमस्तथा ।
इतरं पञ्चमं यत्र सोऽन्यादिः पञ्चको गणः ॥११।
अदादिश्च जुहोत्यादिः स्वादिस्तानादिकोऽपरः ।
रुदादिस्तु गणः प्रोक्तो भ्वादिस्तेष्वेव पठ्यते ॥१२।
मातिरातिस्तथा[2] दातिः स्नातिश्चैव क्रमात् स्थिताः ।
आकारान्तास्तु ये तेषु ते मता मादयः सदा ॥१३।
भौवादिका दिवाद्यास्तु तथा चौरादिकास्तु ये ।
तेषां नैवह्[3]लोपः स्यादनुषङ्गस्य सर्वदा ॥१४।
यजिव्रजि[4] तथा राजि भ्रस्जिभ्राजि सृजि मृजि ।
यजादयस्तु सप्तैते एवाचार्यैस्तु[5] संज्ञिताः ॥१५।
पूर्वं परावरापर दक्षिणस्वोत्तराधराः ।
अन्तरेण सहैतेऽत्र नव पूर्वादयो मताः ॥१६।
अदादिश्चैव गर्गादिरुदादिसर्वनामिकाः ।
पचादयस्तु येऽन्ये वा तेषामन्यो[6] न विद्यते ॥१७।

---

१. श्लोकपाठोऽयं प्रायेण सन्दिग्धः । तत्र पञ्चैव शब्दाः स्युरित्यपि विचारणीयम् । "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" (३।२।५९) इति पाणिनीयसूत्रेण साम्यं स्यात्तर्हि तदनुसारेण शब्दानां समावेशोऽपि तत्राभिमतः स्यात् ।

२. 'मातिराति' इति, 'माती रातिस्तथा' इति वा पाठः साधुः ।

३. अत्रानुषङ्गस्य लोपोऽभिमतो न हकारस्येति "नैवेह लोपः' इति पाठः सङ्गतः ।

४. विभक्त्यन्तपाठः समीचीन इति 'यजिर्व्रजिस्तथा राजिर्भ्रस्जिर्भ्राजिः सृजिर्मृजिः' इति पठनीयम् । 'व्रजि' इत्यत्र 'व्रश्चि' इति साधु ।

५. 'पूर्वाचार्यैस्तु' इति पाठः समीचीनः प्रतिभाति, अन्यथा संहितायां सत्यां 'सप्तैत एवा०' इति स्यात् ।

६. द्विविधा गणा दृश्यन्ते । केचिदाकृतिगणाः, केचिच्च 'वृत्' शब्दनिर्दिष्टाः । आकृतिगणेऽन्येपि शब्दाः पठितुं शक्यन्ते । 'वृत्' निर्दिष्टे गणे तु गणपठिता एव शब्दा आचार्यैरिष्यन्ते, न तु तदतिरिक्तः कश्चिच्छब्दस्तत्र समावेशनीयः स्यात् । एतदभिप्रेत्यैवात्रोक्तमिति ज्ञायते ।

त्यदादयो द्विपर्यन्ताः स्ववृत्तौ दर्शिता मया ।
गुणानामेव पर्यन्तो गणेशैर्यदि लभ्यते ॥१८॥

इति व्याख्यानप्रक्रियायां गणावतारः षष्ठः परिच्छेदः ( ६ ) ।

श्लोकसंख्या १२७ + १८ = १४५



## अथ लक्षणावतारः सप्तमः परिच्छेदः

ॐ सूत्रपाठोऽथ सूत्रार्थो व्याख्योदाहरणस्य च ।
प्रत्युदाहरणस्यापि वर्तनाद् वृत्तिरुच्यते ॥१॥
लघुपाठसाधनार्थं यत्र कार्यपरिहारम् ।
व्याख्याविशेषबहुलं तद् वाक्यं प्राहुराचार्याः ॥२॥
लेशोपदेश – निर्देश – विभाग – ज्ञापकेष्टयः ।
निपातगणसूत्रं स्याद् अष्टाङ्गं न्यासलक्षणम् ॥३॥
पूर्वापरविरुद्धानां शब्दानां यत्र दृश्यते ।
परिहारप्रधानं तु वृत्तौ न्यासोऽपरो मतः ॥४॥
क्रियाकारकसम्बन्धव्याख्या प्रतिपदं बहु ।
समासव्यासबहुला सा स्यात् टीकेति संज्ञिता ॥५॥
टीकेव व्याकृतिर्यस्य क्वचिद् वृत्तिवदिष्यते ।
भाषणे त्वीषदर्थस्य क्वचिद् भाष्यस्य लक्षणम् ॥६॥
विशेषणं तु शास्त्राणामन्येषां तु विकल्पितम् ।
भाष्यमाहुरभाष्यं तु बृहस्पतिपुरोगमैः ॥७॥
पदं पदमनुव्याख्या व्याख्यानस्यापि दृश्यते ।
यत्र शास्त्रे तदुद्दिष्टं बुधैश्चैव पदं मतम् ॥८॥
विषमानां[1] पदानां तु विवृत्तिः पञ्चका[2] स्मृता ।
तस्यास्तु विषमव्याख्या पदानां टिप्पनं स्मृतम् ॥९॥
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥१०॥
नित्यमेकं विभुं द्रव्यं परिमाणं क्रियावताम् ।
भिन्नमावृतिभेदेन कालं कालविदो विदुः ॥११॥

---

१. "अट्कुप्वाङ्नुम्व्यवायेऽपि" ( ८।४।२ ) इति सूत्रप्रवृत्तेः सत्त्वात् 'विषमाणां' इति णकारादेशविशिष्टः पाठः साधुः ।

२. "प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः" ( ७।३।४४ ) इति इकारादेशे 'पञ्चिका' इति पाठः सङ्गतः ।

सन्मात्रं भावलिङ्गं स्यादसंपृक्तं तु कारकैः ।
धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ॥१२।
द्रव्यात्मको गुणाख्यश्च क्रियात्मा चैव सर्वदा ।
भावस्त्रिधा विनिर्दिष्टो वक्तृभिर्भावदर्शकैः ॥१३।
यत्रैकस्यापि शब्दस्य दर्शनाद् बहुधापि च ।
यान्ति सिद्धिमनुक्ताश्च तदुदाहरणं स्मृतम् ॥१४।
क्रियातिपत्तिरुद्दिष्टा वैगुण्येनापि केनचित् ।
निष्पत्तिर्यत्र नैव स्यात् क्रियाणां साधनं प्रति ॥१५।
अर्थः[1] प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
संयोगो विप्रयोगश्च साहचर्यं विरोधिता ॥१६।
सामर्थ्यं योग्यता देशः कालो व्यक्तिः स्वरादयः ।
सामान्यस्य विधेरुक्ता विशेष्याख्यातिहेतवः ॥१७।
येनाध्याहारवाक्येन युज्यतेऽत्र गतिः सदा ।
वाक्यशेषः सदा सद्भिरध्याहारोऽपि वा भवेत् ॥१८।
अकीर्तिस्तस्य चार्थस्य प्राप्तिरर्थात् प्रतीयते ।
प्रकरणादिप्रसंगाद्वाऽर्थापत्तिस्तु सा मता ॥१९।
अवश्यम्भावि यत् कार्यं तदैकान्तिकमुच्यते ।
क्वचित् साधु क्वचिन्नैव तदनैकान्तिकं मतम् ॥२०।
कल्पनापोढमभ्रान्तं प्रत्यक्षं ज्ञानमुच्यते ।
धूमादिदर्शनाज्ज्ञप्तिरनुमानं बुधैः स्मृतम् ॥२१।
ईषद्दर्शनमुद्देशो निर्देशस्तस्य विस्तरः ।
विधिः स्यादुपदेशस्तु स्तोकं लेशः स्मृतो बुधैः ॥२२।
अद्रवं मूर्तिमत् . स्वाङ्गं[2] प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत् तत्तथायुतम् ॥२३।
पादस्त्वर्थसमाप्तिर्वा ज्ञेये वृत्तस्य वा पुनः ।
छन्दसो वा चतुर्भागः पाद इत्यभिधीयते ॥२४।

---

१. कारिकाद्वयमेतद् वाक्यपदीये किञ्चिद्भेदेन पठयते—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ ( वा० प० )

२. "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" ( ४।१।५४ ) इति सूत्रव्याख्याने प्रस्तुतं भाष्यमादाय सिद्धान्तकौमुद्यां श्लोकोऽयमुपन्यस्तस्तत्र पारिभाषिकस्यास्य स्वाङ्गस्य लक्षणत्रयं सोदाहरणं विवेचितम् ।

हेतोर्विकाररूपेण भूतस्याप्यतदात्मना ।
यस्तु नित्यं विभावः सोऽभूततद्भाव उच्यते ॥२५॥
प्रवृत्तोपरतश्चैव वृत्तादवरतस्तथा[1] ।
नित्यप्रवृत्तसामीप्यो[2] वर्तमानश्चतुर्विधः ॥२६॥
अन्यायाश्चापि चोक्तानां न्याय्यात् संवेषणादपि ।
असमाप्तिस्तु कालस्य मध्यमो यतनः स्मृतः ॥२७॥
एष्यत्कालो भविष्यत् स्याद् भूतोऽतीतः सदा भवेत् ।
तयोर्विवर्तनान्मध्ये वर्तमानो बुधैः स्मृतः ॥२८॥
अतीतो ह्यस्तनः प्रोक्त एष्यच्च श्वस्तनो मतः ।
शशिप्रभायां विख्याता:[3] कालाः सर्वे मया स्फुटाः ॥२९॥
धातुसाधनकालानां प्राप्तिः स्यात् प्रत्ययस्य तु ।
लोपागमविकाराणां सिद्धयर्थं हि निपातनम् ॥३०॥
प्रकृतः प्रत्ययान्तश्च तदन्योऽप्यातिदेशिकः ।
सौत्रश्चतुर्थो धातुस्तु कीर्तितः शब्दपारगैः ॥३१॥
ह्वादिस्तु प्रकृतो धातुः प्रत्ययान्ताः सनादयः ।
अतिदेशेन धातुस्तु भूस्त्री सौत्रा युषिः स्मृतः ॥३२॥
स्वरान्ता व्यञ्जनान्ताश्च द्विधा प्रोक्तास्तु धातवः ।
परस्मैपदिनो ज्ञेया आत्मनेपदिनस्तथा ॥३३॥
उभयपदिनस्त्वन्ये तेषां केचित् सकर्मकाः ।
अकर्मकास्तथा चान्ये तेषां केचिद् द्विकर्मकाः ॥३४॥
तथा सेटोऽनिटश्चैव विकल्पेटास्तथा परे ।
धातुपाठे तु पाठ्यन्ते ये क्रियाभावकाः सदा ॥३५॥
अव्याप्तिश्चाप्यतिव्याप्तिस्तृतीयः संभवो[4] मतः ।
स एव प्रतिपत्तिः स्यात् सूत्रे दोषत्रयं स्मृतम् ॥३६॥
प्रकृत्या लोप्यशब्देन विकारेण तथैव च ।
आगमेन तु संयुक्तः [5]सन्धिरुक्तश्चतुर्विधः ॥३७॥

---

१. 'वृत्तादविरतस्तथा' इति पाठोऽर्थवान् प्रतीयते ।

२. श्लोकपाठे त्रय एव भेदा दृश्यन्ते, चातुर्विध्यस्योपपादनार्थं 'नित्यप्रवृत्तः सामीप्यो' इति भेदेन पाठः स्यात् ।

३. 'व्याख्याता:' इति पाठः साधीयान्, प्रकृतग्रन्थरचनायाः पूर्वं प्रणीतस्य शशिप्रभान्यासस्य व्याख्यानरूपत्वात् ।

४. दोषत्रितये 'असम्भवः' परिसंख्यायते, तेन 'तृतीयोऽसम्भवो मतः' इति साधुः पाठः ।

५. क्वचित् प्रकारान्तरेण पञ्चविधः सन्धिरुच्यते । तथाहि—
स्वरसन्धिर्व्यञ्जनसन्धिः प्रकृतिसन्धिस्तथैव च ।
अनुस्वारो विसर्गश्च सन्धिः स्यात् पञ्चलक्षणः । इति ।

यथैतत्तुल्य – सदृश – प्रतिपादपदैर्युतम् ।
उपमानोपमेययोः साधर्म्यं तूपमा स्मृता ॥३८॥
सन्दिग्धस्य पदार्थस्य वाक्येनानेन निश्चयः ।
ज्ञाप्यते यत्र चार्थस्य ज्ञापकं तं विदुर्बुधाः ॥३९॥
धातुश्च प्रत्ययश्चैव कालो वचनमेव च ।
चातुर्विधं हि विज्ञेयमाख्यातं विधिवद्बुधैः ॥४०॥
भावः कर्म च कर्ता च कर्मकर्ता तथैव च ।
चतुष्कारकमाख्यातमाख्यातं शब्दकोविदैः ॥४१॥

इति व्याख्यानप्रक्रियायां लक्षणपरिछेदः सप्तमः ( ७ ) ।

श्लोकसंख्या १४५ + ४१ = १८६

● ● ●

## अथाष्टमः प्रकीर्णपरिच्छेदः

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥१॥
अभावे च विरोधे च कुत्सायामीषदर्थके ।
अन्यत्वे सदृशे चैव [1]षड्विधोऽन्विधीयते ॥२॥
ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥३॥
शोभनार्थे स्त्रिशब्दस्तु समीपार्थे भवेत्तु यः ।
अभिपूर्वः स्मृतो नित्यमित्वन्तः शास्त्रपारगैः ॥४॥
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
धाञ्प्रीञोस्तणिनह्योश्च[2] प्रायेणेच्छति शौनकिः ॥५॥
धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
तमेव विशिनष्टयन्य उपसर्गगतिस्त्रिधा ॥६॥

---

१. तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥
इत्यत्र नञः षडर्था उक्ताः, त एवार्था अत्रापि श्लोके वर्तन्ते इति 'षड्विधो नञ्विधीयते' इति सङ्गतः पाठः ।

२. उदाहरणाभावाद् निश्चयेन वक्तुं न शक्यते—'किमत्रेष्यते' इति । पाणिनीयव्याकरणे उत्तरार्धं श्लोकार्धं शब्दान्तरैरुच्यते—
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ ( सि० कौ०, अव्ययप्रकरणान्ते )

क्रियावचनमाख्यातम् उपसर्गो विशेषकृत् ।
अर्थाभिधायकं नाम निपातः पादपूरणात् ॥७॥
आगमो[1] मध्यपाती स्यात् प्रत्ययः प्रकृतेः परः ।
आदेशः स्थानिनः स्थाने धातोः प्राक् प्रादयो मताः ॥८॥
धातुः क्विबन्तो धातुत्वमुज्झत्यर्थवशात् क्वचित् ।
क्वचिदर्थानुरोधेन धातुरेव भवत्यसौ ॥९॥
कारकं[2] च विभक्तिश्च वचनं लिङ्गमेव च ।
विवक्षातः प्रवर्तन्ते पुरुषाः कालसन्धयः ॥१०॥
कृत्तद्धितसमासाः स्युरभिधाननिदर्शनात् ।
विवक्षातः प्रवृत्तिर्वा सर्वस्मिन् कर्मसाधने ॥११॥
सर्वेषामेव धातूनां[3] द्वितीया कर्मणि स्मृता ।
येषां तु न तया योगास्ते वै प्रोक्ता ह्यकर्मकाः ॥१२॥
केचित् सकर्मकाः प्रोक्ताः केचित् प्रोक्ता द्विकर्मकाः ।
केचित्त्वकर्मकाः प्रोक्ताः सोपसर्गाः सकर्मकाः ॥१३॥
स्याद्यन्तमपि त्याद्यन्तं द्वे पदे सम्प्रकीर्तिते ।
स्याद्यन्तमेकविंशत्या त्याद्यष्टादशभिर्मतम् ॥१४॥
उपग्रहास्तु चत्वारस्त्यादीनां पुरुषास्त्रयः ।
परस्मैपदसंज्ञश्च प्रथमोपग्रहः स्मृतः ॥१५॥
आत्मनेपदसंज्ञस्तु द्वितीयोपग्रहो मतः ।
भावसंज्ञस्तृतीयस्तु चतुर्थः कर्मसंज्ञकः ॥१६॥
अदन्तता वृद्धिनिवृत्तये विधिस्तथाऽनुदात्तत्वमिटो निवृत्तये ।
ह्वानेस्तु यत्र प्रतिषेध इष्यते स्मृतः प्रकृत्यन्तरमन्यदेव तत् ॥१७॥
पदद्वयेऽपि वर्णानां बहुलं संहिता भवेत् ।
समासे चान्तरङ्गे च न कदाचिदसंहिता ॥१८॥
संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
एकप्रकरणाभावे भिन्नानां नास्ति संहिता ॥१९॥

---

१. आपिशला अत्र पठन्ति—
आगमोऽनुपघातेन विकारश्चोपमर्दनात् ।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात् ॥ ( कात० वृ० टी० १।२।१ )
अत एव आगमो मित्रवत्, आदेशश्च शत्रुवदभिमन्यते ।

२. यद्यपि कारकानुसारेणैव विभक्तीनां प्रयोगो भवति, तेन कारक-विभक्त्योरन्यतरस्यैव निर्देशेनेष्टं सिद्धं स्यात् तथापि कर्त्रादीनि कारकाणि, प्रथमादयश्च विभक्तयः सन्तीति भेदेन व्यवहृतानां तेषां सर्वेषां ग्रहणं स्यादिति बोधनायोभयमुक्तमिति प्रतीयते ।

३. सुबन्तशब्देषु प्रवर्तन्ते द्वितीयादयो विभक्तयः तेन 'शब्दानाम्' इति पाठ उचितः स्यात् । सर्वेषां शब्दानां मूलभूतत्वाद्वा धातूनाम्' इति निर्देशोऽपि सङ्गतः स्यात् ।

अप्राप्तस्य क्रिया चैव प्राप्तबाधनमेव च ।
अर्थाधिक्यविवक्षा च त्रिभिरेव निपातनम् ॥२०।

धातुसाधनकालानां प्राप्तिः स्यात् प्रत्ययस्य च ।
लोपागमविकाराणां सिद्धयर्थं हि निपातनम् ॥२१।
धातुसाधनकालानां[1]... ... ... ... .... ...

यत्त्रिलिङ्गं त्रिवचनमष्टस्वर्थेषु युज्यते ।
तन्नाम कवयः प्राहुः सप्त यत्र विभक्तयः ॥२२।

प्रत्यक्षे च परोक्षे च सामीप्ये दूरतस्तथा ।
सर्वनाम प्रयोक्तव्यं तथा स्त्री पुन्नपुंसकी ॥२३।

फली वनस्पती ज्ञेयो वृक्षः पुष्पफलोपगः ।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥२४।

अन्यार्थस्तु बहुव्रीहिः परस्तत्पुरुषोत्तमः ।
पूर्वार्थस्त्वव्ययीभावो द्वन्द्वस्यार्थः पदे पदे ॥२५।

कृष्णोदक्पाण्डुपूर्वाया[2] भूमेरप्रत्ययः स्मृतः ।
गोदावर्याश्च[3] नद्याश्च संख्याया उत्तरे यदि ॥२६।

सूत्रप्रकरणाध्यायी संबन्धस्त्रिविधः क्वचित् ।
केषांचित्त्वर्थभेदेन सम्बन्धो बहुधा मतः ॥२७।

नानर्थकः प्रयत्नो हि [4]नानोक्तोः साधु शासनम् ।
नियमो न प्रकृत्युक्तो नादेशः [5]षष्टभावतः ॥२८।

नागरागविनोद्देशौ लिङ्ग्योष्टयेरगदर्शनात् ।
नाप्रसिद्धिर्विशेषत्वमविकारिविधिस्त्वतः ॥२९।

पूर्वसिद्धं तु यत् कार्यं पुनरारभ्यते विधौ ।
पूर्वकार्यव्युदासार्थं विशेषार्थं च तद् भवेत् ॥३०।

---

१. एकविंशश्लोकस्यादिमो भागः प्रमादाल्लिपिकारेण लिखित इति मन्ये ।

२. पाणिनीयेऽत्र वार्त्तिककारेण 'अच्' प्रत्ययः समासान्तो विधीयते—कृष्णोदक्पाण्डुसंख्या-पूर्वाया भूमेरजिष्यते ( सि० कौ० ५।४।७५ ) इति ।

३. पाणिनीये वार्त्तिकमत्र वर्तते—
'संख्याया नदीगोदावरीभ्यां च' ( सि० कौ० ५।४।७५ ) इति ।

४. 'नान्योक्तम्' इति पाठः कश्चित् सार्थकः स्यात्, अन्येनोक्तस्य शासनस्य सुचारुरूपेण प्रवर्तनाभावात् ।

५. 'दुष्टभावतः' इति पाठोऽर्थवान् प्रतीयते, दुष्टभावेन प्रचारितस्याऽऽदेशस्य प्रायेण परिणामे वैषम्यदर्शनात् ।

प्रत्ययात् क्रियते पूर्वं तस्मात् प्रकृतिरुच्यते ।
प्रकृतेर्विकृतेर्नित्यं[1] विकृतेः प्रकृतिः क्वचित् ॥३१॥

प्रकारे च व्यवस्थायां सामीप्येऽवयवे तथा ।
चतुर्ष्वर्थेषु शब्दज्ञैरादिशब्दः प्रयुज्यते ॥३२॥

विधिर्यत्रेष्यते वक्तुं निवृत्त्या सोऽतिलक्षितः ।
न प्रवृत्तेर्निवृत्तिः स्यान्निवृत्त्या प्राप्तिरिष्यते ॥३२॥

एकेनैव प्रयत्नेन द्वयोः कार्यं भवत्यपि ।
शाल्यर्थं तु यदा कुल्या स्नानादीनां च दृश्यते ॥३४॥

अपिशब्दस्त्विवतिशब्दो वाशब्दश्चैवमेव तु ।
चकारः क्वचिच्छब्दस्तु विपथाः फलसूचकाः ॥३५॥

प्रागाम्नायात् प्रतिषेधादर्थलोपादसम्भवात् ।
संकेतादिङ्गिताच्चैव प्रकृतं नानुवर्तते ॥३६॥

लुप्तो यदानुबन्धः स्वशास्त्रनियतं प्रसाधयति कार्यम् ।
विनिहन्ति नैव कार्यं प्रयोजनार्थं यतः प्रोक्तम् ॥३७॥

तयोगान्ताच्छब्दात्[2] तत्स्थानाच्चैव तद्वियोगाच्च ।
तदवयववन्तहृतेः सामीप्यात् साहचर्याच्च ॥३८॥

कार्यिणा बाध्यते कार्यं कार्यं[3] कार्येण बाध्यते ।
निमित्तं च निमित्तेन यच्छेषं तद्विशिष्यते ॥३९॥

प्रथमयाऽथ चतुर्थ्या षष्ठ्या कार्यं स्मृतं बुधैः ।
पञ्चम्याऽप्यथ सप्तम्या निमित्तं तु तृतीयया ॥४०॥

द्वितीयप्रथमाभ्यां च कार्यं निर्दिश्यते सदा ।
निर्देशस्त्रिविधः प्रोक्तः सप्तभिस्तु विभक्तिभिः ॥४१॥

पराधारोपदेशेषु गम्यमाननिमित्तयोः ।
सद्विषयेऽथ सामीप्ये सप्तमी त्वष्टधा मता ॥४२॥

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥४३॥

सत्ताशब्दस्तु व्युत्पत्तेः कारणं नेह वस्तुतः ।
विवक्षा हि निमित्तं स्याज्ज्ञापितं बहुधा बुधैः ॥४४॥

---

१. प्रकृतेर्धातोः प्रातिपदिकस्य वा विकरणादेशादिभिर्भवति विकृतिः । यथा—भवति, वासुदेवश्च । विकृतिकारकस्य विकरणादेर्लोपेन विकृतेरपि प्रकृतिरूपत्वं दृश्यते, यथा—अस्ति । एवं—'प्रकृतेर्विकृतिर्नित्यं विकृतेः प्रकृतिः क्वचित्' इति पाठं सङ्गतं मन्ये ।

२. ३७ तमश्लोके वर्णितेनानुबन्धविषयेण सहास्य श्लोकस्य सम्बन्धः, परं लिपेरस्पष्टत्वान्नास्ति स्पष्टमर्थावगतिः ।

३. 'कार्यी' इति पाठ उचितः प्रतिभाति ।

यस्य येनार्थसम्बन्धो दूरात् तस्यापि सोऽर्थभाक् ।
असम्बन्धार्थयुक्तीनामानन्तर्यमकारणम् ॥४५॥
यथा तथा कुतः कुत्र कुहाद्याश्च तथा परे ।
विभक्तिप्रतिरूपास्तु निपातत्वे स्मृता बुधैः ॥४६॥
संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्धयति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्धयति ॥४७॥
लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि ।
समो वाहिततयोः मांसस्य पचि युट्घञोः ॥४८॥
आदिलोपोऽन्तलोपश्च मध्यलोपस्तथैव च ।
पदवर्णविभक्तीनां लोपशब्दो विशिष्यते ॥४९॥
प्राधान्यं क्वचिदर्थस्य क्वचिच्छब्दस्य संशितम्[1] ।
निर्देशाः कार्यसिद्ध्यर्थं बुधैः शब्दविधौ सदा ॥५०॥
अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिद्धयति माणवः ॥५१॥
गुरुराजवयोवृद्धे स्वात्मकं तु त्रिलिङ्गिषु ।
बहुवचनं तु जातौ चैकत्वे च प्रयुज्यते ॥५२॥
न वृद्धिः शीलपीताभ्यां प्रत्यये सणकारके ।
यलोपस्तिष्यपुष्याभ्यां शिरसा[2] शेष[3] उच्यते ॥५३॥
वाच्य ऊर्णोर्णुवद्भावो यत् प्रसिद्धिप्रयोजनम् ।
आपश्च प्रतिषेधार्थमेका सा चेदुपग्रहात् ॥५४॥
ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
गण्डौ भित्त्वा विनिर्यातौ तेनोभौ मङ्गलकावहौ[4] ॥५५॥
पूर्वोक्ते गुणवृद्धी च तथा चैव प्रसारणम् ।
कृत्वा धातुविकारांश्च ततो द्विर्वचनं भवेत् ॥५६॥
धातुभूतस्तु मृत्पिण्डो लिङ्गभूतो घटो मतः ।
एवं धातोस्तु निष्पन्नस्ततो लिङ्गत्वमाप्नुयात् ॥५७॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥५८॥

---

१. 'शंसु स्तुतौ' इति धातोः क्तप्रत्यये 'शंसितम्' इति रूपम्, तदेवात्र पठनीयम् ।

२. 'अचि शीर्षं इति वाच्यम्' ( वा०—६।१।६१ ) इति वार्त्तिकानुसारेण 'शिरस्' शब्दस्य 'शीर्ष' आदेशो जायते—स्थूलशिरस इदं स्थौलशीर्षम् । तेन तस्यैव 'शिरस्' शब्दस्य षष्ठ्यन्तेन रूपेणात्र भाव्यम्—'शिरसः' इति ।

३. टि० सं० २—अनुसारेण 'शीर्ष' इति पाठ उचितः स्यात् ।

४. 'मङ्गलावहौ' इति पाठः साधुः ।

स्थागादेव[1] हि जातोऽयं नायं जातो विभक्तितः ।
न भविष्यति दीर्घत्वं कषयोरिति ज्ञापकात् ॥५९।
क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥६०।
सुप्तिङुपग्रहलिङ्गनराणां कालहलः स्वरकर्तृयङां च ।
[2]भंशत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्धयति बाहुलकेन॥६१।
बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् ।
कार्यविशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सदा तु ॥६२।
नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥६३।
यथास्य पारगो मूल्यं[3] व्यापी च भगवान् हरः ।
तथा कारकवर्णानां मूल्यं व्यापी च कीर्त्यते ॥६४।
शशिप्रभानुसारेण शशिदेवेन[4] शंसितम् ।
शिष्याणां शब्दसिद्धयर्थं व्याख्यानप्रक्रियामिमाम् ॥६५।
अनेकार्थाश्च पूर्वोक्ताः कारिकासंग्रहस्य तु ।
अशेषद्योतने शक्ये यदि स्यात् सकलः शशी ॥६६।
अज्ञाते कुत्सितेऽल्पे च तथा ह्रस्वानुकम्पयोः ।
संज्ञायामपि विद्वद्भिः कः प्रत्यय उदाहृतः ॥६७।

इति व्याख्यानप्रक्रियायां प्रकीर्णपरिच्छेदोऽष्टमः ( ८ ) ।

श्लोकसंख्या १८६ + ६७ = २५३

इति व्याख्यानप्रक्रिया समाप्ता ।

---

१. वर्णोत्पत्तिविषये प्रस्तुतोऽयं पाठो नार्थं कञ्चिदभिव्यनक्तीति 'स्थानादेव' इति पाठः कश्चिदर्थवान् स्यात् ।

२. 'व्यत्ययमिच्छति' इति प्रसिद्धः पाठः पाणिनीये । तत्र श्लोकस्य द्वितीयपादे 'कालहलच्-स्वरकर्तृयङां च' इति पाठः ।

३. 'मूलम्' इति पाठः साधुः प्रतीयते ।

४. 'शशिदेवोऽन्वशंसयत्' इति पाठः साधुः प्रतीयते—'व्याख्यानप्रक्रियामिमाम्' इति कर्मणो द्वितीयान्तत्वात् ।

•••

लघुग्रन्थमाला—२७

श्रीमद्गोकुलनाथविरचितः

# भक्ति-(लक्षणा) विवेकः




सम्पादकः
श्रीजनार्दनशास्त्री पाण्डेयः
सरस्वतीभवनम्

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वै० सं० २०३२

# उपोद्घातः

अथेदमुपस्थाप्यते म० म० श्रीमद्गोकुलनाथोपाध्यायविरचितस्य रसमहार्णवग्रन्थस्य भक्तिविवेकाख्यं प्रकरणम्, सामान्यतया भक्तिशब्देन कश्चिदुपास्यविषयको मानातिशयो बुद्ध्यते जनैः, किन्तु केषाञ्चिद् दार्शनिकानामभिमतं भक्तिरिति लक्षणापर्यायः। एतन्निरुक्तिविषये "भाक्तमाहुस्तमन्ये" इति ध्वनिकारोक्तं विवेचयद्भिरभिनवगुप्तपादैर्लोचनेऽभिहितम्—"भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यत इति भक्तिर्धर्मोऽभिधेयेन सामीप्यादिः, तत आगतो भाक्तो लाक्षणिकार्थः। यदाहुः—

अभिधेयेन सामीप्यात् सारूप्यात्समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता॥

गुणसमुदायवृत्तेः शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः, तत आगतो गौणोऽर्थो भाक्तः, भक्तिः प्रतिपाद्ये सामीप्यतैक्ष्ण्यादौ श्रद्धातिशयः, तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च। मुख्यस्य चार्थस्य भङ्गे भक्तिरित्येवं मुख्यार्थबाधानिमित्तप्रयोजनमिति त्रयसहभाव उपचारबीजमित्युक्तं भवति"। इति॥

अयमभिप्रायः—भज् सेवायां धातोः कर्मणि क्तिन्प्रत्यये कृते, भज्यते सेव्यते इत्यर्थे सामीप्यादयस्ते धर्मा भक्तिशब्देन गृह्यन्ते, ये लक्ष्यार्थप्रतीतिरूपेण प्रसिद्धिं गताः। लक्ष्यार्थश्च स्वबोधाय यानवलम्बते, अथवा वक्ता बोद्धा वा लक्ष्यार्थप्रतीतये यान् धर्मान् निमित्तरूपेण पर्यालोचयति, अथ च भङ्गार्थकाद् भजधातोः कर्मणि क्तिच्प्रत्यये कृतेऽपि भक्तिशब्दो निष्पद्यते। अत्र च मुख्यमर्थं भङ्क्त्वाऽर्थान्तरं बोधयति या सा भक्तिरित्यर्थः कर्तुं शक्यते। अस्या एव भक्तेर्विवेकोऽत्र विहितः।

अस्य च निबन्धा श्रीमद्गोकुलनाथोपाध्यायः सकलशास्त्रपारङ्गतः परःशतानां निबन्धानां ग्रन्थानां च प्रणयनमकरोत्। स चायं वत्सगोत्रीयफणदह-(फन्नावार) ब्राह्मणकुले मङ्गलवनी(मङ्गरौनी)ग्रामस्य श्रीमत्पीताम्बरोपाध्यायादुमागर्भजः स्वजनुषा मिथिलामलञ्चकार। ख्रीष्टाब्दानां १६५० तः १७४० यावदस्य स्थितिरिति मिथिलेतिहासतः प्रतीयते। अयं प्रथमं गढ़देशाधिपस्य फत्तेहसाहस्य ततश्च मिथिलाधिपतेर्माधवसिंहस्य सभामण्डनमभवत्।

अस्यैका दुहिता कादम्बरी गङ्गायां स्नानकाले पादप्रस्खलनाद्दिवं गतेति तत्स्मृतावनेन कादम्बरीप्रबोधः, कुण्डकादम्बरी, कादम्बरीकीर्तिश्लोकाः, कादम्बरीप्रश्नोत्तराणि, कादम्बरीप्रदीप इत्यादयो बहवो ग्रन्थाः प्रणीता इति श्रूयते। सकलशास्त्रमर्मज्ञस्यापि नैयायिकधुरन्धरस्यास्य परःशतेषु ग्रन्थेषु परांकोटिमधिरूढाः—तत्त्वचिन्तामण्यालोकः, दीधितिविद्योतः, पदवाक्यरत्नाकरः, रसमहार्णवः, कर्णप्रबोधः, अमृतोदयनाटकम्, मदालसानाटकम्, सूक्तिमुक्ता,

काव्यप्रकाशविवरणम्, कुसुमाञ्जलिविवरणम्, बौद्धाधिकारविवरणम्, शक्तिवाद इत्यादयो विद्वन्मोदावहा विशदग्रन्थाः, अन्ये च शतशो लघुनिबन्धाः ।

उपरितननिर्दिष्टेषु ग्रन्थेषु रसमहार्णवः क्वापि पूर्णतयोपलब्धः कुतोऽपि प्रकाशमुपगत इति न श्रुतमस्माभिः । अस्मदीयसरस्वतीभवनग्रन्थालये मात्रिकाद्वयं वर्तते । एकं रसमहार्णव-संज्ञयाऽपरं च भक्तिविवेकसंज्ञया सूच्यां सन्निविष्टम् । उभयोरपि विषयवस्तु त्वेकैव, परन्तु द्वयमपि परस्परासम्बद्धपूर्वापरीभूतपाठप्रचुरमशुद्धिबहुलं च । पूर्णग्रन्थस्यानुपलब्धतया भक्ति-विवेकोऽयं विचारकाणां महदुपकारकारीति मत्वा महता प्रयासेन द्वयोरपि उपयुक्तमंशं सङ्गृह्य स्वबुद्धया यथासङ्गतं संस्थाप्य सम्पादितोऽयं ग्रन्थो लघुग्रन्थमालायां प्रकाश्य विदुषां पुरत उपस्थाप्यते, तदत्र ममाल्पज्ञानतयाऽनवधानतया वा समुपगतत्रुटीनां कृते क्षमद्भिर्गुणलवैकपक्षपाति-भिर्विपश्चिद्वरेण्यैरवधार्योऽयं विवेक इति प्रार्थ्यते ।

सरस्वतीभवनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वसन्तपञ्चमी

२०३३

विद्वच्चरणचञ्चरीकः

जनार्दनशास्त्री पाण्डेयः

# विषयानुक्रमणी





महामहोपाध्यायश्रीमद्गोकुलनाथकृते
रसमहार्णवे

# भक्ति-[लक्षणा] विवेकः

मुख्यार्थो लक्षकस्तस्य श्रुतार्थं प्रत्ययोग्यता ।
लक्ष्ये रूढिर्व्यञ्जनं वा सहकारीति तान्त्रिकाः ॥१॥

"कलिङ्गो रिङ्गति" इत्यत्र कलिङ्गपदेन मुख्यया वृत्त्या स्मारितो जनपदविशेषस्तस्य तथाविधा स्मृतिर्वा कारणम्, तज्जनिता तज्जनपदनिवासिपुरुषस्मृतिर्व्यापारः, पुरुषविशेषो रिङ्गतीत्यन्वयबोधः फलम् । "द्विरेफो मधुरं रौति पिकः कूजति कानने" इत्यत्र द्विरेफशब्दो बहुव्रीहिरूढ्या भ्रमरशब्दत्वेन द्विकशब्दश्च काकपदत्वेन वर्णसन्दर्भं स्मारयत्यथवा बहुव्रीहीत्यारम्भको रेफादिशब्दः प्रथमं वर्णविशेषमभिधया स्मारयित्वा ( स्मारित- ) रेफद्वयारब्धपदत्वेन क्रकर-कर्करा-वर्वर-दर्दुरादि साधारणेन भ्रमरशब्दं ककारश्च स्वरूपपरि(वि)भाषितो बहुव्रीहिघटकः कङ्क-केका-किङ्क-क्रकरादिसाधारणेन ककारद्वयारब्धशब्दत्वेन काकपदं स्मारयति । सैव भ्रमर-काकपदस्मृतिरभिधया बोध्यबोधकभावेन वा संसृष्टमलिं बलिभुजं च स्मारयित्वानुभावयति, अपेक्ष्यते च कलिङ्ग-द्विरेफादिभिः शब्दैः प्रयुक्तया पुरुषविशेषमधुव्रतादीनामुपस्थित्या तदनुभवजनने सहकारि रूढिज्ञानम् । रूढिस्तु वस्तुविशेषशब्दविशेषस्यानादिप्रयोगः ।

कलिङ्गादिपदप्रयुक्तपुरुषविशेषानुभवत्वावच्छिन्ने सर्वत्र तथाविधानुभवध्वंसवैशिष्ट्यं तथाविधानुभवप्रागभावत्वावच्छेदेन तथाविधानुभवसमानकालिकत्वं वा । "गङ्गायां गोकुलम्" इत्यत्र गङ्गापदेनाभिधया प्रवाहस्वरूपमपहाय विवृत्त्या जात्या जाह्नवी स्मार्यते, न तु धर्मविशेषजनकतावच्छेदकतया सिद्धया तदवयवावयविसाधारण्या, उद्धृतजाह्नवीजलादौ स्वरसतो गङ्गापदप्रयोगाभावात् । "गङ्गा हरति वै पापं दृष्टा पीताऽवगाहिता" । "पीता कार्पटिकैर्गङ्गा" इत्यादौ त्ववयवावयविभावसंसर्गमूलिका शुद्धा साध्यवसानिकैव लक्षणा, गङ्गायाः प्रवाह इव पीयमानस्तदेकदेशोऽपि पावन इति पीतभूयिष्ठानि जाह्नवीजलानीति च व्यञ्जनं प्रयोजनं वा ।

तथा च पूरस्मृत्या तटं स्मरणव्यापारेणानुभाव्यते । गङ्गापदजनितपूरस्मरणजनिता तटस्मृतिस्तदनुभवजनने गङ्गापदजन्मा तटानुभवस्तटे गङ्गाधर्म्यव्यञ्जक इत्यादि प्रयोजनवत्ता प्रतिसन्धानमपेक्ष्यते । यत्र च लक्षणयोपस्थितेऽपि पदार्थे रूढिः प्रयोजनं वा न प्रतिसन्धीयते तत्र न जायत एव लक्ष्यानुभवः । यदाहुः—

निरूढा लक्षणाः काश्चित्प्रसिद्धा अभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ।। इति ।

"रूपं वस्त्रम्" इत्यादौ रूपादिशब्दस्य गुणिनि लक्षणा न स्वीक्रियते । नानुभवोपहिता भवति । रूढि-प्रयोजनात्मकसहकारिशक्तेरभावादिति चरमपदार्थः ।

नन्वेवमभिधयेव लक्षणयोपस्थितस्याप्यन्वयबोधानुप्रवेशस्वीकारे "गङ्गायां गोकुलम्" इत्यादौ इव "गङ्गायां गुण" इत्यादावपि तटमनुभूयत इति चेत्, न । मुख्येनार्थेनामुख्यार्थस्मरणे मुख्यार्थस्य श्रुतार्थं प्रत्ययोग्यताबुद्धेरपि सहकारित्वाभ्युपगमात् । तथाहि "गङ्गायां गोकुलम्" इत्यत्र गङ्गा-सप्तमी-गोकुल-प्रथमानां प्रथमः ।

अथ स्वर्धुनीधारा अधिकरणता व्रजवचनानां स्मरणमाकांक्षाविषयकं तदाहृत्य न शाब्दबुद्धिं जनयति, गोकुलाधिकरणत्वाभावावच्छेदकेन गङ्गात्वेन गृहीता गोकुलाधिकरणत्वान्वयासम्भवात् । गङ्गात्वावच्छेदेन गोकुलाधिकरणत्वाभावावगाहिनः संस्कारस्यापि गङ्गा गोकुलाधिकरणमिति बुद्धौ विरोधित्वात् । यत्र च पदसमूहस्य पदार्थसमूहस्य वा स्मरणमेव गङ्गात्वावच्छेदेन गोकुलानधिकरणत्वमवगाहते, तत्रापि न श्रुतपदार्थान्वियबोधः, किन्तु तटमुपादाय तावतां स्मरणान्तरमुत्पद्यते स्मरणोत्पत्ति विरोधिबलाच्छाब्दसामग्रचा मुख्यार्थगोचरबाधेन प्रतिबन्धात् । "गङ्गायां गुण" इत्यत्र च बलवन्मुख्यार्थान्वियबुद्धिसामग्रीसत्त्वादमुख्योऽर्थो न स्मर्यत इति लक्ष्यार्थस्मरण एव श्रुतार्थानुपपत्तेरुपयोगः । तदाहुः—

वाच्यार्थस्य [च] वाक्यार्थे सम्बन्धानुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ।। इति ।

वाक्यार्थे सम्बन्धानुपपत्तिर्मानान्तरगृहीततात्पर्यके पदार्थे यथाश्रुतलक्षकपदार्थान्वयानुपपत्तिः । कुत्र गोकुलमित्यत्र गोस्वामिप्रश्नानन्तरं यत्र "गङ्गायां गोकुलम्" इति गवाधिकृतस्योत्तरं तत्र गोकुलाधिकरणत्वावान्तरधर्म्यप्रकारकजिज्ञासानिवर्तकतया गृहीतस्योत्तरवाक्यार्थस्य गोकुलादिपदे मुख्यार्थे तात्पर्यमवधारितमिति तदन्वयानुपपत्तेरनिर्धारिततात्पर्यकस्य पदस्य मुख्येनार्थेनामुख्योऽर्थः स्मर्यत इति तदर्थः । अत एव वाक्यार्थपदं निश्चितपदार्थान्तरमिति कण्टको दूरे कृतः ।

सम्बन्धानुपपत्तिरिति हेतुः तत्सम्बन्धवशप्राप्तावन्वेति । तथा च बलवच्छाब्दबोधसामग्रीविघटकतया मुख्यार्थबाधस्य लक्ष्यार्थस्मृतावुपयोग इति मुख्यार्थबाधो लक्षणाबीजमित्युच्यते ।

केचित्तु निराकाङ्क्षत्वं लक्षणाबीजम्, तच्च क्वचिद् विषयवाच्यस्य वाक्यार्थबुद्धिं प्रत्यस्वरूपयोग्यत्वात्, यथा—"वदनं वदनं तस्या मुखममुखं भाति चान्यासाम्" इत्यत्र वदन-मुखतादात्म्यं मुखान्योन्याभावादिधर्मितावच्छेदकतया शाब्दबुद्धिप्रकारतया कारणीभूतायाः पदार्थोपस्थितेर्धर्म्मितावच्छेदकतया च जनकाद्ययोग्यताज्ञानादापद्यमाना विषययोग्यतैव निराक्रियते ।

तथा हि—तादात्म्यसंसर्गावच्छिन्नमुखतद्भिन्नादिप्रकारतानिरूपितानवच्छिन्नधर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धौ मुखत्वभिन्नवृत्तिविषयतासंसर्गेण जन्यबुद्धिसामान्ये वा मुखत्वा-

न्यान्याभावः कारणम् । "पृथ्वीमुखं लोचनं न मुखम्" इत्यादौ पृथिवीत्वलोचनत्वादौ विद्यमानापि धर्मितावच्छेदकतया योग्यताबुद्धिः प्रकारतया पदार्थस्मृतिश्च मुखत्वान्योन्याभाव-घटितयैव सामग्रचा धर्मितावच्छेदकतया मुखतदन्योन्याभावादिशाब्दबुद्धिं प्रयोजयति । न च मुखत्वे तथाविधा सामग्रीति विघटितायां मुख्यार्थबुद्धौ मुखादिशब्दैराह्लादकत्वादिकं लक्ष्यते ।

यत्तु "वदनं वदनम्" इत्यत्र पदान्तरव्यतिरेकप्रयुक्तान्वयानुभावकत्वलक्षणाकाङ्क्षाविरह एव लक्षणाबीजम् । वदनपदनिष्ठस्य वदने वदनतादात्म्याननुभावकत्वस्य शिलाशकलवत्स्वरूपाय-त्तत्वात्, द्वितीयवदनव्यतिरेकप्रयुक्तत्वाभावादिति, तत् न । "वदनं वदनम्" इति समभिव्याहारस्य वदनपदार्थतावच्छेदकावच्छिन्नप्रकारतानिरूपिताभेदसंसर्गतानिरूपितवदनपदार्थतावच्छेदकावच्छिन्न-विशेष्यताकवाक्यार्थबुद्ध्यभावप्रयोजकीभूताभावप्रतियोगित्वमेवाकाङ्क्षा । सा चात्राप्यविकलैव । अन्यथा लक्ष्यार्थमादायापि सामानाधिकरण्यानुपपत्तेः । न हि पदार्थभेदेन पदानामाकाङ्क्षा भिद्यते, स्फोटवादानुप्रवेशापत्तेः । क्वचिदनुशासनसिद्धमर्थविशेषे निराकांक्षत्वम् । यथा—

कृतसीतापरित्यागः सरत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥

इत्यत्र भुजिधातोरवनवाचकस्यात्मनेपदनिराकांक्षतया वाच्यार्थपालनबुद्धौ प्रतिबद्धायां पालनेन शासनं लक्ष्यते । आत्मनेपदसमभिव्याहृतभुजित्वावच्छेदेनाख्यातोपात्तकर्तृत्वान्वित-पालनबुद्धिस्वरूपायोग्यत्वस्वरूपनिराकांक्षत्वमेव हि सूत्रेणानुशिष्यते । यदि तु भुजेरनवने नित्य-मात्मनेपदम् अवने तु "विभाषा" इति सूत्रार्थस्तेन बुभुजे प्रतिपालनार्थकमेव । बुभोजेत्यपहाय बुभुज इत्युपादानन्तु व्यङ्ग्यचमत्कारलाभाय । तथा हि केवलापदेन तात्कालिकपृथिवीपालन-कर्तृकभोगकर्मनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वयोगिनी व्यक्तिरभिधीयते । तथाविध-केवलातादात्म्यविशेषितपृथिव्यास्तात्कालिकपृथिवीपालनकर्तृकभोगे कर्मतया अन्वय एवकारलभ्यः । तथाविधपृथिव्यन्यत्र द्वितीयाया एवकारस्यैव वा लक्षणया लभ्यस्य तात्कालिक-पृथिवीपालककर्तृकभोगकर्मत्वस्य पृथिवीपालाभिन्नकर्तृविशेषिततात्कालिकभोगे वा केवल-पृथिव्यन्यकर्मकत्वस्य व्यवच्छेदो यथादर्शनव्युत्पत्ति(त्ते)र्भासते । केवलापदेनार्थतो लभ्यमानोऽप्येव-कारः स्फुट एव व्यङ्ग्यार्थप्रतिभासप्रयोजनत्वादपुष्टार्थकत्वं न भजते । व्यज्यतेत्यत्र पृथिवीं न त्वन्यामिति परिसङ्ख्यालङ्कारः, तेन च नायकस्य नायिकापरित्यागेऽप्यनुकूलत्वातिशयः । तत्र च पृथिव्यन्यत्र स्त्रियां मिथुनीभावलक्षण एव भोगः परिसङ्ख्यातव्यः । स च परस्मैपदिना भुजिना नाभिधातुं शक्यत इति, अभिधामूलव्यञ्जनयापि न प्रतीयत इति तत्कर्मत्वमपि न व्यवच्छिद्यते । व्यञ्जनावृत्त्यनङ्गीकारेऽभिधयैव भुज्युपात्तस्य मैथुनरूपस्यार्थस्य कर्मत्वमेवकारादिलक्षणयाऽन्नूद्य-परिसङ्ख्यातव्यः ।

न च तद्बोधकसमभिव्याहाराभावे तद्घटितायोग एवकारेण लक्षितुं व्यवच्छेदो वा तस्य बोधयितुं शक्यते, इत्यात्मनेपदीभुजिधातुरुपात्तः । अन्यथा—"पद्मस्यैव प्रियो मित्रः कलिकाले समागतः" इत्यत्रापि पद्मेतरस्य मित्रं न प्रियमित्यर्थोऽभिधया व्यञ्जनया वाऽवगम्येत । तस्मात् "बुभोज पृथिवीपालः" इत्यभिहिते स्त्रियां निधुवनकर्मत्वव्यवच्छेदलाभो न स्यादिति बुभुज इत्युपात्तमिति विभाव्यते । तथा सत्यपि "रथो गच्छति" इत्याख्यातार्थस्याश्रयत्वलक्षकत्वे आख्यातमुख्यार्थप्रयत्नबाध इव धातोः प्रथमान्तनिराकांक्षत्वमपि बीजमवसेयम् ।

क्वचिच्च मानान्तरलभ्येऽर्थे सिद्धेः प्रतिबन्धिकायाः सत्त्वादनाकाङ्क्षत्वं लक्षणाबीजम् । यथा—"रामोऽस्मि सर्वं सहे" इत्यत्र रामोऽस्मीति वाक्यमनुयुज्यमानत्वादर्थान्तरसङ्क्रमितवाच्यकमिति । परपदं राज्यभ्रंशपितृमरणवनवासदारव्यसनादिदुःखानुभवितरि लाक्षणिकम् । अत एव रामोऽस्मीति वाक्यार्थः सर्वसहनत्वे हेतुरिति समभिव्याहारविशेषात्काव्यलिङ्गमवगम्यते ।

क्वचित्तु शब्दलभ्येऽर्थे निराकांक्षत्वं लक्षणाबीजम्, यथा—हे चैत्र !

त्वामस्मि ( वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय ) स्थितिमत्र विधेहि तत् ॥

इत्यत्र चैत्रपदसमभिव्याहृता सम्बुद्धिः प्रथमास्थितिं, विधेहि त्वमिति वाक्यार्थविषयकज्ञानसमवायित्वेनोद्देश्यत्वं चैत्रस्यावगमयतीति सिद्धार्थकतया "त्वामस्मि" इति वाक्यं न मुख्यार्थं बोधयति । वच् धातोर्हि शाब्दबोधानुकूलं वचनमर्थः । त्वच्छब्दसमभिव्याहृता द्वितीयात्र-समवेतत्वेनेष्यमाणत्वमभिधत्ते, न तु समवेतत्वमात्रम् । "राजानं हितमवोचं न चायमश्रौषीत्" इत्यादिप्रयोगदर्शनात् । तथा चात्र शब्दसिद्धार्थकतया प्रतिबद्धे स्वार्थे वचिरुपदेशतया परिणतं स्वार्थं लक्षयति ।

क्वचिदविनाभावविबोधसामग्रीविरहाच्छाब्दबोधप्रतिरोधो लक्षणाबीजम् । यथा—"गङ्गायां घोषमत्स्यादि" इत्यत्र प्रथममभिधया स्मारितेषु घोषमत्स्याधिकरणताप्रवाहेषु सत्यपि योग्यत्वे न गङ्गाधिकरणको मत्स्य इत्यन्वयबोधः, अयोग्यतया गङ्गापदार्थान्वितघोषबुद्धिसामग्रीवैधुर्यात् । "गङ्गायां घोषमत्स्यौ" इति द्वन्द्वस्थले द्वयी सामग्री—एका 'गङ्गायां मत्स्य' इति वाक्यार्थबुद्धिप्रयोजिका, तस्यां गङ्गायामितिपदोत्तरं निर्विभक्तिकघोषपदाव्यवहितोत्तरद्विवचनान्तं मत्स्यपदमिति समभिव्याहारज्ञानं गङ्गां सप्तमी मत्स्यपदैर्जनिता प्रवाहाधिकरणतामीनानामुपस्थितिश्चेत्यादीनि कारणानि निविशन्ते । द्वितीया गङ्गापदार्थान्वितघोषबुद्धिप्रयोजिका, तस्यां द्विवचनान्तमत्स्यपदाव्यवहितपूर्वनिर्विभक्तिकघोषपदत्वावच्छेदेन गङ्गायामितिपदसमभिव्याहृतस्य ज्ञानमयोग्यताज्ञानविरहः पदार्थानामुपस्थितिश्चेत्यादीनि कारणानि प्रविशन्ति ।

नन्वेवं "घोषमत्स्यौ" इति विग्रहोत्थसमासे "गङ्गायां घोषः" इति बुद्धिरुत्पद्यते इति चेन्न, मत्स्यपदार्थविषयत्वानिरूपितस्वार्थविषयताकशाब्दजनकं द्विवचनान्तमत्स्यपदाव्यवहितपूर्वघोषपदं गङ्गायामिति पदेन समभिव्याहृतमिति ज्ञानस्यैव तथाविधसामग्र्यामनुप्रवेशात् । अनयोश्च सामग्र्योरेकतरविरहेऽन्यतरफलं जनयतीति "गङ्गायां घोषमत्स्यौ" इति वाक्यं गङ्गापदजन्यतटोपस्थितेः पूर्वं गङ्गापूरे मत्स्यान्वयबुद्धिमपि न जनयितुमीष्टे । मिलितयोस्तयोः सामग्र्योरुभयसमूहालम्बनशाब्दबोधं प्रत्येव प्रयोजकत्वात् ।

"प्रासादं प्रति मध्याह्ने पुष्पवन्तौ विलोकय" इत्यत्र पुष्पवत्पदेन चन्द्रसूर्ययोरुपस्थितौ सत्यामपि सूर्यं विलोकयेति नान्वयबोधः । द्वितीयपदार्थस्य चन्द्रस्य मध्याह्ने बाधात्, "पुष्पवन्तौ विलोकय" इत्यादि समभिव्याहारघटितायाश्च सामग्र्याः सूर्यकमंकमिन्दुकमंकञ्च दर्शनमिति समूहालम्बनबुद्धिं प्रत्येव प्रयोजकत्वादिति, पुष्पवत्पदार्थयोरेकतरेण चन्द्रेण कामिनीमुखं लक्षयित्वा प्रासादोपलक्षितं मध्याह्ने कामिनीवदनमर्कं च पश्येत्यनुभाव्यते ।

क्वचित्तु लक्ष्यार्थे तात्पर्यग्रहेण मुख्यार्थबोधप्रतिबोधो लक्षणाबीजम्। यथा "व्रीहीनवहन्ति" इत्यत्र यवबोधपरमवहन्तिपदसमभिव्याहृतं व्रीहिपदमिति ग्रहे सति प्रतिबद्धे व्रीहित्वावच्छेदेनावहननकर्मत्वान्वयव्रीहिपदस्मृतेन व्रीहिणा नियोगसाधनपुरोडाशोपादानभूतावयवकद्रव्यमुपलक्ष्यते। यथा च "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र स्वबुद्धिपरमिदं वचनमिति तात्पर्यग्रहान्मुख्यार्थेन दध्युपघातकप्राणिनो लक्ष्यन्ते। यवे सारमेये च लक्ष्यतावच्छेदकरूपेण यवत्वश्वत्वादिना वा तात्पर्यग्रहो लक्षणामूलमित्यन्यदेतत्। अवहन्तिपदसमभिव्याहृतं द्वितीयान्तव्रीहिपदं नियोगसाधनद्रव्यविशेषतात्पर्यकमिति निर्णयस्य तथाविधनिर्णयवदन्यजन्यबुद्धित्वमेव प्रतिबध्यतावच्छेदकम्, तद्वत्ता तु–सामानाधिकरण्यस्वाव्यवहितोत्तरत्वसंसर्गाभ्यामिति तथाविधनिर्णयाभावघटितैव निरुक्तसमभिव्याहारज्ञानघटितव्रीहित्वावच्छेदेनावहननकर्मत्वमवगमयितुमीष्टे। निरुक्तं व्रीहिपदं व्रीहित्वविशिष्टबोधपरमिति निर्णयस्यापि स्वाव्यवहितोत्तरोत्पत्तिकस्वसमानाधिकरणबुद्धावेव जनकत्वमुपेयते। तथाविधव्रीहितात्पर्यनिर्णयघटिता यवतात्पर्यनिर्णयाभावघटिता पृथगेव व्रीह्यनुभवसामग्री, यद् बलाद् व्रीहित्वविशिष्टतात्पर्यकं यवादितात्पर्यकञ्च निरुक्तं व्रीहिपदमिति ग्रहसत्त्वे व्रीहेरप्यन्वयबुद्धिरुत्पद्यते। तत्र यवस्मरणमपेक्ष्य व्रीहिपदस्यान्वयबोधवारणाय यवतात्पर्यग्रहाभावाघटितायां व्रीह्यनुभवसामग्र्यां व्रीहितात्पर्यरीत्या क्लृप्तकार्यकारणभावो यवतात्पर्यग्रहो नियोगसाधनद्रव्यत्वेन यवस्य व्रीहितात्पर्याविगाहिव्रीह्यादिपदार्थस्मरणं तत्र वाहत्य व्रीहावक्यवघातकर्मत्वान्वयः। किन्तु व्रीहिणा नियोगकरणसाधनद्रव्यस्मरणानन्तरमेव व्रीहीन्नियोगसाधनद्रव्यं चावहन्तीति बोध उत्पद्यते।

यत्र च दैवाद्यवतात्पर्यग्रहाभावे व्रीहितात्पर्याविगाहिमुख्यपदार्थानां स्मरणं तत्र प्राग्विद्यमानोऽपि तात्पर्यग्रहः सामग्रीमध्ये न प्रवेश्यते, प्रयोजनविरहात्। कार्यस्य लक्ष्यतात्पर्यग्रहाभावविशिष्टमुख्यार्थस्मृत्यादिसामान्यसामग्र्यैव तदुपपादनात्, इति प्रणिधेयम्। तदर्थतात्पर्यकत्वं तु तदर्थप्रतिपत्तिसाधनताज्ञानाधीनप्रयत्नसाधनत्वं तदर्थप्रतिपत्त्युद्देश्यकप्रयत्नसाध्यत्वं वा। यदर्थप्रतिपत्तित्वावच्छिन्नाभावप्रयोजकीभूताभावप्रतियोगिज्ञानविषयत्वं वेत्यन्यदेतत्।

ननु यत्र गङ्गापदस्मरणमेव प्रथमं पूरस्मरणं सप्तमीगुणपदविषयकं ततस्तटस्य प्रवाहस्याधिकरणतया गुणस्यैकस्य स्मरणमाकांक्षाद्यवगाहितस्तटे गुण इत्यर्थेऽपि प्रसज्येतान्वयबोधः, मुख्यार्थबाधादेव शाब्दसामग्रीविघटकस्य तत्रानपेक्षणीयत्वात्, तटस्मरणस्य सम्पन्नत्वात्, इति चेत्, न। गङ्गाप्रवाहे गुण इति शाब्दबोधस्य स्वविशिष्टान्यबुद्धौ कार्यमसहभावेन प्रतिबन्धकतया तदभावस्य पूर्वक्षणावच्छेदेन कार्योत्पत्तिक्षणावच्छेदेन च तदात्मनि प्रत्यासन्नस्यापेक्षितत्वाद् गङ्गाप्रवाहे गुण इति शाब्दबोधोत्पत्तिसमये तटे गुण इति बुद्धेरनुत्पादसम्भवात्। गुणपदसमभिव्याहृतं गङ्गादिपदं तटतात्पर्यकमिति निश्चयस्यापि स्वविशिष्टबुद्धौ कारणतया तद्घटिताभिन्नैव सामग्री, यथा तटे पूरे च तात्पर्यग्रहात्तटे पूरे च गुण इत्यन्वयबोधः। एतेन गङ्गायां गुण इत्यन्वयबोधो यत्र दैवात्पदाविषयकस्ततस्तटाधिकरणतादीनां पदार्थानामुपस्थितिराकांक्षादिविषयिणी, तत्र तटे गुण इति शाब्दबोधोत्पत्तिरपि प्रयुक्ता, गङ्गाप्रवाहे गुण इति शाब्दबोधाभावघटितसामग्र्यभावात्। तटादिपदार्थोपस्थितेस्तटतात्पर्याविगाहित्वे तु तटतात्पर्यग्रहघटितया

सामग्र्या जायत एव तटान्वयबोधः। एवञ्च मुख्यार्थबाधादेर्मुख्यार्थान्वयबुद्धिप्रतिबन्धकद्वारा लक्ष्यार्थान्वयबुद्ध्युपयोगित्वमवसेयम्।

अत्रेदं विवेचनीयम्—गङ्गायां गुण इति शाब्दबोधस्य स्वध्वंसाधिकरणसमयध्वंसाधिकरणसमयवृत्तित्वस्वप्रागभावनिरूपितकालिकाधिकरणताकभिन्नत्वोभयसंसर्गेण तथाविधशाब्दवदन्यत्वविशिष्टजन्यबुद्धित्वं प्रतिबध्यतावच्छेदकध्वंसवृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपिताधिकरणसमयत्वावच्छिन्नावच्छेदकतानिरूपितध्वंसत्वावच्छिन्नावच्छेदकतानिरूपिताधिकरणसमयत्वावच्छिन्नप्रतियोगिताकान्योन्याभाववत्समयवृत्तित्वं प्रागभाववृत्तिर्या उभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपिता कालिकसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपिताधिकरणतानिष्ठावच्छेदकतानिरूपितप्रतियोगिताकान्योन्याभाववत्त्वं चेत्युभयसंसर्गावच्छिन्ना या शाब्दबुद्धित्वावच्छिन्नावच्छेदकता तन्निरूपकप्रतियोगिताकान्योन्याभावविशिष्टजन्यबुद्धित्वं कथितशाब्दबोधाभावजन्यतावच्छेदकमिति निष्कर्षः।

एतेन ध्वंसाधिकरणसमयध्वंससामान्यानधिकरणं न कोऽपि कालस्तत्तच्छाब्दबोधध्वंसाधिकरणसमयध्वंसाधिकरणत्वादीनामभावोऽनुगमयितुं शक्यत इत्यादि समाहितं विशेषाभावानामुक्तक्रमेणानुगमसम्भवात्।

एवं च सिद्धकारणभावस्य गङ्गायां गुण इति शाब्दाभावस्य गङ्गापदजनितगङ्गास्मरणजनिततटस्मृतिघटितायास्तटे गुण इति शब्दसामग्र्यां कार्यक्षणावच्छेदेन तदव्यवहितप्राक्क्षणावच्छेदेन च कार्याधिकरणे सत्त्वमभिनिविशते। येन सत्यपि तटप्रेरणे युगपत्करणं युगपत्क्रमेण वा 'पूरे गुण' इति 'तीरे गुण' इति च शाब्दबोधयोरुत्पादं वारयन्ति, 'पूरे पूरे गुण' इति शाब्दबुद्धौ तु समानविषयकशाब्दबोधस्य पृथगेव प्रतिबन्धकत्वं, येन सत्यामपि पुष्कलायां सामग्र्यां न धारावाहिकान्यूनानतिरिक्तविषयकवाक्यार्थबोधक्रमः। अन्यथान्यत्र क्लृप्तकारणभावस्य लाक्षणिकपदप्रयोज्यशक्यार्थबुद्धिसामग्र्यां कार्यसहभावेन (करण)विषयक शाब्दसामग्र्यां च पूर्ववर्तितामात्रेण प्रवेश इत्येव युज्यते न तु शाब्दबुद्धौ, शाब्दबुद्धेः प्रतिबन्धकत्वान्तरमिति चेन्न, कार्यतावच्छेदकधर्मानवलीढकार्यप्रयोजकसामग्र्यां तत्कार्यतावच्छेदकधर्मावलीढं प्रति जनकस्यप्रवेशासम्भवात्। खलु पूरे गुण इति शाब्दाभावस्य जन्यतावच्छेदककथितशाब्दबोधविशिष्टजन्यबुद्धित्वस्वरूपो धर्मः 'पूरे गुण' इति शाब्दबुद्धिमप्याक्रमति। न च कारणताभेदाभावे तस्यैव कारणस्य क्वचित्कार्यसहभावेन क्वचिच्च पूर्ववर्तितामात्रेण सामग्र्यप्रवेशः सान्दष्टिक इति शाब्दबुद्धित्वाच्छिन्नं प्रति समानविषयकस्य शाब्दबोधस्य शाब्दबोधत्वेन निर्णयत्वेन वा प्रतिबन्धकत्वमवश्यमाश्रयणीयमिति दिक्।

ननु गङ्गापदादेस्तटादावभिधैवोचिता, अभिधया जनितपदार्थोपस्थितेरेव तत्तदर्थविषयकान्वयानुभवजनकत्वावधारणात्। न च गङ्गापदस्य स्वशक्यार्थमनु(र्थाननु)भावकत्वे सम्भूयान्वयबोधकत्वस्वरूपात्, गङ्गापदघोषपदयोराकाङ्क्षापि सुघटेति चेत्। उच्यते—

लक्षकस्याभिधा लक्षे ग्राहकाभावबाधिता।
पदोपात्तेन चार्थेन साकांक्षं स्यात् पदान्तरम्॥

गङ्गापदादेस्तटादौ तावदभिधा न केनापि प्रमाणेन व्यवहारकोषव्याकरणादिना ग्राह्यते। न गृहीतायामपि चाभिधायां शक्यसम्बन्धेनावगम्यते, तटादेरन्वयबोधस्यानुभविकत्वादनभि-

धेयगङ्गापदादेस्तटादिः क्वचिद् व्यवहारदर्शनात् तटादौ गङ्गादिपदशक्तिग्रहो भ्रम एवाग्रिमेण विशेषदर्शनेन बाध्यते। गङ्गादिपदसमभिव्याहृतघोषपदत्वावच्छेदेन प्रवाहस्मारितार्थान्वित-घोषपदार्थबुद्धचभावप्रयोजकाभावप्रतियोगित्वस्वरूपाकाङ्क्षा गृह्यमाणा गङ्गापदजन्यपूरस्मरणजन्य-तटस्मरणजन्यसहकारेण तटे घोष इत्यन्वयबोधं जनयति। भवतु वा गङ्गापदार्थान्वितघोष-पदार्थबुद्धिसमर्था "गङ्गायां घोष" इति समभिव्याहार इत्याकारा मुख्यार्थमादायाकाङ्क्षाबुद्धिरेव मुख्यार्थस्मरणतदयोग्यताज्ञानाभावादिसहकारेण मुख्यार्थान्वयबुद्धिं मुख्यार्थायोग्यताबुद्धयधीन-लक्ष्यार्थस्मरणादिसहकारेण लक्ष्यार्थान्वयबुद्धिं च जनयतीति, लक्ष्यार्थबोधौपयिका पृथगा-काङ्क्षेति पक्षः।

ननु गङ्गापदेन स्वशक्यप्रवाहसामीप्यलक्षणपरम्परया तटमेव स्मारितं तदन्वयबुद्धि-विषयो भवतु, किं स्मरणद्वयाङ्गीकारेणेति चेत्, उच्यते—

प्रायः प्रागगृहीतापि सम्बन्धपदलक्ष्ययोः।
पदेन शक्यं शक्येन लक्ष्यं स्मृत्वान्वयं विदुः॥

येन पुंसा पदस्य परम्परासम्बन्धो नावगतः किन्तु पदस्य शक्तिः प्रवाहे प्रवा-हस्य सामीप्ये तटे प्रागवगते, सोऽपि 'गङ्गायां घोषः' इति वाक्यात्तटे घोष इत्वन्वयं वेत्ति, तदनुरोधेन गङ्गापदस्मारितपूरजन्यतटस्मरणस्य तटानुभवं प्रत्यवश्यकल्प्यकारणाभावतया गङ्गापदपरम्परासंसर्गस्य तटस्मारकतया तथाविधतटस्मरणस्यानुभवजनकतायाश्च कल्पने प्रमाणाभावः।

ननु पदानां शक्यत्वस्य साक्षात्संसर्गस्येव शक्यसम्बन्धादिरूपायाः परम्पराया अपि स्मारकत्वमवर्णनीयमेव। तटपरम्परया गङ्गापदवदित्याकारकस्य संस्कारस्य ज्ञानस्य वा शुद्ध-तटस्मरणजनने गङ्गापदसहकारिताकल्पनमपि सकलानुभवानुरोधितया युज्यत एव। गङ्गा-पदज्ञानविशिष्टायां बुद्धौ गङ्गापदज्ञानस्य तटगङ्गापदसंसर्गावगाहिसंस्कारादेः स्वविशिष्टायां बुद्धौ जनकताकल्पनमपि। तथा च गङ्गापदपरम्परासंसर्गावगाहिज्ञानादिजन्यं तटस्मरणमेव लाघ-वानुभवजनकम्, न तु गङ्गापदशक्यत्वावगाहिज्ञानादिजन्यगङ्गापदार्थस्मरणेन गङ्गा-संबन्धि तटमिति ज्ञानादिना च जनितस्य तटस्मरणस्य शरीरगौरवादिति चेत्, न तटानुभवं प्रति गङ्गापदशक्या गङ्गेतिज्ञानादिजन्यस्य गङ्गापदस्मरणस्य तटस्मरणव्यापारिकायां जनकताया-मेव लाघवात्। व्यापारस्य तु गङ्गापदार्थसंसर्गावगाहिज्ञानादिजन्यतटस्मरणत्वेन तटस्मरणत्वे-नैव वा जनकत्वम्, गङ्गापदजन्यप्रवाहस्मरणजनिततटस्मरणत्वेन तु सामग्रयामनुप्रवेशः। तेन विरतेऽपि गङ्गापदजन्ये गङ्गास्मरणे तज्जनततटस्मरणाधीनस्तटानुभवो जायते। न जायते च सम्बन्धान्तरज्ञानाधीनं मानान्तरावगतप्रवाहजनिततटस्मरणेऽपीति दिक्।

चिन्तामणिकृतो लक्ष्यस्मरणे पदजन्मनि अनुभावकतामूचुर्न शक्यस्मरणोद्भवे। गङ्गापद-ज्ञानत्वावच्छिन्नप्रतियोगिताकाभावप्रयोज्याभावप्रतियोगितावच्छेदकतटस्मरणत्वावच्छिन्नस्य गङ्गा-पदज्ञानाव्यवहितोत्तरोत्पत्तिकतटस्मरणत्वेन तटानुभवे कारणत्वम्। तेन गङ्गापदतटयोरभिधया-भिधेयसम्बन्धेन वा जनितं स्मरणमुपगृह्यते, न तु गङ्गासाक्षात्कारादिप्रभवम्।

न च गङ्गापदेन दैशिकाधिकरणविधया स्मारितस्य तटस्यान्वयबोधानुप्रवेशोद्देश्यः। गङ्गापदवृत्तिप्रकारकतटस्मरणाव्यवहितोत्तरत्वस्यापि तटस्मरणे विशेषणत्वात्। यदि च

सत्यपि गङ्गापदवृत्तिमत्तटमिति संस्कारेण गङ्गापदवृत्तिमत्तटमिति भ्रमकाले गङ्गापदाधिकरण-देशतयोपस्थितस्यापि तटस्य नान्वयबोधः, तदा गङ्गापदवृत्तिप्रकारकतटगोचरनिर्णयजन्य-तटस्मरणत्वेनैव तटानुभवजनकत्वं वाच्यम् ।

तत्र गङ्गापदस्य गङ्गायां रूढेर्गङ्गायास्तटे सामीप्यस्य च खण्डश एव प्रागननुभवः, तत्र गङ्गापदसाक्षात्कारानन्तरं गङ्गापदशक्यगङ्गासमीपं तटमिति विशिष्टस्मरणासम्भवेऽपि खण्डस्मरणमूलिका मानसी विशिष्टबुद्धिरभ्युपेतव्या । तदधीना तटस्मृतिरेव तटान्वयबोधाङ्गं सांसर्गिकविषयतानिरूपितम् ।

न च तथापि शक्तिलक्षणोभयसाधारणस्य वृत्तित्वस्यैकस्याभावाद् गङ्गापदशक्यं तट-मिति भ्रमाद् गङ्गासंयुक्तं तटमिति प्रतीतेश्च जायमानयोस्तटस्मरणयोरेककल्पनकारणत्वानुप-पत्तिरिति वाच्यम्, गङ्गापदत्वावच्छिन्नप्रकारताभिधात्वावच्छिन्नसंसर्गतानिरूपितविशेष्यत्वा-निरूपकज्ञानानिरूपिता या तटत्वावच्छिन्नमुख्यविशेष्यता तन्निरूपकनिर्णयजन्यतटस्मरणत्वेनैव तटानुभवजनकत्वात् । अनेनैव च रूपेणाभिधया गङ्गापदवत्तटमिति गङ्गापदाभिधेयाभिन्नं तटमिति गङ्गापदाभिधेयं गङ्गासंयुक्तं तटमित्येवंविधनिखिलवृत्तिज्ञानजनिततटस्मरणानामु-पग्रहः । नोपगृह्यते च गङ्गापदाभिधेया गङ्गातटं पार्थिवमिति ज्ञानेन तटावच्छिन्नस्य गङ्गाभिधेया गङ्गेति बोधेन च जनिता तटस्मृतिः, पार्थिवत्वप्रकारतानिरूपिततटत्वावच्छिन्नविशेष्यताया-स्तथाविधविशेष्यतानिरूपकज्ञाननिरूपकत्वात्, अवच्छिन्नत्वविशेषणतापन्नतटविशेष्यताया मुख्य-त्वाभावाच्च ।

वस्तुतः पदप्रकारताभिधासंसर्गत्वानिरूपकज्ञानानिरूपितत्वमेव तटविशेष्यतायां प्रवेश-नीयम् । तेनाभिधागङ्गासामीप्यानां परस्परनिरूप्यनिरूपकभावापन्ना यत्र सांसर्गिकी विषयता तस्य स्वाभिधेयगङ्गासामीप्येन सम्बन्धो न गङ्गापदवत्तटमित्यस्य । यत्र गङ्गापदस्याभिधया संसर्गेण गङ्गायां तस्याः स्वसामीप्ये तटे वैशिष्ट्यमवगाहमानो विशिष्टवैशिष्ट्यबोधस्तस्य चोप-ग्रहः । यदि चाभिधातदधिकरणघटितसंसर्गेण पदप्रकारकतटविशेष्यको वृत्तिग्रह एव शाब्द-बोधाङ्गं न तु मध्येऽभिधेयादिपदार्थविशेषणकोऽपीत्युच्यते, तदा तटत्वावच्छिन्नविशेष्यतानि-रूपितगङ्गापदत्वावच्छिन्नप्रकारतानिरूपिताभिधानिष्ठसांसर्गिकविषयतानिरूपिताधिकरणविषय-ताकत्वेन वृत्तिग्रहोऽनुगमनीयः । स्वाभिधाप्रतियोगिताकाभावादिसंसर्गेण पदप्रकारकबुद्धि-वारणायाधिकरणविषयतापि प्रवेशिता ।

अभिधेयाऽभावादिश्च सम्बन्धो लक्षणैव । "गुणज्योत्स्ना कुहूर्जडे" इत्यत्र गुणपदस्य ज्योत्स्नासदृशगुणविरहिणि कुहूसदृशाभेदान्वयायोग्येऽभिधेयाभाव एव हि निरूढलक्षणास्वरूपः । प्रयुञ्जते च कवयः—

सौजन्याम्बुमरुस्थली सुचरितालेख्ये सुभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगे श्वपुच्छच्छटा ।
यैरेषा विदुषाऽऽशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥

अथ गङ्गापदस्य दैशिकाधिकरणं तटो गङ्गापदाभिधेयो न वेति ज्ञानेन स्मारितस्य तटस्यान्वयबुद्धिप्रसङ्गः । गङ्गापदाभिधेयत्वाभावप्रकारतानिरूपिततटत्वावच्छिन्नविशेष्यता-शून्यत्वमपि वृत्तिग्रहे प्रवेशनीयम् इति चेत्, न, तटो नाभिधेयः किन्त्वभिधेयसम्बन्धी बुद्धय-संग्रहप्रसङ्गात् ।

नन्वधिकरणविषयतानिरूपिताभिधासंसर्गतानिरूपितगङ्गापदत्वावच्छिन्नप्रकारतानिरूपित-तटत्वावच्छिन्नविशेष्यतायां गङ्गापदत्वावच्छिन्नप्रकारत्वनिरूपितत्वं प्रवेश्य वृत्तिसंशया व्या-वर्त्तनीयाः । एकस्या एव संशयविशेष्यताया विरुद्धकोटिद्वयप्रकारतानिरूपकत्वाभ्युपगमात् । वृत्तिगोचरस्मरणजन्यतटस्मरणत्वेनैवानुभावकत्वं वा वक्तव्यमिति चेत्, मैवम्, अभिधासंसर्गेण पदाभाववति पदप्रकारकज्ञानमित्यप्रामाण्यज्ञानाभावस्य वृत्तिग्रहं प्रत्यविशेषणत्वे तथाविधाप्रामा-ण्यज्ञानास्कन्दितया तटमभिधया पदवत् इति वृत्तिग्रहादप्यनुभावकतटस्मरणप्रसंगात् । विशेषणत्वे तटं गङ्गापदस्याभिधेयं लक्ष्यं चेतिवृत्तिसमूहालम्बनात्कथिताप्रामाण्यग्रहास्कन्दितादुत्पन्नस्य तटस्मरणस्याननुभावकत्वप्रसङ्गात्, इत्युच्यते । भवतु लक्ष्यार्थस्मरणस्य पृथगेव कारणत्वं तथापि पदप्रकारकलक्षणासंसर्गकलक्ष्यविशेष्यकनिर्णयजन्यत्वेनैव जनकत्वं न तु शक्तिज्ञानजन्यशक्य-स्मरणजन्यत्वे सति शक्यलक्ष्यसंसर्गज्ञानजन्यत्वेन जन्यतात्रयप्रवेशे गौरवात् ।

अथ तटस्मरणत्वेनैव तटानुभवं प्रति जनकत्वम्, गङ्गापदजन्यप्रवाहस्मृतिस्तु गङ्गानुभव-साधारणं गङ्गापदजन्यगङ्गास्मरणविशिष्टत्वमेव जन्यतावच्छेदकम्, तटानुभवसामग्र्यां तु गङ्गा-पदशक्तिग्रहजनितगङ्गास्मरणजन्यतटस्मरणत्वेनानुप्रवेशस्तस्येति चेत्, न, अकारणतावच्छेदक-रूपेण कारणस्य सामग्र्यामनुप्रवेशसम्भवात् । न तु तटोपस्थितित्वेन तटानुभवजनकता गङ्गापदजन्यगङ्गास्मरणस्य तु सव्यापारिका कारणता कार्याव्यवहितपूर्वलक्षणवृत्तिव्यापाराव्यव-हितपूर्वलक्षणावच्छेदेन कार्याधिकरणे विद्यमानस्याभावस्य प्रतियोगितानवच्छेदको यो धर्मः स व्यापारककारणतेत्यस्यार्थः । तटे घोष इत्यनुभवजनकसामग्र्यां तु कार्याव्यवहितपूर्वलक्षणा-वच्छेदेन यत् किञ्चित्तटघोषानुभवव्यक्तिवृत्तिसमवायसंसर्गावच्छिन्नकार्यतानिरूपककारणक-तटान्तर्गततटादिपदार्थोपस्थित्यव्यवहितपूर्वलक्षणावच्छेदेन गङ्गापदशक्तिग्रहजनितप्रवाहस्मरण-वत्ता कार्याधिकरणलक्षणावच्छेदेन प्रवाहे घोष इत्यादि शाब्दबोधाभावादिस्वरूपकार्यसहभूत-वत्ता चात्मनि निविशते ।

तथा च यत् क्षणावच्छेदेन मुख्यार्थशाब्दबोधाभावादिस्वरूपकार्यसहभूतकारणाधि-करणत्वेन यदव्यवहितपूर्वक्षणावच्छेदेन तटाधिकरणता घोषादिपदार्थस्मरणाकाङ्क्षाज्ञानायोग्यता-निर्णयाभावादिसत्त्वे च सति यत्क्षणाव्यवहितपूर्ववर्तितटोपस्थित्याऽव्यवहितपूर्वक्षणावच्छेदेन सप्तमीपदघोषादिपदशक्तिग्रहगङ्गापदजन्यगङ्गास्मरणानामधिकरणं च यत्स्यात्, तत्क्षणावच्छेदेन तटे घोष इत्यादि शाब्दबोधोत्पत्तेरधिकरणमित्युदाहरणशरीरं पर्यवस्यति । शक्यपदार्थोपस्थिते-रपि हि न शक्तिग्रहजन्यत्वेन कारणत्वमपि तु शक्तिग्रहस्य सव्यापारिका कारणतैवेति चेत्, एवमपि तटोपस्थित्यव्यवहितपूर्वक्षणावच्छेदेन गङ्गापदप्रकारकलक्षणासंसर्गकतटविशेष्यकग्रहा-धिकरणतैव प्रवेशयितुमुचिता, तटग्रहस्यैव तटोपस्थितिव्यापारिका कारणता तटशक्तिग्रहजनित-स्याशक्यार्थस्मरणस्य शक्तिग्रहजन्यशक्यस्मरणत्वेन कारणताया अपूर्वायाः कल्पनप्रसङ्गात्, लक्षणासंसर्गकपदप्रकारकग्रहस्य तु पदविशिष्टवैशिष्ट्यबुद्धचादौ क्लृप्तत्यैव कारणतया निर्वाहात् ।

यदि तु तटस्मरणव्यापारिकेयं लक्षणाग्रहस्य पृथगेव कारणता । अत्र हि स्वाव्यवहितोत्तरवर्तितटे तटस्मरणाव्यवहितोत्तरक्षणोत्पत्तिकबुद्धित्वं कार्यतावच्छेदकमन्यादृशमेव च निरुक्तनियतपूर्ववर्तित्वम्, अन्यथा विनश्यदवस्थवृत्तिग्रहजनितपदार्थोपस्थितिप्रयोज्यस्य शाब्दबोधस्यासङ्ग्रहप्रसङ्गात्, इत्यपूर्वकरणताकल्पनमुभयत्रापि सुसमानमिति विभाव्यते । तथापि लक्षणासंसर्गेण पदप्रकारकलक्ष्यविशेष्यकज्ञानत्वापेक्षया गौरवादभिधासंसर्गेण पदप्रकारकशक्यविशेष्यकज्ञानजन्यशक्यस्मरणत्वेन कारणतायां गौरवमेव महद् बाधकम् । किं चागृहीतगोपदशक्तिकस्यापि 'गामुच्चारय' इत्यादिवाक्याद् गोशब्दविषयको वाक्यार्थबोधो लक्षणया जायते । न च तत्र गोपदशक्तिजन्या गवोपस्थितिः सम्भवति । किन्तु स्वाभिधेयाभिधायकसंसर्गेण पदप्रकारिका पदविशेष्यिका बुद्धिरनायत्या पदस्मारिका वाच्येत्यन्यत्रापि तथा ।

यदि च शब्दस्वरूपं मानान्तरावगतमेव शाब्दबोधविषयो यदि वा स्वरूपेऽपि शब्दानामभिधा पाणिसङ्केतो वा वृत्तिरन्यथा चावगतदशमाहेत्यादिनिरर्थकशब्दानामानुपूर्वीविशेषप्रकारेण वाक्यार्थबुद्धयनुप्रवेशो न स्यात् ।

यत्तु जकारादिप्रत्येकवर्णशक्तिघटिता तत्र लक्षणा समाहारद्वन्द्वाच्च द्वितीयाविभक्तिरिति मतम्, तच्चिन्त्यम्, खण्डशकारान्तद्वन्द्वात्पुंस्येकवचनानुपपत्तिरित्युच्यते । तथापि दशरथादिपदेन दशरथपदशक्यविशेषमगृहीत्वापि दशरथपदवाच्यत्वावच्छिन्नानुभवस्य वाक्यत्वानुपपत्तिः । एतेन शक्यविशेषान्तरभावेनैव लक्षणाज्ञानं कारणमिति प्राचीनमतनिगर्वोऽप्यपास्तः ।

ननु दशरथविषयकदशरथपदजन्यबुद्धित्वावच्छिन्नोद्देश्यताकसङ्केतस्वरूपाया दशरथपदशक्तेर्दशरथत्वाज्ञाने ज्ञानसम्भवात् तदघटिता लक्षणा कथं गृह्येतेति चेत्, न दशरथपदजन्यबुद्धित्वावच्छिन्नाया सङ्केतोद्देश्यताया निरूपकेन विषयतात्वावच्छिन्नावच्छेदकत्वेन निरूपितस्यावच्छेदकत्वस्याभिधापदार्थत्वात् । तस्याभिधावच्छेदकतायाः सदपि दशरथत्वावच्छिन्नत्वमगृहीत्वापि तथाविधावच्छेदकतावच्छेदकतादात्म्यं दशरथपदबोध्यत्वावच्छेदेन बोद्धुं शक्यमित्यवधेयम् ।

ननु गङ्गापदशक्यसम्बन्धितटमिति गङ्गापदस्य गङ्गासम्बन्धितटमिति च निर्णयात्मकमेव ज्ञानं तटानुमावकस्मरणजनकम्, तयोश्च गङ्गापदत्वावच्छिन्नप्रकारतानिरूपितशक्यविषयतानिरूपितसम्बन्धविषयतानिरूपिततटविशेष्यकत्वमात्रेण जनकत्वं शक्यसम्बन्धेन गङ्गापदविशिष्टगङ्गापदशक्यसम्बन्धाभाववत्त्वात्तटमिति सम्बन्धादपि तटापत्तेः ।

न च तटत्वावच्छेदेन गङ्गापदवाच्यशक्यसम्बन्धत्वावच्छिन्नशब्दसामान्याभावानवगाहित्वे न तथात्वम्, तटगङ्गापदशक्यगङ्गासम्बन्धित्ववति ज्ञानादपि तदापत्तेरिति तटत्वावच्छेदेन गङ्गापदवाच्यसम्बन्धत्वावच्छिन्नाभावानवगाहित्वे सति गङ्गापदत्वावच्छिन्नप्रकारतानिरूपिताभिधासंसर्गतानिरूपितशक्यादिसंसर्गतानिरूपितसंयोगसंसर्गतानिरूपिततटत्वावच्छिन्नविशेष्यताज्ञानत्वेन कारणत्वं वक्तव्यम् । तथा च स्वशक्यगङ्गासंयोगेन गङ्गापदप्रकारकनिर्णयस्य पृथगेव कारणत्वमावश्यकमिति । मैवम् । लक्षणासंसर्गत्वावच्छिन्नगङ्गापदप्रकारताभिन्नप्रकारत्वानिरूपकतटत्वावच्छिन्नविशेष्यताकत्वेन संशयवारणं सम्भवति, संशये विरोधिकोटिद्वयप्रकारताद्वयनिरूपिताया एकस्या एव विशेष्यतायाः स्वीकारात् । अन्यथा लक्षणासंसर्गस्य लक्षणासंसर्गेण गङ्गापदस्य चाव्याप्यवृत्तित्वग्रहणकालोत्पन्नस्य समुच्चयस्य संशयत्वप्रसङ्गदुर्वारतापत्तेः ।

वस्तुतोऽभिधेयतावच्छेदकघटितलक्षणाग्रहजनितपदार्थोपस्थितेः पृथगेव कारणत्वं तद्घटितसामग्र्यां रूढिज्ञानानुप्रवेशः शक्यतावच्छेदकमिश्रितलक्षणाग्रहजन्या पदार्थस्मृतिस्तटलक्षकं गङ्गापदं तटे गङ्गाधर्मबोधकमित्यादिप्रयोजनवत्ताप्रतिसन्धानमपेक्ष्य तटमनुभावयति नान्यथेति व्यक्तमुपरिष्टात् ।

नन्वेवमनादिप्रयोगपरम्परास्वरूपाया रूढेः "कलिङ्गो रिङ्गति" इत्यादाववश्यवेद्यत्वे रूढ्या संसर्गेण पदप्रकारिकाया बुद्धेरेव लक्ष्यानुभावकपदार्थस्मरणजनकत्वमस्तु, किं लक्षणया ? अत एव पङ्कजपदात् तत्प्रयोगपरम्परयैवोपस्थितेः । पद्मे योगार्थान्वयसम्भवात् तत्र शक्तिरपि न कल्पनीयेति चेत्, न, गवादिपदेऽप्येवं शक्तिकल्पनापत्तेः । तथा सत्यनादिप्रयोगपरम्परयैव सर्वत्र पदार्थोपस्थित्या वाक्यार्थबुद्ध्युपपत्तौ निषादस्थपति-अधिकरणविरोधापत्तेः । कर्मधारयपक्षे निषादस्य षष्ठीतत्पुरुषपक्षे निषादसम्बन्धिनश्च प्रयोगपरम्परायामविशेषेण षष्ठीसमासस्य जघन्यत्वानुपपत्तेः । तस्मान्मुख्यार्थबोधोपजीवकमुख्यार्थान्वयबोधाभावसहभावनियततया प्रयोजनवल्लक्षणास्थले क्लृप्ताया लक्षणाजन्योपस्थितेरेव निरूढलक्षणास्थलेऽपि कल्पनमुचितम् । मुख्यार्थान्वयबोधसामग्रीयत्तया "निषादस्थपतिं याजयेत्" इत्यत्र निषादसम्बन्धिनः स्थपतिमित्यन्वयबोधो नोत्पद्यत इत्येत्र षष्ठीसमासस्य जघन्यत्वमित्यवधेयम् ।

एवं च पदस्य सा वृत्तिरेव लक्षणाशक्तिमिव लाक्षणिकपदमनुभावकमेवेति, चिन्तामणिकारचरणपङ्कजच्छायावाही पन्थाः ।

सा चेयं लक्षणा संक्षेपतो द्विधा निरूढा प्रयोजनवती चेति । तत्र च—

निरूढिस्तत्पदाधीनतदर्थप्रतिपत्तिषु ।
सर्वास्वेव सजातीयबुद्धिध्वंसविशिष्टता ॥

कलिङ्गपदप्रयोज्यपुरुषबुद्धिख्यापककलिङ्गपदाधीनपुरुषबुद्धिध्वंसवैशिष्ट्यविशिष्टा पुरुषबुद्धिरेव निरूढिस्तेन संसर्गेण "कलिङ्गपदविशिष्टः पुरुषः" इति ज्ञानेन "कलिङ्गपदशक्यजनपदवासी पुरुषः" इति लक्षणाज्ञानेन च जनिता पुरुषोपस्थितिः पुरुषान्वयबोधाङ्गम् तेन "कलिङ्गो रिङ्गति" इति वाक्यश्रवणानन्तरं कलिङ्गो रिङ्गतीत्याख्यातानां स्मरणम् । अथ रिङ्गतेः शक्यं कर्माख्यातस्य कृतिः कलिङ्गपदस्य निरूढा लक्षणा, पुरुषकलिङ्ग इति पदेन सहसाकांक्षं रिङ्गतिपदमिति स्मरणम् । अथ पुरुषकर्मकृतीनां स्मरणम्, पुरुषो रिङ्गणकृतिमानित्यन्वयबोध इति प्रक्रिया । तत्र निरूढिजन्यपदार्थोपस्थितिमात्रस्यापेक्षणीयत्वे मुख्यार्थशाब्दबोधविरोधिनां मुख्यार्थबोधादीनामन्वयव्यतिरेकानुविधानं[1] न घटते । लक्षणाजन्योपस्थितिघटितशाब्दबोधसामग्र्यग्मेव मुख्यार्थशाब्दबोधसामग्र्यादेरभावस्य घटकत्वात् । अतो लक्षणाजन्योपस्थितिरप्यत्र निविशते ।

भवतु वा निरूढेर्ज्ञानं साक्षादेव शाब्दबोधजनकं न तु पदार्थोपस्थापकतया : अत एव पदार्थोपस्थितिसमकालिकेन निरूढिज्ञानेनापि शाब्दबोधः । एतेन प्रयोजनवत्ताप्रतिसन्धानघटितसामग्रीतो निरूढिज्ञानजनितपदार्थोपस्थितिसामग्र्याः पृथक्त्वावश्यकत्वेन तत्र पृथगेव शाब्दसामग्र्याद्यभावप्रवेशसम्भवे किमत्र लक्षणाज्ञानजनितया पदार्थोपस्थित्या[2], इत्येकासरणिः ।

---

१. अन्वयव्यतिरेकानुविधायित्वे न घटेते । मूलस्थः पाठः

२. ० स्थित्येत्यपास्तमित्येका० मूलस्थः पाठः

अनादिप्रयोगपरम्परास्वरूपाया रूढेर्ज्ञानं तस्मिन्नर्थे तस्य पदस्य वृत्तिमत्तायां साधुत्वस्य च कल्पनायामेवोपयुज्यते न तु पदार्थस्मरणे वाक्यार्थबोधे वानादिप्रयोगस्य शक्तिभ्रममूलकस्य वृत्तिव्यभिचारित्वादसाधुत्वाच्चानादितत्प्रयोगविषयताया एव तद्वृत्तिव्याप्यत्वादिना प्रयोगस्यैव च तदर्थं साधुत्वात् । सादिप्रयोगस्तु शक्तिभ्रममूलको लक्षणामूलकोऽपि रूढपद ( रूपं व ? )-मित्यादौ वस्तुव्यञ्जनायामक्षमो न भवत्येव साधुः । साधुस्तु "गङ्गायां घोषः" इत्यादौ तटे पावनत्वध्वनिजननक्षम इति प्रयोजनवत्ताप्रतिसन्धानमपि साधुत्वकल्पनायामेवोपयुक्तं न तु पदार्थस्मरणे वाक्यार्थबोधे । व्याहन्यते च "अर्जुन सात्यके भवतां मांसैर्बलिं करोमि" इत्यत्र दुर्वादस्य कुपितोक्तेरिति वैयञ्जनिकबोधसमर्थस्यैव साधुबलत्वं तथाभूतस्येति निरूढिः प्रयोजनवत्ता-वृत्तौ साधुतायाश्चोपयुज्यते । स चानादिप्रयोगपरम्परास्वरूपनिरूढिः कोषव्याकरणादिना ग्राह्यते—

मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।
गुणे शुक्लादयः पुंसि गुणिलिंगास्तु तद्वति ।। इति ।

कोषे गुणगुणिनोर्गृहीतायां पदस्य रूढौ तया कल्पिता वृत्तिर्गुणेऽभिधास्वरूपैव पर्यवस्यत्यनेनेत्यलभ्यत्वात्, गुणिनि तु लक्षणैव कल्पनालाघवात् । वेलापदस्य समुद्रसम-वायिनि जले समुद्रसंयोगिनि स्वावयवे तुल्यशरीरे शक्तिरेव, न हि वेलापदादेरवयवायविसाधा-रणासाधारणसमुद्रत्वजात्या बोधः, परमाणोरवगमप्रसङ्गात् । "कर्त्तृकरणयोस्तृतीया" इति सूत्रेण कृतिमति सव्यापारकं कारणे च कृतिकरणयोर्वा तृतीया निरूढैव, तथाकल्प्यमानवृत्तिः कृतावभिधैवाभिधेयशरीरलाघवात्करणे लक्षणैव प्रतिपाद्यशरीरगौरवादित्यपरः पन्थाः । अत्र प्रकाशकारः कर्मणि कुशलपदं दर्भग्रहणकर्त्तुर्वियोगेन प्रवृत्तं विवेकत्वसाधर्म्याल्लक्षयतीति निरूढलक्षणामुदाजहार । अत्र वदन्ति —

पङ्कजादिष्वतिव्याप्तिर्मण्डपादिष्वसम्भवात् ।
तैलादिष्वपि चाव्याप्तेर्नैव योगः प्रवर्तकः ।। इति ।

येषां पदानामवयवानुपस्थितेऽपि पदार्थेऽनादिसुयोगपरम्परा तस्य तत्र शक्तिरेव नत्ववयवार्थोपस्थितिमात्रेणान्वयानुभावकत्वम्, पङ्कजपदात् कुमुदस्य मण्डपपदाच्च मण्डपानकर्त्तु-रन्वयबोधप्रसंगात् । तैलपदेन सार्षपस्नेहानवगमप्रसंगात् । अतो मण्डपवत्कुशलशब्दस्य दक्षे रूढिरेव प्रत्युत कुशलग्रहणकर्त्तर्येव रूढिपूर्विकालक्षणा सम्भवति । कुशलशब्दस्य चाशक्यत्वेना-लक्षकत्वात् । तदेकदेशस्य शक्तस्यापि लक्षकत्वे विनिगमनाविरहाच्च । अन्यथा घटपदान्तर्गत-टकारादेरेव लक्षकत्वसम्भवेन नानावर्णघटितशब्दानां वैरं विलीयेत, सिद्धायां च मण्डपपदादेर्गृह-विशेषादौ रूढौ तयात्मापहारात् "मण्डपं भोजय" इत्यादौ ।

इदमत्राकूतम्-मण्डपदं पातुरप्रत्ययजन्ये पदार्थोपस्थितिसहकारेण मण्डपमित्यानुपूर्वीज्ञानस्य मण्डपानकर्त्तृकर्म्मभावबोधोपधानमण्डपपदं गृहविशेषे रूढमिति बुद्ध्यभावोऽपि निविशते । रूढिज्ञानजनितगृहोपस्थितिसहकारेण गृहकर्मताबोधसामग्र्यां तु मण्डपदार्थान्वितद्वितीयार्थबोधसमर्थं मण्डपमिति पदमित्याकाङ्क्षाज्ञानमेवोपयुज्यते । तथाविधाकांक्षाज्ञानसमवहिता मण्डपं भोजयेत्यादौ लक्षणाजन्योपस्थितिरेव तत्र कर्मतां बोधयति न तु मण्डपदार्थान्वितद्वितीयापदार्थबोधसमर्थं मण्डपमिति पदमिति ज्ञानेन सहकृता मण्डादिप्रत्येकपदार्थो पस्थितिः । तस्माद् रूढिज्ञानाभाव-घटितसामग्र्याः सुप्रविष्टत्वादिति ।

मणिकृतस्तु मण्डपं पश्येत्यादौ यत्र रूढ्यर्थस्य योगार्थान्वययोग्यत्वं तत्र योगार्थोपस्थिति-सामग्रीं ( ग्र्यां ) रूढिज्ञानाभावः प्रविशत्येव । न हि समभिव्याहृतपदान्तरनिरूपितामाकांक्षां स्पृशन्ती[1] प्रकृतिप्रत्यययोराकांक्षाबुद्धिः शाब्दबोधाय प्रभवति मण्डपं स्पृहयतीत्यत्रापि मण्डपकर्मतावुद्धिप्रसंगात् । यत्र तु मण्डपं भोजयेत्यानुपूर्वीघटितान्वयाकांक्षाया: ज्ञानेन समवहिता मण्डादि-प्रत्येकपदार्थोपस्थितिगर्भा सामग्री तत्र रूढिज्ञानस्य तज्जनित[2]रूढ्यर्थोपस्थितेर्वा भावो न निविशते, मानाभावात् अतएव "वर्षासु रथकार आदधीत" इत्यत्र—

वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नाष्वेष विधिः स्मृतः ।।
माहिष्येण करिण्यां तु रथकारः प्रजायते ।

इति वाक्येन जातिविशेषवति रथकारपदस्य रूढौ गृहीतायां रथकर्मकरणाप्रयोगात् न प्रतीयते रूढ्यर्थान्वयसम्भवस्थलीययोगार्थोपस्थितिघटितसामग्र्यां रूढिज्ञानाभावादेः कार्यसहभूत-रूढ्यर्थविषयकानुभवाभावस्यानुप्रवेशात् । अत एव रथकारस्याधानसिद्धे तदुपपादिका विद्यापि कल्प्यते । यत्र चायोगार्थे तात्पर्यं प्रकरणादिनाऽवधार्यते तत्र रूढ्यर्थानुभवस्य तेनैव तात्पर्य-ग्रहणप्रतिबन्धाद् रूढ्यर्थानुभवाभावस्य कार्यसहभावेन सत्त्वात्तथाविधतात्पर्यघटितायां सामग्र्यां रूढिग्रहाभावादेरनुप्रवेशाच्च योगोपस्थित्या एवार्थोऽनुभूयते । यथा—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षावाजिभ्यो वाजिनम्" इति श्रुतौ पयःसंस्काराङ्गतापनदधिसंयोगादिनाऽऽमिक्षा जलविभक्तो दुग्धावयवो जन्यते । स एव पयः संस्कारस्योद्देश्यः तस्य विनियोगाकांक्षायामामिक्षा-वैश्वदेवीत्युत्पत्तिवाक्यमुपतिष्ठते । तत्र विश्वेदेवपदस्य स्वरूपेण देवताविशेषे च वृत्तिः । तद्धि-तस्य चतुर्थ्यन्तत्वं क्रतुकर्म चार्थः, तत्र चतुर्थ्यन्तत्वं विश्वेदेवपदस्वरूपे, तच्च कारणकार्यभावेन क्रतौ तत्र च गणदेवतानामुद्देश्यत्वेनान्वयः । तेन चतुर्थ्यन्तविश्वेदेवपदकरणकस्य गणदेवता-विशेषोद्देश्यकस्य क्रतोः कर्मामिक्षा इत्यन्वयबोधः । एवञ्चामिक्षादैवतत्वेनोपस्थितेषु विश्वेदेवेषु वाजिपदतात्पर्यग्रहेण वाजस्यान्नस्य स्वामिभ्य इत्येवं संयोगार्थ एव वाजिभ्य इति पदेनोपस्थाप्यते । यथा च "अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वेदेवैः" इत्यत्र विश्वे-देवपदेन गणदेवतारूढेनापि प्रकरणोपादानगृहीततात्पर्यकाः सर्वदेवता एवोपस्थाप्यन्ते न तु गणदेवताः, विश्वपदमिव विश्वदेवपदमपि गणदेवताविशेषे रूढम् । "आदित्यविश्ववसवः" इत्यभिधानकोषो वैकदेशोत्कीर्त्तनपरः, भीमसेने भीमवदिति वदन्ति ।

एवञ्च देशवाचिनः कलिङ्गशब्दस्य तद्वासिनि पुरुषे, इन्द्रियार्थस्य चक्षुःशब्दस्य तदधि-ष्ठान गोलके, क्षत्रियद्वयवाचिनो नित्यद्विवचनान्तस्य गोदशब्दस्य तन्निवासे ग्रामे, पञ्चालविदेहा-दिपदानां नित्यबहुवचनान्तानां तन्निवासजनपदे च निरूढलक्षणा । "कलिङ्गः साहसिकः पौण्डरीकं चक्षुर्गोदो ग्रामः पाञ्चाला विदेहा वा जनपदाः" इत्यादि निर्विचिकित्समुदाहरणीयम् ।

अथ निरूढिपदार्थं निरूप्य प्रयोजनपदार्थो निरूप्यते । प्रयोजनं तु वाक्यार्थप्रतिपत्तिसमर्थया तत्पदाधीनया बुद्ध्या लक्ष्यस्य विषयीक्रियालक्षणाधीनलक्ष्यपदार्थविषयकबुद्धौ व्यङ्ग्यार्थप्रति-

---

१. संप्रविशन्ती, क. २. तज्ज्ञान, क.

पत्तिसामर्थ्यमेव प्रयोजनं प्रयोगसाधुतासम्पादकम् । वैयञ्जनिकबुद्धित्वस्वरूपमानसत्वव्याप्य-जात्यवच्छिन्ने लक्षणाजन्यबुद्धिरन्वयव्यतिरेकाभ्यां कारणमिति व्यक्तमुपरिष्टात् ।

निरूढलक्षणात्वं प्रयोजनवल्लक्षणात्वं परस्परविरुद्धौ धर्मौ, इति भ्रमः । कुण्डपायिना-मयननामनि क्रतौ प्रक्रान्ते "अग्निहोत्रं जुहोति" इति श्रूयमाणस्याग्निहोत्रपदस्य नित्यहोमे रूढस्याग्नये होत्रमिति केवलयोगार्थे निरूढलक्षणाया नित्याग्निहोत्रधर्माणामतिदेशकालदर्शनात् । लक्ष्यार्थेऽवगते लक्षकस्मारितानां व्यञ्जनया वैशिष्ट्यावगम एवेत्यतिदेशपदार्थः ।

नन्वितिकर्त्तव्यताबोधकवाक्याध्याहारेण तदेकवाक्यतापन्नप्रधानविधिनान्वयबोधान्तरज-ननम्, एवं हि सति अतिदेशप्राप्तानामवघातादीनां कृष्णले वैतुष्यव्यापारबाधाद् बाधः । "सौर्यं चरुंनिर्वपेत्" इति विहितायामाग्नेययागविकृतौ सौर्येऽपी प्रकृतिवद् विकृतिरिति न्याये-नातिदेशप्राप्तस्य "अग्नये त्वा जुष्टं प्रोक्षामि" इति मन्त्रस्य देवतास्मरणरूपव्यापारबाधेन सूर्या-येत्यूहश्च न सिद्ध्येत । श्रुतिप्राप्ते दृष्टोपकारालाभेऽदृष्टोपकारकल्पनाया एवोचितत्वात् । एतद-नुरोधेनैव मीमांसका रूढस्य योगरूढस्य वा पदस्य केवलयोगार्थे रूढिपूर्विकां लक्षणामातिष्ठन्ते । योगमात्रेण तदवगमे ह्यतिदेशकत्वं न स्यात्, न स्याच्च रूढ्यर्थान्वियानुपपत्त्यादेरन्वयव्यतिरेका-नुविधानम् । "बृहस्पतिर्विश्वदेवैः" इति "वाजिभ्यो वाजिनम्" इत्यादावपि निरूढलक्षणयैव योगार्थावगम इति न प्रयोजनवत्तापेक्ष्यते । निरूढलक्षणयैव तत्प्रयोगस्य साधुत्वोपपत्तेः । निरूढापि या सादृश्यहेतुका गौणी वृत्तिः सैव प्रयोजनमपेक्ष्यत इत्यग्निहोत्रपदमितिकर्त्तव्यतातिदेशकमित्यु-पपद्यते । दृश्यते च लोकेऽपि निरूढलक्षणा प्रयोजनवतीति । तथाहि—

तव प्रसादात्कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणे—
र्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥

इत्यत्र कुसुमायुधपिनाकपाणिशब्दावुत्तमपुरुषादस्मच्छब्दहरशब्दोपपत्तौ रूढयर्थौ परिहृत्य कुसुमाभिन्नायुधवति पाणिधृतपिनाकवति निरूढलक्षणया प्रवर्त्तमानौ सारायुधमपि हरमसारायुधोऽहं जयेयमिति विभावनालङ्कारं व्यञ्जयतः । अनयोः पदयोर्योगेन प्रवर्त्तमानत्वेऽपि "अनेकमन्यपदार्थे" इत्यनुशासनानुशिष्टा द्वयोः पदयोरेकस्य पदस्य वा वाक्यस्य वा निरूढैव लक्षणा, इति व्यक्तमुपरिष्टात् ।

अत एव "मुखेन्दुमस्याः पश्यामि" इत्यादाविन्दुपदस्येन्दुसदृशे निरूढलक्षणायाः "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनुशासनग्राहितया मुखेऽलङ्कारास्वाद्यनुगुणव्यङ्ग्यमुपस्थाप्यते । "प्रतीयमानेन विना न वैचित्र्यमलङ्कारः" इति काव्यप्रकाशकारस्मरणात् । "मुखेन्दुः प्रसन्नः" इत्यादाविन्दुपदस्य मयूरव्यंसकादिसमासानुशासनसिद्धया इन्दुगुणयोगिनिरूढलक्षणया मुखस्येन्दु-ताद्रूप्यस्वरूपं रूपकमभिव्यज्यत इति दिक् ।

यत्तु "व्यङ्ग्येन रहिता रूढौ" इति काव्यप्रकाशकारवचनं तत्र रहितेऽर्थेऽनन्तरमपिकारः प्रक्षेप्तव्यो नत्वेवकारः । अत्रेदं बोध्यम्—एकैव राजपदे स्वस्वामिभावसम्बन्धनिबन्धना राज-सम्बन्धिनि लक्षणा, राजपुरुष इति समभिव्याहारज्ञानघटितसामग्री प्रविष्टा प्रयोजनं विनैव

साधुः । राजा पुरुष इत्यत्र तु पुरुषस्यालङ्घनीयशासनत्वं व्यञ्जयत्येव । तथा मुखमिन्दुराह्लादयतीतिवत् "मुखेन्दुराह्लादयति" इत्यादौ "अग्निहोत्रं जुहोति," "सिंहो माणवकः", "यजमानः प्रस्तरः" इत्यादौ चानादिप्रयोगवशान्निरूढापि गौणी लक्षणा प्रयोजनवत्तामपेक्ष्यत इति यथानुभवमूहनीयम् ।

सा चेयं लक्षणा द्विधापि प्रत्येकं द्विविधा । उपादानलक्षणा, लक्षणलक्षणाचेति । तत्र—

मुख्यार्थापरिहारेण लक्ष्यार्थमपि बोधयन् ।
शक्यशब्दार्थसम्बन्धः स्यादुपादानलक्षणा ॥

मुख्यार्थविषयस्यापदार्थस्मरणस्य शाब्दबोधस्य जनिका लक्षणोपादानलक्षणा, स्मरणगर्ते मुख्यार्थविषयताप्रयोजिकेति यावत् । तेन "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र काकपदस्य मुख्यार्थवृत्तिदध्युपघातकत्वमेव लक्षणा । सा च काकवृत्तिरपीति तिर्यक्त्वेन दध्युपघातकत्वेन वा श्वानमिव काकमपि स्मारयितुमीष्टे । "नीलो घटः, कुन्ताः प्रविशन्ति" इत्यादौ न गुणावच्छेदेन कुन्तावच्छेदेन च गृह्यमाणो नीलकुन्तयोः सम्बन्धः प्रकारतया नीलकुन्तौ स्मारयितुमर्हतीति तदुपग्रहः । गौणी तु न सम्भवत्येवोपादानलक्षणा गोवाहीकोभयाभिप्रायेण प्रयुक्ते "गाव आनीयन्ताम्" इति वाक्ये गोपदेन शक्त्या गावो वाहीकास्तु गौ एवोपस्थाप्यन्ते । "गङ्गायां घोषमत्स्यौ" इत्यादाविव युगपद्वृत्त्या प्रसरः । स्मरणगतगोविषयत्वन्तु न सादृश्यप्रयोजकं गवावृत्तित्वात्, नापि गौर्लक्षणाप्रवृत्तिनिमित्तं तस्य लक्ष्यत्वात् । जडत्वेन वाहीके गृहीतायां लक्षणायां तेन प्रकारेण वाहीकस्मरणाद् गौरपि वाक्यार्थबुद्धौ विषयतामापद्यते । वृत्त्या पदार्थस्मरणस्य तदनुभवस्य च समानप्रकारकत्वेनैव कार्यकारणभावादिति मतेऽपि गौणीवृत्तेरुपादानत्वं सम्भवति गोस्मरणानुपयोगित्वात् ।

यदि तु गोवृत्तिधर्मवत्त्वादिना गोवाहीकोभयत्वास्मरणे सादृश्यं लक्षणोपयुज्यते तदा गौण्यपि सम्भवत्युपादानलक्षणेति ध्येयम् ।

यदि तु "लम्बकर्णमानय" इत्यादौ उपादानलक्षणा "चित्रगुमानय" इत्यत्र न तथेति विवेकः प्रामाणिकस्तदा लक्ष्यान्वितपदार्थान्तरान्वितमुख्यार्थबोधिका लक्षणोपादानलक्षणेति लक्षणीयम् । भवति हि "लम्बकर्णमानय" इत्यादौ कर्णादेरानयनान्वयो न तु चित्रगुमानयेत्यादौ । "श्वेतं पश्य" इत्यादौ उपादानं "श्वेतो धावति" इत्यादौ तन्मते लक्षणलक्षणेति ध्येयम् ।

यत्तु "काकेभ्यो दधि गोपाय" इत्यादावपि "गाव एते समानीयन्ताम्" इत्यादाविव भक्तिशक्तिभ्यामेव श्वकाकयोरन्वयः । "नीलो घटः" इत्यादौ समवायिनि लक्षणलक्षणा तदेकदेशसमवाये शक्यगुणस्यान्वयः । "कुन्ताः प्रविशन्ति" इत्यादौ संयोगिनि लक्षणा संयोगे कुन्तस्यान्वयः । "त्वामस्मि वच्मि" इत्यत्र वचेर्हि तद्बुद्धौ लक्षणा, तस्यां जनकतया मुख्यार्थे वचनेऽन्वयः । "छत्रिणो यान्ति" इत्यत्र छत्रपदस्य सार्थत्वे लक्षणा तत्र छत्रं सामानाधिकरण्येनान्वेति छत्रसमानाधिकरणसार्थत्वाधिकरणमिति न प्रत्याय्यते इति नास्त्येवोपादानलक्षणाया विविक्तौ विषय इति मतं तच्च धात्वर्थनामार्थयोः धात्वर्थयोः प्रातिपदिकार्थयोश्च भेदेनान्वयबुद्धिविरोधाभावे नीलादिपदान्नीलसमवायित्वादिनो गुणा भासन्ते न तु नीलगुणेन प्रकारेणेत्यभ्युपगमे च सम्भवति नान्यथेति दिक् ।

या शब्दवृत्तिर्मुख्यार्थग्रहणं प्रत्यसाम्प्रतम् ।
द्विधा शुद्धा च गौणी चेत्यसौ लक्षणलक्षणा ॥

यद्धर्मावच्छिन्ने यत्पदस्य लक्षणा मुख्यार्थस्मरणं प्रत्यसमर्था तद्धर्मिणि तत्पदलक्षणा लक्षणलक्षणेत्युच्यते । स एव हि गङ्गापदार्थसम्बन्धः शुद्धतटत्वावच्छेदेन लक्षणलक्षणेत्युच्यते । गङ्गातटत्वावच्छेदेन तूपादानलक्षणा । न हि गङ्गापदं तटत्वेनैव (ज)लं स्मारयतीति नियमः, नापि निरूढायामिव प्रयोजनवत्यामपि लक्षणायां प्रतिनियतं प्रवृत्तिनिमित्तमित्यभ्युपेतुं शक्यते । तटत्वावच्छेदेन भूतलत्वावच्छेदेन वा वृत्तिग्रहे तद्धर्मप्रकारकाणां स्मरणानां शाब्दबोधाङ्गत्वात्, इत्यालोककृतः । तत्र निरुपादानलक्षणा "श्वेतो धावति" इत्यत्र श्वेतपदस्य गुणिनि "राजपुरुषः" इत्यत्र राजपदस्य राजसम्बन्धिनि "लम्बकर्णमानय" इत्यादौ लम्बकर्णपदयोर्लम्बाभिन्नकर्णसम्बन्धिनि "तैलानि हेमन्ते सुखानि" इत्यत्र तैलपदस्य तिलस्नेहरूढस्य सस्यप्रभवस्नेहसामान्ये तिलपदस्य स्नेहवति सस्ये, "मुखेन्दुरसौ तव" इत्यत्रेन्दुपदस्य चन्द्रसदृशे चोदाहरणीया । प्रयोजनवती तु "कुन्ताः प्रविशन्ति" "त्वामस्मि वच्मि" इत्यादौ । गौणी तूपादानलक्षणा सम्भवत्येवेति शुद्धानिरूढोपादानलक्षणा । शुद्धाप्रयोजनवत्युपादानलक्षणेति द्विधैव लक्षणलक्षणा ।

लक्षणा तु शुद्धा रूढौ लक्षणलक्षणा, शुद्धाप्रयोजनलक्षणलक्षणा, गौणी रूढौ लक्षणलक्षणा, गौणी प्रयोजने लक्षणलक्षणा चेति चतुर्धा । तत्र या "पौण्डरीकं चक्षुः" "कोमला त्वग्" इत्यादौ त्वगादिपदस्येन्द्रियवाचिनः तत्परिहारेण चर्मणि गोलके च । द्वितीया तु "गङ्गायां गोकुलम्" इत्यादौ गङ्गादिपदस्य प्रवाहवाचिनस्तत्परिहारेण शुद्धतटे । तृतीया पुनः "उपसमिद्भिश्चरित्वा मासमग्निहोत्रं जुहोति" इत्यत्राग्निहोत्रपदस्य कौण्डुपायिनामयनवैदिकप्रयोगस्यानादितया निरूढत्वात् "मुखेन्दुराह्लादयति" इत्यत्रेन्दुपदस्य प्रसादादिगुणवति "मयूरव्यंसकादयश्च" इत्यनुशासनसिद्धाया लक्षणलक्षणाया निरूढत्वावश्यकत्वात् । गौणत्वाभिगमे तु शक्यधर्मग्राहिकयातिदेशकत्वानुपपत्तेः । न हि शुद्धा निरूढलक्षणा क्वचिदतिदेशिका दृष्टा । न चातिदेशादन्यदवाचकं वैदिकपदप्रयोजनम् । यदाह महिमभट्टः—"अतिदेशप्रकारोपममर्थान्तरशब्दाभिनिवेशो नाम" इति । तुरीया तु "गौर्वाहीकः" इत्यत्र वाहीकपदस्य जात्यादिगुणवति "मुखमिन्दुः" इत्यत्रेन्दुपदस्य प्रसादादिगुणवति चेत्येवमुदाहरणीयाः ।

अनुप्रकाशकृतो गौणी लक्षणा द्विविधा । सारोपा साध्यवसाना चेति । लक्षकपदप्रवृत्तिनिमित्तविरोधिधर्मावच्छिन्नबोधकपदसमानाधिकरणपदस्य लक्षणा सारोपा । यथा "गौर्वाहीक" इति । तथाविधपदासमानाधिकरणपदलक्षणा यथा "गामुत्सारय"इति । एवं सादृश्यहेतुका गौणी लक्षणा द्विविधा सादृश्यान्यकार्यकारणभावादिसम्बन्धलक्षणा सारोपा साध्यवसाना चेति द्विविधा । "नेत्रानन्दचन्द्रं पश्य नेत्रानन्दं पश्य च" इति सादृश्यं कार्यकारणभावादिसम्बन्धभिन्नसामीप्यादिसम्बन्धहेतुका तु लक्षणा नियमतः साध्यवसानिकैव । न हि "कुन्ताः पुरुषाः प्रविशन्ति" "गङ्गायां तटे घोष" इति प्रयुज्यते । यदि तु "मन्त्राः कुन्ताः प्रविशन्ति, प्ररूढकुशाङ्करायां गङ्गायां घोषः" इत्यादौ धावनसंयोगहेतुकापि लक्षणा विरुद्धार्थकपदसमानाधिकरणपदस्य दृश्यते । "कुन्ताः पुरुषाः" "गङ्गायां तट" इति प्रयोगस्तु पुरुषतटत्वविशिष्टकुन्तगङ्गापदाभ्यां उपात्तत्वात्पुनरुक्तिवशादेव निरस्तः । उक्तार्थानामप्रयोग इति न्यायादतः संयोगादिकार्यकारण-

भावादिहेतुकलक्षणाया: पृथक्परिगणनमनुचितम् । संसर्गभेदेन लक्षणाभेदेन गणनानन्त्यप्रसङ्गादित्युच्यते ।

तदेवमालोचनीयम्—जातिमल्लक्षकपदस्य लक्षणामेवोपादानां लक्षणमिति द्विप्रकारिका "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र काकपदेन तिर्यक्त्वेन दध्युपघातका: श्वकाकादयो लक्ष्यन्ते । "कुन्ता: प्रविशन्ति" इत्यादौ कुन्तपदं पुरुषत्वेनैव वा पुरुषा:, "गङ्गायां घोष:" इत्यादौ गङ्गापदादिना तटत्वजात्या गङ्गासम्बन्धि तटमुपस्थाप्यते इति सादृश्यहेतुका लक्षणा, तेन कतिचिज्जातिमादाय प्रवर्त्तन्ते । किन्तु गुणादिकमेवेति नोपादानलक्षणयोर्गौणत्वसम्भव: । यदि च हूणे यवनोऽयमिति प्रयोगो यवनसादृश्येन हूणत्वजात्यवच्छेदेन प्रवर्त्तते, अत एव यवनत्वजातिधर्मस्यामेध्यस्य हूणत्वजातावेव ध्वननमिहोपपद्यते, न तु यवनजाताविति प्रामाणिकम्, तथाप्यनार्यजातित्वादिना विशिष्टमेव हूणत्वम् । तत्र यवनपदलक्षणाप्रवृत्तिनिमित्तं न त्वनवच्छिन्नजात्यनवच्छिन्नप्रवृत्तिनिमित्तम्, तेन लक्षितलक्षणात्वे प्रयोजकं लक्षणाजन्यजात्यवच्छिन्नबुद्धिगुणावच्छिन्नबुद्धेर्व्यञ्जनया विशेषात्पृथक्परिगणनाभिनिवेशो ध्वनिप्रस्थानमीमांसकानाम् ।

यदाहु:—धर्मिणि लक्ष्ये धर्माधर्मे लक्ष्ये च तदतिशय इति । धर्मिणि जातिमति लक्ष्ये धर्मामुख्यार्थेन ध्वननवृत्त्योपस्थिता आर्या: प्रतीयन्ते । धर्मे गुणादिमति लक्ष्ये च गुणाद्यतिशयो गुणादिगता विशेषा इति तदर्थ: । तत्राप्येवं सारार्थजात्यवच्छिन्नगोचरालक्षणीयं कथनार्थं ध्वनयित्वा विश्रमतीत्युपादानलक्षणामूलकमर्थान्तरसंक्रमितवाच्यकमत्यन्ततिरस्कृतवाच्यकध्वनिद्वयमुच्यते । सारोपसाध्यवसानलक्षणे तु गौणशुद्धाभेदेन द्विप्रकारिकेऽलङ्कारे चमत्कारमुत्थाप्येते । तथा हि—"मुखेन्दोर्मधुरं वच:" इत्यादाविन्दुपदस्येन्दुसादृश्यत्वावच्छिन्ने लक्षणा । पूर्वपदार्थप्रधानको मुखमिन्दुरित्येवमाकारको वाक्यार्थबोध: । अत एव तत्र मधुरवच:-सम्बन्धान्वयो निराबाध: । मुखे चन्द्रसादृश्यमेवोपमालङ्कार: । "मुखेन्दुराह्लादयति" इत्यत्र चन्द्रसहचरितप्रसादनादिगुणवति लक्षणा, न तु चन्द्रसदृशे । आह्लादयतीति साधारणधर्मपदोपात्तत्त्वेनोपमितसमासासम्भवात् । "उपमितं व्याघ्रादिभि: सामान्याप्रयोगे" इत्यनुशासनात् चन्द्रसहचरितगुणसम्बन्ध एव चन्द्रसारूप्यस्वरूपो रूपकालङ्कार:, इन्दुराह्लादयतीत्यत्रेन्दुपदेन चन्द्रगुणवल्लक्षणे त्वतिशयोक्ति: । घनश्याम इत्यादौ घनपदेन घनसदृशलक्षणादुपमैव "उपमानानि समान्यवचनै:" इति समास: । एवं सादृश्यभिन्ने ताच्छील्यस्वस्वामिभावादिना सम्बन्धे यत्र वाक्यसाधारणगुणाश्रयेण शुद्धा लक्षणा तत्राप्यतक्षणि "तक्षा ब्राह्मण:" इति "राजपुरुषे" राजा न रूढिरिति प्रयोगे रूपकमेवालङ्कार:, लक्ष्ये वाक्यताद्रूप्यप्रतीतेरविशेषात् । अत एव—"नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता" इत्यादौ चन्द्रानन्दसाधारणी । कमनीयत्वगुणयोगिनि प्रवर्त्तमानायां कार्यकारणभावहेतुकलक्षणायां रूपकमुदाहरन्ति रसविद्याविनोदनवीना: ।

प्राञ्चस्तु हेत्वलङ्कारोऽयं हेतुमता सह हेतोरभिधानमभेदतो हेतुरिति स्मरणे हेतुहेतुमद्वाचकयो: पदयोर्लक्ष्यार्थमादाय सामानाधिकरण्यहेतुरिति तदर्थावित्याहु: । तन्मते नेत्रानन्दजनकश्चन्द्र इति बोध: । आनन्दपदस्य तज्जनके लक्षणा । "घृतमायु:" इत्यत्रायु: प्राणधारणजनकधर्मस्तेन सह सहकारित्वलक्षणो घृतस्य सम्बन्ध:, आयुर्जन्यजीवितजनकं घृतमित्यन्वयबोध: । कार्ये जननीये प्रधानकारणसहकारिकारणान्तरमेव समाधिरलङ्कार: । "समाधि: सुकरं कार्यं

कारणान्तरयोगतः" इति तल्लक्षणादित्यलङ्कारचमत्कारसमर्था गौणशुद्धसाध्यवसाना लक्षणा, उपादानलक्षणलक्षणाभ्यां पृथगित्यक्षरतात्पर्यालोचनगम्यमर्थं समर्थयन्ते ।

गौणवृत्तेः प्रवृत्तौ तु निमित्ते स्यादनेकता ।
तस्य भेदादलङ्कारध्वनिभेदः प्रवर्त्तते ॥

"गौर्वाहीकः" इत्यत्र "गौर्हन्यत" इत्यत्र च गोपदस्य सारोपा साध्यवसाना च गौणीवृत्तिः, तस्याः सादृश्यं गोसाधर्म्यं जडत्वं गोसदृशवाहीकत्वं गोसधर्मवाहीकत्वं केवलवाहीकत्वं चेत्यादीनि प्रवृत्तिनिमित्तानीति । एवं "मुखमिन्दुरिन्दुः शोभत" इत्यादौ इन्द्वादिपदप्रवृत्तिनिमित्तानि स्वयमूहनीयानि । तत्रेन्दुसादृश्यमात्रेण प्रवर्त्तमानेन्दुपदगौणवृत्तिर्यथा "मुखेन्दौ तव पश्यामि लोलं लोचनयोर्द्वयम्" इति । अत्र हि विद्यमानदर्शनकर्मद्वयान्वययोग्यप्रधाने मुखे इन्दुसादृश्यं तेन वा सह समन्वेति, सादृश्यं तु भेदे सति साधर्म्यम् । अत एवात्रोपमालङ्कारः । इन्दुसाधर्म्येणेन्दुपदगौणी यथा—"आह्लादयति मुखेन्दुर्जगदिदमतुलद्युतिः सुतनोः" इत्यत्रेन्दुसधर्मिणीन्दुपदलक्ष्ये तादात्म्येन मुखादेरन्वयः । "मयूरव्यंसकादयश्च" इति सूत्रेण जातिवाचिनो मुखादिशब्दस्य पूर्वनिपातोऽनुशिष्यते । न चात्रेन्दुशब्दस्येन्दुसदृशे लक्षणयोपमितसमासः सम्भवति, आह्लादयतीतिसामान्यधर्मप्रयोगात् । अत एवात्र नोपमा किन्तु रूपकमेव ।

"उपमैव तिरोभूतभेदा रूपकमिष्यते" इति दण्डिना सादृश्यघटितभेदांशमोषेण साधर्म्यमात्रस्य रूपकत्वाभिधानात् । न च पूर्वपदार्थस्य मुखस्य प्राधान्यमतुलद्युतिसमानाधिकरणस्य मुखे बाधितत्वात् । द्युतेः प्रकाशकरूपविशेषस्य तेजोधर्मत्वात् ।

ननु द्युतिपदस्य सुखजनकसाक्षात्कारविषयरूपलाक्षणिकत्वात् तद्वता सह मुखस्यान्वयभेदो न बाधितः । न हि मुख्यार्थमादायैव योग्यता अपेक्ष्यते । तथा सति इन्दुपदलक्ष्ये मुखाभेदस्यानन्वयप्रसङ्गादिति चेदिदमत्राकूतम्—मुखेन्दुरिति समासस्य द्विविधा तावदाकांक्षाभेदेन मुखपदार्थान्वितेन्दुपदलक्ष्यार्थपरस्परान्वितेन्दुपदमुख्यार्थबोधसामर्थ्यमिन्दुपदमुख्यार्थान्वितेन्दुपदलक्ष्यार्थपरम्परान्वितमुखपदमुख्यार्थबुद्धियोग्यत्वम् । तथा हि—इन्दुपदस्य प्रसादादौ गुणेऽधिकरणे च खण्डश एवानुशासनग्राहिता लक्षणाकांक्षाबलेन तु प्रसादाद्बोधान्वयः । तेन मुखभेदेन प्रसादे स च साजात्यसंसर्गेणापरत्र प्रसादे स चाधिकरणे तदभेदेनेन्दौ विशेषणमिति मुखप्रसादसजातीयप्रसादवानिन्दुरिति बोधः, इन्द्वभेदेन प्रसादे साजात्येन द्वितीये प्रसादे स चाधिकरणे तदभेदेन मुखे विशेषणमिति रीत्या—पुनरिन्दुप्रसादसजातीयप्रसादवन्मुखमिति वाक्यार्थधीः । इयमेव 'जगदानन्दकन्दस्य मुखेन्दोर्मधुरं वचः" इत्यादौ स्वीकरणीया । न हि तत्रेन्दुर्विशेष्यतयाऽऽगन्तुमर्हति मधुरवचोऽन्वयायोग्यत्वात् । नापीन्दुसदृशे गौणमिन्दुपदं जगदानन्दजननरूपसाधारणधर्मप्रयोगेनोपमितसमाससम्भवात् । आह्लादयति मुखेन्दुर्जगदित्यत्रेन्दुपदसमानविभक्तिकातुलद्युतिपदत्वावच्छेदेन द्युतिपदलक्ष्यार्थघटिततन्मुख्यार्थघटितबहुव्रीह्यर्थद्वयाभेदेनेन्दुपदमुख्यार्थावगाहिन्यां बुद्धौ सामर्थ्यमेकम् । अपरञ्च द्युतिपदलक्ष्यार्थमात्रघटितबहुव्रीह्यर्था भन्नेन्दुपदलक्ष्यार्थविषयबुद्धिजननयोग्यत्वमिन्दुरतुलद्युतिनिगीर्णाध्यवसानलक्षणास्थले स्वीकरणीयम् । तयोः प्रथममेवेन्दुपदमुख्यार्थविशेष्यकबोधजननौपयिकी मुखातुलद्युतिपदयोराकांक्षा अतुलद्युतिपदं लक्ष्यार्थमुख्यार्थघटिताकांक्षाद्वययोग्यताद्वयज्ञानस्वरूपवद् गु(रु) तरसहकारिसमवधानवशादधिकरणात्पुन-

रिन्दुपदलक्ष्यार्थविशेष्यकवोधोपयिकी द्वितीया, एकैकाकांक्षायोग्यताज्ञानदौर्बल्यात् । तत्र सहकारितया मुखेन्दुपदस्येन्दुपदार्थविशेष्यकबोधजनकसामग्र्यनुप्रविष्टाकांक्षा सहकारितामापद्यते । तेन मुखप्रसादसजातीयप्रसादवानिन्दुः अतिशयितसुखजनकसाक्षात्कारविषयकरूपवान् अतुल प्रभाववांश्चेति बोधः । नत्विन्दुप्रसादजातीयप्रसादवन्मुखमतिशयितलावण्यवदितिधीरसत्यामतुलद्युतिपदमुख्यलक्ष्यार्थघटिताकांक्षायोग्यताज्ञानद्वयघटितायामेव सामग्र्यां मुखेन्दुपदाकांक्षाज्ञानस्य घटकतया मुखविशेष्यकबोधाजनकत्वात् । मुखातुलद्युतिपदमुख्यलक्ष्यार्थघटिताकांक्षायोग्यताज्ञानत्वं न विद्यते । घटितायामेव सामग्र्यां मुखेन्दुपदाकांक्षाज्ञानस्य । एवमेव—

यस्यानिशं दिविषदश्चरणारविन्द-
मुत्तंसयन्त्यमितभक्तिभवावनम्राः ॥

इत्यत्र उत्तंसयतेः सदयाकर्णत्वे लाक्षणिकत्वेऽपि तन्मुख्यार्थलक्ष्यार्थोभयान्वययोग्यारविन्दप्रधानक एव वाक्यार्थबोध इति रूपकमेव ।

पादाम्बुजं भवतु वो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥

इत्यत्र मञ्जीरान्वययोग्यचरणप्रधानकादम्बुज इव पाद इति बोधादुपमालङ्कारमीमांसा व्युपपद्यत इति मुखेन्दुरतुलद्युतिरित्यत्र मुखपदार्थस्य नातुलद्युतिपदार्थं प्रति विशेष्यता किन्तु, इन्दुपदार्थस्यैवेति । यदि तु मुखेन्दुना जितोऽतुलद्युतिरित्यादावाकांक्षाज्ञानद्वयसत्त्वाद् मुखेन्दुरतुलद्युतिरिति बोधवारणाय प्रथमान्तमुखेन्दुपदत्वावच्छेदेन प्रथमान्तातुलद्युतिपदलक्ष्यार्थान्वितस्वार्थबुद्धिसमर्थत्वस्वरूपाकांक्षाज्ञानं मुखपदमुख्यार्थेन्द्वादिपदलक्ष्यार्थोपस्थितिघटितामिन्नैव सामग्री वाच्या, सम्भवति चातुलद्युतिपदव्यतिरेकप्रयोज्यव्यतिरेकप्रतियोगितावच्छेदकविषयतानिरूपिततादात्म्यसंसर्गतानिरूपिता या मुखेन्दुव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगितावच्छेदिका विषयता तदवच्छिन्नप्रतियोगिताभावप्रयोजकव्यतिरेकप्रतियोगिमुखेन्दुरतुलद्युतिरिति वाक्यमित्याकारः । शक्यलक्ष्यार्थभेदेनाभिन्न एवाकांक्षाग्रहस्तत्तत्पदार्थोपस्थितियोग्यताज्ञानादिसहकारेण शक्यलक्ष्यार्थबुद्धिसहस्रजनक इति मुखपदार्थप्राधान्येऽपि न किञ्चिदिहापनीयत इति विभाव्यते, तथापि मुखेन्दुरतुलद्युतिरितिवाक्येन मुखाभिन्न इन्दुसधर्मातिशयितलावण्यवान् इन्दुसधर्माभिन्नं मुखं वा तथाविधमिति बोधकाल एवेन्दुः प्रकृष्टभास्वररूपवानित्याकारकोऽन्वयबोधः स्वीक्रियते । इन्दुपदेन मुख्यया वृत्त्योपस्थिते मुखातुलद्युतिपदार्थान्वयबाधकाभावादिदमेवेन्द्वादिपदार्थस्य प्राधान्यम् । यत्पदार्थान्तरमुख्यान्वयसहिष्णुत्वमिति ।

वस्तुतस्तु मुखेन्दुरतुलद्युतिरित्यत्र इन्दुसधर्मिणि प्रसन्नेन्दुशब्दस्य लक्षणा, तदर्थं प्रति मुखस्य विशेष्यत्वमेव । तस्मिन्निन्दुसधर्मिणि मुखेऽतिशयितलावण्यत्वानतुलद्युतिपदलक्ष्यार्थस्तादात्म्येनान्वेति । मुखाभिन्नस्येन्दुसधर्मणोऽभेदः पुनरिन्दुमुख्यपदार्थे पृथग्विशेषणीभूय भासते, तेन इन्दुसधर्मिणा मुखेनेन्दोरभेदस्तु इन्दुसधर्म्मत्वावच्छिन्नप्रतियोगिताकाभेदाभावस्वरूप एव संसर्गतया भासते । दृश्यते च जात्यभेदेऽपि सामानाधिकरण्यम् "तदेवेदमौषधम, सैवेयं गुर्जरी, ता एव चैत्रक्षपा" इत्यादौ ।

न च मुखेन्दुरित्यादौ मुख्ययोरेव मुखेन्दुपदयोरिन्दुसधर्मत्वाद्यवच्छिन्नभेदसंसर्गेणान्वये सम्भवति किमिन्द्वादिपदस्येन्दुसधर्मादौ लक्षणयेति वाच्यम्, भेदप्रतियोगितावच्छेदकधर्मोपस्थितिं

विनाऽनुगतधर्मावच्छिन्नभेदाभावस्य संसर्गतयाऽपि मानासम्भवे तदुपस्थापनाय गुणवृत्तेरावश्यकत्वात् । मुखान्योन्याभाववानिन्दुरित्ययोग्यताग्रहस्य तु मुखत्वावच्छिन्नप्रकारतानिरूपितस्यानवच्छिन्नावच्छेदकतासांसर्गिकविषयत्वस्य निरूपिका या तन्निरूपकत्वात्वच्छिन्नासांसर्गिकविषयता तन्निरूपकभेदत्वावच्छिन्नप्रतियोगिताकत्वसांसर्गिकविषयता तन्निरूपितेन्दुत्वावच्छिन्नविशेष्यताकबुद्धित्वमेव प्रतिबध्यतावच्छेदकं स्वरूपाभिन्नसांसर्गिकास्वेव बुद्धिषु वर्तते न जात्यभेदसांसर्गिकासु । स्वरूपाभेदो हि तत्तद्व्यक्तिस्वरूपविशेषिताभेदसामान्याभावः, स चाननुगतोऽपि स्ववृत्तिनिरवच्छिन्नावच्छेदकतानिरूपकभेदत्वावच्छिन्नप्रतियोगिताकाभावस्वरूपपरम्परासंसर्गत्वेनानुगमनीयः । तदीयसांसर्गिकविषयतानुगमप्रकारो दर्शित एव । सम्भवति चानवच्छिन्नस्य स्वरूपस्य स्वरूपभेदाभावप्रतियोगितावच्छेदकत्वम् । भवतु वा स्ववृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपकभेदत्वावच्छिन्नप्रतियोगिताकाभाव एव स्वरूपभेदः । जात्यभेदसंसर्गकबुद्धौ जात्यवच्छिन्नभेदवत्ताबुद्धिरेव विरोधिनी, तेन सैवेयं गुर्जरीत्यादौ तत्रेदन्ताविशिष्टगुर्जरीत्वावच्छिन्नप्रतियोगिताकभेदग्रहे सति नाभिमतो बोधः । अत एवेन्दुत्वमुखत्वावच्छेदेन प्रसन्नत्वादिधर्मवत्ताग्राहिका गौणी वृत्तिरतो युज्यते । एवमुपस्थितेन्दुसधर्मत्वादिना मुखभिन्नेन्दौ प्रकृष्टप्रभावोऽतुलद्युतिपदार्थः स्वरूपाभेदेनान्वेतीति । एवञ्च मयूरव्यंसकादिसमासमूलकगुणवृत्तौ उत्तरपदलक्ष्यार्थविशेषणकः पूर्वपदार्थः, तथाविधपूर्वपदार्थविशेषितश्चोत्तरपदार्थ उत्सर्गतो भासते ।

"प्रसन्नेन दृगन्तेन वीक्षते मदिरेक्षणा" इत्यादौ प्रसादरूपसाधारणधर्मसम्बन्धः पुनरन्ते दृशि चावगन्तुमिष्यते परन्तु वीक्षणकरणत्वान्वयानुरोधेन विपूर्वपदार्थस्यैव प्राधान्यमभ्युपेयते । तेन प्रसन्नान्तनिरूपितजात्यभेदवती अन्तसधर्मा प्रसन्ना दृग्वीक्षणकरणत्वान्वयार्थबोधः । एवं जडेन वाहीकगवेन दण्डमादाय गुप्ता धनिकस्य गाव इत्यत्र जडगवसधर्मिणा जडेन वाहीकेन गावो गुप्ता इति अन्वयबोधः ।

यदि तु "गौर्वाहीकः" इत्यादौ गोपदस्य जडत्वावच्छिन्ने इन्दुपदस्याह्लादकत्वादिगुणविशिष्टे लक्षणा तदा गोसधर्माणस्तत्र व्यञ्जनवृत्त्यैव भासन्ते इति व्यङ्ग्यमिह रूपकं न तु वाक्यार्थः । अत एवाग्निहोत्रपदस्याग्निहोत्रे पदमुख्यार्थपरिहारेण केवलयोगार्थपुरस्कारेण कौण्डपायिनामयनत्वावच्छेदेन वा गृहीता गौणी लक्षणा, तत्र मुख्यार्थधर्मातिदिशति ।

ननु साधारणगुणाश्रया तेन गौणी वृत्तिः पूर्ववता इति न युक्तम्—"वंशे मुक्तामणिर्बुधः" इत्यादौ लक्ष्यलक्षकसाधारणगुणस्य प्रागग्रहणेन तदवच्छेदेन मणिपदादिलक्षणया गृहीतमशक्यत्वादिति चेत्, वंशपदसंश्लिष्टत्वादेरेव तथाविधस्य गुणस्य सौलभ्यात्, तथा च मुक्तामणिपदलक्ष्यार्थे वंशपदार्थसंश्लिष्टे वंशपदोपात्तकुशलसम्बन्धः तन्मुख्यार्थे मणौ वंशपदोपात्तवेणुसम्बन्धो यौगपद्येनान्वेति । तथा च कुलसम्बन्धि वंशपदार्थसंश्लिष्टस्वरूपाभिन्नबुद्धौ वेणुसम्बन्धिमुक्तामणिजात्यभिन्न इति बोधः । जात्यभेदश्च तत्र वंशपदे बोध्यसम्बन्धित्वावच्छिन्नप्रतियोगिताकभेदाभावस्वरूपो भासते । एवं मुखमिन्दुरित्यादिवाक्येऽपि इन्दुपदस्य प्रसन्ने लक्षणा, प्रसन्नाभिन्ने मुखे चेन्दुपदमुख्यार्थस्य प्रसन्नत्वावच्छिन्नभेदाभावस्वरूपजात्यवच्छिन्नभेदसंसर्गेणान्वय इत्यादि स्वयमूहनीयम् । "एवं गौर्गां गोपयतीत्यादौ गोपदेन गोसदृशवाहीकत्वेन गोधर्मवाहीकत्वेन जडवाहीकत्वेन वा गोपदं वाहीकमवगमयति । वाहीकबोधकपदान्तराभावेन वाहीकत्वाविशेषितद्धर्मावच्छिन्न एव गोपदस्य साध्यवसानलक्षणास्वीकारात् । अत एव—

कचतस्त्रस्यति वदनं वदनात्कुचमण्डलं बिभेति ।
मध्याद्बिभेति नयनं नयनादधरः समुद्विजति ॥

इत्यत्र कचवदनपदादिना राहुत्वचन्द्रसादृश्यराहुत्वमुखसदृशचन्द्रादिनैव बोधो जन्यते । अत एव कचपदार्थस्यापादानत्वं वदनपदार्थस्य त्रासं प्रति कर्त्तृत्वञ्च साधु सम्प्रतिपद्यते । केचित्तु-साध्यवसानलक्षणयापि मुख्यार्थसधर्मत्वादिनैव लक्ष्यार्थः प्रतीयते न तु लक्ष्यव्यावर्त्तक-धर्मेण । यथा—

सुधाबद्धग्रासैरुपवनचकोरैरनुसृतः
किरञ्ज्योत्स्नामच्छां नवलवलिपाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥



अत्र शीतकिरणपदेन चन्द्रसधर्मत्वादिना मुखं प्रत्याय्यते, न तु मुखत्वेन कोऽयमिति प्रसिद्धसब्रह्मचारिव्यतिरेकबोधकेन सर्वनामसमुदायेन गलितहरिण इति सजातीयव्यतिरेकोप-पादकविशेषणेन च चन्द्रमुखोभयानुगामिधर्मवद्बोधकमिन्दुपदमित्यध्यवसीयते । न हि किमिदं मुखं गलितहरिणमिति वाक्यादपि तथाविधोऽर्थः प्रतीतिपथमवतीर्य चमत्करोतीति पूर्णो न्याया-विरोधिभक्तिविवेकः ।

रसिकैः काव्यमीमांसाप्रस्थाने यद्विभाव्यते ।
निर्मितस्तत्प्रपञ्चोऽयं मया रसमहार्णवः ॥

इति श्रीमहामहोपाध्यायगोकुलनाथकृते रसमहार्णवे भक्तिविवेकः समाप्तः ।
( संवत् १८१२ मिति फाल्गुनवदिचतुर्दशि वाररवि दिनेतादिः । )

● ● ●

# सुसङ्ग्राह्या दर्शनग्रन्थाः

| क्रमसं० | ग्रन्थनाम | | मूल्यम् |
|---|---|---|---|
| १. | न्यायसिद्धाञ्जनम् — | [ श्रीवेदान्तदेशिकाचार्यविरचितम् ] पुस्तकरत्नमिदं विदुषा सम्पादकेन स्वर्गीयनीलमेघाचार्येण हिन्दीभाषयानूद्य विविधैर्विमर्शप्रधानैः परिशिष्टैः, अथ च विषयसारभूतया भूमिकया सनाथीकृतम् — | २५–०० |
| २. | न्यायकुसुमाञ्जलिः — | [ उदयनाचार्यप्रणीतः ] गद्यपद्यात्मकन्यायकुसुमाञ्जलिरयं सर्वप्रथमं हिन्दीभाषयानूद्य प्रकाशितः। बुधा सम्पादकेन श्रीदुर्गाधरझाशर्मणा विमर्शात्मिकया भूमिकया शास्त्रानुमोदिन्या स्वोपज्ञया टिप्पण्या च समलङ्कृतः— | ५६–५० |
| ३. | न्यायकौस्तुभः — | [ श्रीमहादेवपुणतामकरविरचितः ] अनुमानखण्डात्मकस्यास्य द्वितीयभागस्य सम्पादनं न्यायधुरन्धरैः स्वर्गतैः श्रीदामोदरलालगोस्वामिभिर्निपुणं व्यधायि— | १०–९० |
| ४. | पदवाक्यरत्नाकरः — | [ श्रीगोकुलनाथोपाध्यायविरचितः ] न्यायशास्त्रस्य ग्रन्थरत्नमिदं श्रीयदुनाथमिश्रविनिर्मितया गूढार्थदीपिकाख्यया व्याख्यया, अथ च विदुषा सम्पादकेन श्रीनन्दिनाथमिश्रेण कृतया गवेषणाप्रधानभूमिकया विविधैः परिशिष्टैश्च समुद्भासितम्— | १५–०० |
| ५. | श्रीमद्भगवद्गीता — | [ भट्टभास्करभाष्यविभूषिता ] नवमाध्यायपर्यन्तेयं श्रीमद्भगवद्गीता तत्तत्पाठभेदनिर्णयैर्विविधैः परिशिष्टैश्चालङ्कृता शोभते— | ५–०० |
| ६. | तत्त्वचिन्तामणिः — | [ गङ्गेशोपाध्यायविरचितः ] मङ्गलवादान्तोऽयं ग्रन्थः श्रीमथुरानाथकृतमाथुरीव्याख्यया समुद्भासितः, अथ च विदुषा सम्पादकेन श्रीबदरीनाथशुक्लमहोदयेन विमर्शात्मिकया भूमिकया तथा अनेकैः परिशिष्टैः टिप्पण्यादिभिश्च सनाथितः— | १५–०० |
| ७. | विज्ञप्तिमात्रतासिद्धिप्रकरणद्वयम् — | [ आचार्यवसुबन्धुविरचितम् ] बौद्धदर्शनग्रन्थोऽयं विंशतिकापर्यन्तं स्वोपज्ञवृत्त्या, त्रिंशतिकापर्यन्तम् आचार्यस्थिरमतिविरचितभाष्यविभूषितः। अयं प्रथमतया गूढार्थदीपिकाख्यया हिन्दीव्याख्यया शास्त्रसारभूतया भूमिकया विविधैरानुसन्धानिकैः परिशिष्टैश्च समलङ्कृत्य प्रकाशितः— | ३९–२५ |

प्रकाशक :— निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

# सुसङ्ग्राह्याः तन्त्रशास्त्रीयाः पालिभाषामयाश्च ग्रन्थाः

| क्रमसं० | ग्रन्थनाम | | मूल्यम् |
|---|---|---|---|
| १. | नित्याषोडशिकार्णवः | ग्रन्थरत्नमिदम् ऋजुविमर्शिन्या, अर्थरत्नावल्या च व्याख्यया विभूष्य विदुषा सम्पादकेन बहुपरिश्रम्य, अनुसन्धाय च सम्पादितम्। ग्रन्थोऽयं म० म० गोपीनाथकविराजमहोदयानाम् आङ्ग्लभाषालिखितोपोद्घातेन समलङ्कृतः— | २५–०० |
| २. | तन्त्रसङ्ग्रहः | [प्रथमद्वितीयभागात्मकः] योगतन्त्रग्रन्थमालायाश्चतुर्थपुष्परूपमिदं ग्रन्थरत्नं निर्वाणतन्त्र-तोडलतन्त्र-कामधेनुतन्त्र-फेत्कारिणीतन्त्र-ज्ञानसङ्कलिनीतन्त्र सवृत्तिकदेवीकालोत्तरागमेति षड्ग्रन्थसङ्ग्रहरूपम्। विमर्शप्रधानया भूमिकया पाठान्तरेण च विभूषितोऽयं ग्रन्थो म० म० गोपीनाथकविराजमहोदयैः सम्पादितः— | प्रथमभागस्य—१६–००<br>द्वितीयभागस्य—१७–०० |
| ३. | महार्थमञ्जरी | [श्रीमहेश्वरानन्दप्रणीता] परिमलाख्यस्वोपज्ञव्याख्याविभूषितमिदं ग्रन्थरत्नं विदुषा सम्पादकेनानुसन्धानिकैः भूमिकाटिप्पणीपरिशिष्टादिभिः सनाथितम्— | १७–५० |
| ४. | त्रिपुरारहस्यम् | ज्ञानखण्डमात्रम्। तन्त्रशास्त्रसर्वस्वभूतमिदं ग्रन्थरत्नं श्रीनिवासभट्टविरचिततात्पर्यदीपिकाख्यया व्याख्यया परिमण्डितम् अथ च म० म० गोपीनाथकविराजमहोदयानां सम्पादनेन सनाथितम्— | ९–०० |
| ५. | लुप्तागमसङ्ग्रहः | [प्रथमो भागः] ग्रन्थोऽयं तत्तत्तन्त्रशास्त्रग्रन्थेषु तत्तद्ग्रन्थनाम्ना उद्धृतानां वचसां सङ्ग्रहरूपः, अथ च विदुषा सम्पादकेन म० म० गोपीनाथकविराजमहोदयेन विनिर्मितया टिप्पण्या, भूमिकया, तत्तत्परिशिष्टैश्च परिमण्डितः— | १२–०० |
| ६. | विसुद्धिमग्गो | [बुद्धघोषाचार्यविरचितः] भागत्रयात्मकोऽयं ग्रन्थो भदन्ताचारियधम्मपालत्थेरकृतपरमत्थमञ्जूषानाम — विसुद्धिमग्गमहाटीकासमेधितः, अथ च विदुषा सम्पादकेन गवेषणागर्भभूमिकया विभूषितः— | प्रथमभागस्य—३६–००<br>द्वितीयभागस्य—३२–००<br>तृतीयभागस्य—२७–०० |
| ७. | अभिधम्मत्थसंगहो | [अनिरुद्धाचार्यप्रणीतः] पालिभाषामयोऽयं ग्रन्थः अभिधर्मप्रकाशिन्या व्याख्यया हिन्दीभाषानुवादेन च समलङ्कृतः, अथ च पाठभेद-पादटिप्पणीभावार्थ-तुलनात्मकटिप्पणीसन्निवेशेन गवेषणामूलकभूमिकाऽनुक्रमण्यादिभिश्च सुसमेधितः— | प्रथमभागस्य—१५–००<br>द्वितीयभागस्य—२०–०० |

प्रकाशकः-निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२